**भावप्रकाशः**

चित्रा सृष्ट्यादिशास्त्राणां प्रवृत्तिरत ईदृशी ।
यथाऽद्यत्वे मनुष्याणां कर्मवैषम्यसंभवा ॥
अहोरात्रादिभेदेषु सुखदुःखव्यवस्थितिः ॥ २४ ॥
तथा ब्राह्मेष्वहस्स्विष्टा सुखदुःखव्यवस्थितिः ।

इत्यत्र सुखदुःखव्यवस्थायाः कर्मवैषम्यहेतुकत्वं कर्मानुगुणफलप्रदत्वस्य स्वातन्त्र्यानुकूलत्वं चोक्तम् । एतत्पर्यालोचनायां निग्रहानुग्रहयोरुभयोः कर्ममूलकत्वं सिध्यति सृष्ट्यादिसमुदायघटकत्वेनाविशेषात् । एवं लक्ष्मी-तन्त्रेऽपि ;—

अनियोज्यं ममैश्वर्यमिच्छैव मम कारणम् ३-१२ ।

शक्रः ;—

कथं सृजसि वै लोकान् सुखदुःखसमन्वितान् ।
असृष्टिर्हि वरं यद्वा सृष्टिरस्तु सुखात्मिका ॥ ३१ ॥

श्रीः ;—

अनाद्यविद्याविद्धानां जीवानां सदसन्मयम् ।
संचितं कर्म तत्प्रेक्ष्य मिश्रां सृष्टिं करोम्यहम् ॥ ३२ ॥

शक्रः ;—

क्षीरोदसंभवे ! देवि स्वाच्छन्द्यं ते कथं तथा ? ।
कर्म चेत् समवेक्ष्य त्वं विदधासि सुखासुखे ॥ ३३ ॥

श्रीः ;—

कुर्वन्त्या मम कार्याणि कर्म तत्करणं स्मृतम् ।
कर्तुश्च करणापेक्षा न स्वातन्त्र्यविघातिनी ॥ ३४ ॥
निरवद्या स्वतन्त्राहमनुयोगपदे स्थिता ।
विभज्य बहुधाऽऽत्मानं कर्तृकर्मक्रियादिना ॥

भावप्रकाशः

लीलायै कारणं नात्र मृग्यमेव स्थिरो भव ।

इत्यत्र ध्येयम् । अत्र 'इच्छैव' इत्यनेन श्रिय ऐश्वर्ये भगवदिच्छैव हेतुरिति मतं व्युदस्तम् । एवम्—

असृष्टिर्हि वरं यद्वा सृष्टिरस्तु सुखात्मिका

इति प्रश्नस्य लीलायै कारणं नात्र मृग्यमेव इति प्रतिवचनेन सर्वेषां जीवानां नित्यसूरिकोटावनिवेशनेन सृष्टौ दयाया न प्राधान्यं किं तु लीलाया इति सिद्धम् । एवमेभिर्वचनैः 'एष पन्था एतत्कर्म एतद्ब्रह्म' इति ऐतरेयोपनिषदुपक्रमश्रुतौ कर्म करणं ब्रह्म कर्तृ विवक्षितमिति निर्णीतम्— 'न तस्य कार्यं करणं च विद्यते' इति (श्वे) श्रुतौ कार्यशब्देन शरीरमुच्यते—करणम्—इन्द्रियम् इति (२-१-३१) इति व्यासार्यैरेवोक्तम् । अत्र परतन्त्रचेतनव्यापारसापेक्षत्वेऽपि सृष्टौ स्वातन्त्र्याविघातकथनेन ;—

जीवानां विविधाश्शक्र! संचिताः पुण्यसंचयाः ।
संचिन्वन्ति न ते जीवाः तुल्यकालं कथं च न ॥ ११-४३ ॥
कश्चिद्धि सुकृतोन्मेषात्कदाचित् पुरुषो नृषु ।
श्रीमता कमलाक्षेण जायमानो निरीक्ष्यते ॥
अन्यथा पुरुषोऽन्यश्चेत्येवं भिन्नाश्शुभाशयाः ।
भेदाधिकारिणां पुंसां तारतम्येन जायते ॥
विवेकः कस्यचिन्मन्दो भगवत्तत्त्ववेदने ।
मध्यमश्च परश्चाथो ततोऽन्यस्य तु जायते ।
ईशानुग्रहवैषम्यादेवं भेदे व्यवस्थिते ।
तत्तत्कार्यानुरोधेन परव्यूहादिभावना ।
क्रियते देवदेवेन शक्तिं मामधितिष्ठता ॥ ४७ ॥

इत्यत्र कर्मवैषम्यमूलकानुग्रहवैषम्यप्रतिपादनेन च ;—

भावप्रकाशः

व्याहतामिव पश्यामि चिच्छक्तेः क्लेशसंज्ञिताम् ।
मुह्यतीव मनो मेऽद्य तं मोहं भिन्धि पद्मजे! ॥ १२-१० ॥

श्रीः ;—

स्वतन्त्रा विश्वसिद्धानां हेतुश्चात्र महाद्भुता !
शक्तिर्नारायणस्याहं नित्या देवी सदोदिता ॥
तस्या मे पञ्च कर्माणि . . . .
तिरोभावस्तथा सृष्टिः स्थितिस्संहृतिरेव च ।
अनुग्रह इति प्रोक्तं मदीयं कर्मपञ्चकम् ॥

इत्युपक्रम्य तिरोभावादिचतुष्टयमभिधाय ;—

उद्यत्कारुण्यसंतानानिर्वापिततदागसा ।
मया जीवास्समीक्ष्यन्ते श्रिया दुःखविवर्जिताः ।
सोऽनुग्रह इतिप्रोक्तः शक्तिपातापराह्वयः ॥ १६-८ ॥
नासौ पुरुषकारेण नचाप्यन्येन हेतुना ।
केवलं स्वेच्छयैवाहं प्रेक्षे कं चित्कदाप्यहम् ॥

इत्यादिना मनोनैर्मल्यवेदान्तसात्वतज्ञानभक्तिक्लेशसंचयविधूननब्रह्मप्राप्ती-रभिधाय ;—

एषा तु पञ्चमी शक्तिर्मदीयाऽनुग्रहात्मिका ।
स्वाच्छन्द्यमेव मे हेतुस्तिरोभावादिकर्मणि ॥ १३-१५ ॥

इत्युपसंहारे उद्यत्कारुण्येत्यादेर्विशेषणस्य उद्यत्सन्तानशब्दयोर्वा अवैयर्थ्याय उद्यच्छब्दे चेतनव्यापारहेतुकोदयस्य सन्तानशब्दे सहजकारुण्यवंशरूपत्वस्य च विवक्षितत्वेन स्वाच्छन्द्यवत् कारुण्यस्य जीवकर्मसापेक्षत्वसिद्ध्या साधनान्तरानुष्ठापनेच्छया विशेषोपकारसंपादनार्थप्रेक्षणात्पूर्वं लक्ष्म्या उद्यत्कारुण्यसंताननिर्वापितचेतनागस्त्वस्यावश्यकत्वेन

### भावप्रकाशः

कर्मणः प्रेक्षणप्रतिबन्धकागोनिवृत्त्यर्थस्य लक्ष्म्या स्वेच्छया नियमितस्य 'नचाप्यन्येन हेतुना' इत्यत्र निषेधासंभवेन लक्ष्मीच्छानियमितातिरिक्त एव तत्स्वातन्त्र्यविघाती हेतुर्निषेध्यतया विवक्षितः। भगवदिच्छानियमितश्च धर्मः अहिर्बुध्न्येनोक्तः। तदतिरिक्तश्च;

नारायणेन दृष्टस्तु प्रतिबुद्धो भवेत्पुमान्
एवमात्मेच्छया राजन् प्रतिबुद्धो न जायते ॥

इति। (ना. आ.) वचनानुसारात् जीवेच्छापरिकल्पितोऽन्यो हेतुः प्रसज्यते इति तन्निषेधस्संभवति श्रियो निरुपाधिकैश्वर्योत्प्रेक्षणे भगवदिच्छा हेतुर्निषिध्यते इत्यप्यन्यत्र निरूपितम्।

किंच चेतनव्यापारस्य लक्ष्मीच्छानिष्पन्नकारणताकत्वेनेच्छायाः प्राधान्यं दर्शितं भवति। अत एव;—

तोषणीयासि केन त्वमुपायेनाम्बुजासने।
परमः पुरुषार्थो यः त्वत्प्रीतिस्तस्य साधनम् ॥ १५ ॥ ६
त्वत्प्रीतौ क उपायस्स्यात् कीदृशः किंविधस्स्मृतः?।

श्रीः;—

ब्रह्म नारायणं मां यज्ज्ञानेनैवाप्नुयाद्यतिः।
पन्था नान्योऽस्ति विज्ञानादयनाय विपश्चिताम्।
उपायांश्चतुरश्शक्र! शृणु मत्प्रीतिवर्धनान्।
यैरहं परमां प्रीतिं यास्याम्यनपगामिनीम् ॥ १६ ॥
स्वजातिविहितं कर्म सांख्ययोगौ तथैव च।
सर्वत्यागश्च विद्वद्भिरुपायाः कथिता इमे ॥ १७ ॥

इत्यादि—

षडङ्गं तमुपायं च शृणु मे पद्मसंभवे! ॥ १७ ॥ ५९ ॥

भावप्रकाशः

उपायोऽयं चतुर्थस्ते प्रोक्तश्शीघ्रफलप्रदः ॥ ७५ ॥

इत्यादिकं च संगच्छते । अत्र 'नान्यः पन्था अयनाय विद्यते' इति श्रुतेः ब्रह्मज्ञानव्यतिरिक्तस्य मुक्तिकरणतानिषेधपरत्वं भक्तिप्रपत्त्योर्मुक्तौ प्रीतिद्वारकहेतुत्वोक्त्या करणत्वं च प्रतिपादितमिति व्यक्तम् ॥

अत एव 'एष पन्थाः एतत्कर्म' इति ऐतरेयोपनिषदुपक्रमश्रुतिमूलकम्—

क्षेत्रज्ञः कर्मणी ज्ञानं करणं तस्य वै द्विज!

निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्तयेत् । (वि.पु. ६-७)

इत्यादिवचनं संगच्छते । अतः उद्यत्कारुण्यसन्ताने स्वाच्छन्द्ये जीवकर्मसापेक्षे 'केवलं स्वेच्छया इति वक्ष्यमाणेच्छाननुसारि कारणं 'न चाप्यन्येन हेतुना' इत्यत्र निषेध्यं इत्येव युक्तम् । एवं च ;—

'अनुग्रहात्मना शक्त्या करुणावर्षरूपया'

इत्यहिर्बुध्न्यवाक्ये सहजकारुण्यरूपकरुणावर्षरूपः असहजकारुण्यं अनुग्रह इति सिद्धम् ॥

मूले प्रथमगुरुशब्देन कारुण्यद्वयं दर्शितम् । अज्ञाननिवर्तकार्थके गुरुशब्दे सर्वेषां सृष्टिकालेऽविशेषेण करणकलेबरदानमूलकाज्ञाननिवृत्तिः आचार्योपदेशजन्यज्ञानहेतुकाज्ञानानिवृत्तिश्च विवक्षिता । तेन प्रथमाज्ञाननिवृत्तिहेतुभूतं यन्निर्हेतुकं भगवतस्सहजं परहितप्रवणत्वं कारुण्यं द्वितीयाज्ञाननिवृत्तिहेतुभूतं परदुःखापाचिकीर्षारूपं यच्च सहेतुकमनित्यं तदुभयमपि 'प्रथमगुरुकृपा' इत्यनेन क्रोडीकृतम् । एतदुभयम् ;—

सत्यं प्रसीद भगवन् कुरु मय्यनाथे

विष्णो ? कृपां परमकारुणिकः किल त्वम् ।

भावप्रकाशः

इत्यत्र विवक्षितम्। तत्र परमकारुणिक इत्यत्र सहजकारुण्यम् कृपामित्यत्र असहजमिति विवेकः इति पूर्वमेवोक्तम् । एवम् ;—

काले दुःखोपशान्तिं जनयति भगवान् व्याजमात्रावलम्बी
या दुःखापाचिकीर्षा परहितमनसः सैव तस्यानुकम्पा ।
दत्ते देहादियोगं दिशति च निगमं वक्ति वेदान्तसारम्
निस्सीमानन्दयोगं निरुपाधि समये सौति पुंसां तयैव ॥

(अधि.सा. २-३-१९)

इत्यत्र अधिकरणसारावल्याम् ; एतदुत्तरश्लोकचिन्तामणौ ; उपकारसंग्रहे विरोधिपरिहारे च एतदुभयं स्पष्टम् । स्वाभाविकदयायाः प्राधान्यं सारसारविरोधिपरिहारादौ व्यक्तम्। एवम् परहितप्रवणतारूपसहजदयायाः कार्यभेदाः तस्या एव प्राधान्यं च (र.त्र.सा.) सिद्धोपायशोधनाधिकारादौ निरूपितम्। निर्हेतुककृपापरगीताभाष्यादिकं पूर्वमेवोदाहृतम् ॥

'फलसंविभित्सया' इत्यादिपूर्वोदाहृतद्रमिडभाष्ये बुभुक्षुमुमुक्षुकर्मसामान्यस्यापि प्रीतिद्वारा फलजनकत्वं स्फुटम्। एवं वेदार्थसंग्रहे ;— 'कामिनः कर्तव्यतया कर्म विधाय कर्मणो देवताराधनरूपतां तद्द्वारेण फलसिद्धिं च तत्तत्कर्मविधिवाक्यान्येव वदन्ति। चोदितान्यनुतिष्ठतः विहितकर्माकुर्वतो निन्दितानि च कुर्वतः सर्वाणि सुखानि दुःखानि च परमपुरुषानुग्रहनिग्रहाभ्यामेव भवन्ति' इति परमपुरुषानुग्रहनिग्रहयोः द्वारतामभिधाय 'एष ह्येवानन्दयाति 'एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः' (बृ. ५-८-९) इति श्रुतिम् 'शासनानुवर्तिनं ज्ञात्वा कारुण्यात् स भगवान् वर्धयेत विद्वान् कर्मदक्षः' इति द्रमिडभाष्यम् 'नियतं कुरु कर्म त्वम्' 'मयि सर्वाणि कर्माणि सन्यस्य' 'ये मे मतमिदं नित्य-

भावप्रकाशः

मनुतिष्ठन्ति' 'ये त्वेतदभ्य सूयन्तो नानुतिष्ठन्ति' 'तानहं द्विषतः क्रूरान्' इति गीतावचनानि चोदाहृत्य स्वाज्ञानुवर्तिनः प्रशस्य स्वाज्ञानुपालनमकुर्वतामधमा गतिश्चोक्ता' इत्यभिधाय ;—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥

इति च स्वाज्ञानुवार्तिनां शाश्वतं पदं चोक्तम् । इत्युक्तम्—

श्रुतिस्स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥

(ल. तं. १७-९६)

प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनात् ॥
उपायाश्चोदिताश्शास्त्रैः . . . . . . . . .
त्रेधाप्यत्रप्रवृत्तिर्या त्वदाज्ञा पालनं तु तत् ॥ २१६ ॥
विहितस्याननुष्ठानात् निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥(या. स्मृ. ३-११९)

इत्यादीनि वचनान्यप्यत्राभिप्रेतानि । (वे. सं.)

अत्र उपासनादिविहितकर्मण आज्ञारूपस्याकरणे अधमगतिरेवेति व्यक्तमुक्तम् । एतेन 'एष ह्येवानन्दयाति' इति श्रुत्युक्तम् । आनन्दयितृत्वं शासनानुवृत्तिसापेक्षमिति निर्णीतं भवति । एवं अनुग्रहप्रसादशब्दाभ्यां कारुण्यस्वरूपं शिक्षितम् । तच्च न परदुःखदुःखित्वम्; तस्य वृद्ध्यादिहेतुत्वासंभवात् कृपां कुरु इत्यादौ प्रार्थनीयत्वासंप्रतिपत्तेः ; गद्यभाष्ये दूषितत्वाच्च । किं तु परदुःखापाचिकीर्षारूपम् । 'मैत्री करुणा (१-३३) इति योगसूत्रविवरणेषु

भावप्रकाशः

भोजराजवाचस्पत्यादिभिः इत्थमेव विवरणात् । भगवति दुःखापाचिकीर्षायास्सर्वसंमतत्वाच्च । इति चेत्यत्र चशब्देन ;—

तमेव शरणं गच्छ सर्वभावेन भारत ।

तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ (भ. गी. १८)

इति वचनं समुच्चीयते । तच्च फलाधिकरणदीपे भाष्यकृद्भिरुदाहृतम् ॥

एतेन शासनानुवर्तिनम् इत्येतद्विवरणवाक्योक्तोपासनादिविहित-कर्मणः प्रसादद्वारा मोक्षहेतुत्वं सिद्धम् ॥

एवं ;—

'ये तु सर्वाणि कर्माणि मयि सन्नयस्य-मांध्यायन्त उपासते'

'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् (१२-६)'

'मामेकं शरणं व्रज'

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि' (१८-६६)

इत्यत्र भक्तिप्रपत्त्योः संकल्पद्वारा हेतुता बोध्या ।

गीताभाष्ये ;—

सह यज्ञैः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः ।

अनेन प्रसविष्यध्वं एष वोऽस्त्विष्टकामधुक् ॥ (गीता. ३–१०)

इत्यत्र सृष्टेर्दयामूलकत्वं यज्ञस्य परमपुरुषार्थलक्षणमोक्षपूरकत्वं विवक्षितमिति प्रतिपादयद्भिर्भाष्यकृद्भिरत्र (वे. सं.) 'ये मे मतम्; ये त्वेतदभ्यसूयन्तः' इति वचनद्वयस्य 'सर्वकर्माणि ; मत्प्रसादात् (१८) इति वचनस्य चोपादानेन सृष्टेः सहजकारुण्यमूलकत्वेऽपि शासनानुवृत्त्यभावे फलोपधायकदयाया अनुदयः किन्तु तत्सत्त्व एवोदय इत्युपनिषत्सारभूतोर्थः गीतोपनिषदाचार्यसंमत इति द्रमिडभाष्यकृदाशयः स्थापितः ॥

### भावप्रकाशः

'तानहम्' (१६ अ.) इति वचनोदाहरणेन ;

दैवी संपद्विमोक्षाय निबन्धयासुरी मता । (१६ अ.) 'ये मे मतम्' इत्यनयोरैकार्थ्यं बोधितम् ।

एतेन ;—

'प्रकृतिं स्वामवष्टभ्य विसृजामि'

'न च मां तानि कर्माणि निबध्नन्ति' 'अवजानन्ति मां मूढाः'

'राक्षसीमासुरीं चैव प्रकृतिं मोहनीं श्रिताः
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः'

'यत्करोषि यदश्नासि तत्कुरुष्व मदर्पणम्'

'शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः'

इति नवमप्रघट्टकस्य ;

'न मां दुष्कृतिनो मूढाः प्रपद्यन्ते आसुरं भावमाश्रिताः'

'चतुर्विधा भजन्ते मां जनास्सुकृतिनः'

'येषां त्वन्तगतं पापम् (७ अ)

'तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च
मामेवैष्यसि'

अनन्यचेतास्सततम् ; तस्याहं सुलभः'

'पुरुषस्स परः पार्थ भक्त्या लभ्यः' (८. अ)

इति सप्तमाष्टमप्रघट्टकयोश्च च 'ये मे मतम्' इत्याद्यैककण्ठ्यं सिध्यति ॥

न च मां तानि कर्माणि निबध्नन्ति' इत्यत्र सृष्टेः कर्मसापेक्षत्वेन वैषम्यनैर्घृण्यपरिहारस्याभिप्रेतत्वेन 'राक्षसीमासुरीं चैव' दैवीं प्रकृतिमाश्रिताः' इत्यत्रापि कर्म मूलं विवक्षितम्; तच्च 'न मां दुष्कृतिनः' 'चतुर्विधाः सुकृतिनः' इत्यनेन दृढीकृतम् ॥

### भावप्रकाशः

'सर्वकर्माण्यपि सदा कुर्वाणः' इत्यतः पूर्वम् 'स्वकर्मणा तमभ्यर्च्य' 'भक्त्या मामभिजानाति' इत्येतद्वचनं (वे-सं) प्रागेवोदाहृत्य भक्त्यादेः कर्मविपाकरूपत्वमुपपादितम् ॥

अत्र 'ये मे मतम्' (३ अ) 'सर्वकर्माण्यपि' (१८ अ) इति वचनद्वयोपादानेन एतत्सर्वं क्रोडीकृतम् । एवं च सृष्टेः सहजकारुण्यमूलकत्वेऽपि शासनानुवृत्तिरावश्यकी । तदनन्तरमेव फलोपधायकदया प्रसरतीति गीतासिद्धान्तो वेदार्थसंग्रहे प्रतिपादितो भवति ॥

रचनानुपपत्त्यधिकरणभाष्येऽपि सृष्टेः सहजकारुण्यमूलकत्वं असहजकारुण्यस्य शासनानुवृत्तिसापेक्षत्वं च विवक्षितमिति पूर्वमेव निरूपितम् ॥

द्रमिडभाष्योक्तरीत्या दयायाश्शासनानुवृत्तिसापेक्षत्वे तस्या वैफल्यमेव । एवं वात्सल्यौदार्ययोरपीति शङ्कावारणाय (२-२-३) दयानिरूपणम् । लोकेऽपि पूर्वं अनन्तप्रतिकूलकर्माण्याचरितवत्सु पुरुषेषु यत्किञ्चिदानुकूल्यमात्रेण प्रीत्या तद्दोषानादरणं तद्दुःखनिवारणे स्पृहा तेभ्यः फलदानं च न सर्वत्रोपलभ्यते । अपि तु कस्मिंश्चित्पुरुषधौरेय एवेति शासनानुवृत्तिसापेक्षत्वमात्रेण न तेषां वैफल्यम् ॥

यथोक्तं परायत्ताधिकरणे व्यासार्यैः ;—'अल्पानुकूल्येन विपुलापराधसहत्वाच्च दयादिगुणानां सविषयत्वम्' इति । 'चोदितान्यनुतिष्ठतः (वे. सं.) इत्यत्र सुखदुःखयोः अनुग्रहनिग्रहौ तत्र च जीव-व्यापारौ हेतू इति प्रतिपादनेन सृष्टेर्दयामूलकत्वेन भगवतः कालुष्यासंभवात् रक्षणं प्रति प्रतिकूलव्यवसायस्य प्रतिबन्धकत्वमेव इति मतमप्रामाणिकम् । अनिष्टं प्रति निग्रहस्य इष्टं प्रत्यनुग्रहस्य च जीवव्यापारहेतुकस्य कारणताया एव शब्दतस्सिद्धेरिति

भावप्रकाशः

बोधितम् । रचनानुपपत्त्यधिकरणभाष्येऽपीत्थमेवोपक्रमे पुण्यापुण्य-मूलकानुग्रहनिग्रहायत्ते: सुखदु:खे इति कथनेनायमर्थ: स्फुट: ॥

'पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षै-र्वर्धयते' इत्यादि (२-२-३) श्रीभाष्यं (वे-सं.) उदाहृतद्रमिडभाष्य-विवरणरूपम् । (वे-सं.) गीतानुसारेण प्रसादशब्देन व्याकृत: कारुण्य-शब्द: । अत्र 'दया हि नाम स्वार्थनिरपेक्षा परदु:खासहिष्णुता' इति तदुत्तरश्रीभाष्येण विवृत: । शब्दान्तरं विहाय दयाशब्दप्रयोगात् 'दयते रक्षत्यनया ; दयदानगतिहिंसारक्षणेषु ; भिदाद्यङ्' इति अमरसुधायां दयाशब्दव्याख्यानाद्दयाशब्दस्य कारुण्यशब्दविवरणरूपत्वम् । शब्द-कल्पद्रुमबृहदभिधानादिकोशकारा अपि दयादिशब्दानां परदु:खप्रहा-णेच्छामर्थमभिदधति न त्वन्यथा । स्वार्थनिरपेक्षा परदु:खासहिष्णुता इत्यनेन रक्षणप्रकारोऽपि दर्शित: । अनन्तरं—'सा च स्वशासनाति-वृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते । तन्निग्रह एव तत्र गुण:' इत्युक्त्या निग्रहप्रतिकोटि: उपक्रमोक्त अनुग्रह एव दयाशब्दार्थो विवक्षित: । एतेन 'दया दु:खासहिष्णुत्वम्' (३१-१९) 'अनु-ग्रहात्मिका शक्तिस्सा कृपा' (१४-३०) इत्यहिर्बुध्न्यवचनयोरैकार्थ्यं दर्शितम् । एवं च एतद्भाष्यस्य ;—

या दु:खापाचिकीर्षा परहितमनसस्सैव तस्यानुकम्पा

इत्येव परिष्करणं युक्तम् । अत्र परहितमनस इति सहजकारुण्य मुक्तम् । अस्य दु:खापाचिकीर्षाप्रयोजकत्वतात्पर्येण प्रथममुपादानम् । युक्तं चैतत् ;—'दया सर्वेषु भूतेषु' (८-२१) इति गौतमसूत्रमस्करिभाष्यो-दाहृतपुराणवचनानुसारात् ;

### भावप्रकाशः

आत्मवत्सर्वभूतेषु यश्शिवाय हिताय च ।
वर्तेते सततं हृष्टः कृत्स्ना ह्येषा दया स्मृता ॥ (म. पु.)

इति तद्वचने कृत्स्ना इति पदेन सहजासहजे उभे अपि क्रोडीकृते । शिवशब्दे सुखं दुःखनिवृत्तिश्चेत्युभयं विवक्षितम् । यद्वा चशब्देन दुःखनिवृत्तिसंग्रहः । हितायेति सहजकारुण्यमुक्तम् । आत्मवत् इत्यनेन स्वदुःखस्यानिष्टत्वेन स्वदुःखनिवृत्तये यथा वर्तेते इत्यर्थः ॥

लोके स्वदुःखासहिष्णुः इत्यनेन स्वदुःखस्यानिष्टतया दुःखनिवर्तनेच्छुरित्यर्थप्रतीतिवत् परदुःखासहिष्णुताशब्देन परदुःखापाचिकीर्षा बोध्यते । सततं हृष्ट इत्यनेन परदुःखदर्शनजन्यदुःखवत्त्वं न दयेति बोधितम् । 'दयावान् सर्वभूतेषु' (रा. अ.) इत्यादावेतद्वचनसिद्धार्थ एव ग्राह्यः । 'दया भूतेषु' (१६-२) इति गीतां 'सर्वभूतेषु दुःखासहिष्णुत्वम्' इति व्याकुर्वतां भाष्यकृतां 'दया सर्वेषु भूतेषु' (गौ. सू.) इत्याद्यनुसार्यर्थ एवाभिप्रेतः । 'दया दुःखासहिष्णुत्वं (३१-१९) इति अहिर्बुध्न्योक्त्यनुसारविवक्षोक्तावपि तेनैव कृपाया अनुग्रहरूपत्वोक्त्या उक्तार्थ एव सिध्यति ॥

अत एव;—

यत्नादपि परक्लेशं हर्तुं या हृदि जायते ।
इच्छा भूमिसुरश्रेष्ठ ! सा दया परिकीर्तिता ॥

इति पाद्मवचनं शब्दकल्पद्रुमे मस्करिभाष्योपात्तमत्स्यपुराणवचनसहभावेनोदाहृतं संगच्छते । अत्र यत्नादपीत्येतन्मूलकं भाष्ये स्वयमेव प्रयतत इति ॥

श्रुतप्रकाशिकापर्यालोचनादपि दयास्वरूपं एतदेवेति सिध्यति । तथा च (१-१-१) शेषलक्षणनिरूपणावसरे तद्ग्रन्थः;—'परातिशयस्य

### भावप्रकाशः

परमप्रयोजनत्वावगतिः स्वरसतश्चेतनस्यापि संभवति; प्रकृष्टकृपास्नेहान्वितेषु तद्दर्शनात् । दया हि स्वार्थनिरपेक्षा परदुःखासहिष्णुता । अर्थाकामनया परदुःखं शिशमयिषोः तद्दुःखानुवृत्तिरनिष्टा स्यादिति तद्व्युदासाय स्वार्थानपेक्षशब्दः' इति ॥

अत्र परदुःखमित्यादिग्रन्थस्य परदुःखासहिष्णुत्वोपपादनरूपतया परदुःखानिष्टत्वप्रयोज्यतच्छिशमयिषा परदुःखासहिष्णुताशब्दार्थः इति स्फुटं प्रतीयते । तदुत्तरं परदुःखदर्शनजनिततादात्विकस्वदुःखनिवृत्तिरूपफलात्तत्प्रवृत्तिरिति न स्वार्थानपेक्षत्वमिति चेत्; इति शङ्कापि लोके तथा दर्शनात् स्वार्थानपेक्षत्वमात्र इति न ततः परदुःखदर्शनजन्यदुःखवत्त्वं परदुःखासहिष्णुताशब्दार्थ इति सिध्यति ॥

परदुःखज्ञानरूपदुःखनिवृत्तिं पराभ्युदयज्ञानरूपप्रीतिमत्त्वं च विना स्वार्थानपेक्षत्वस्य विवक्षितत्वात् इति तत्समाधाने परदुःखज्ञानरूपदुःखेत्युक्त्या परदुःखदर्शनजनिततादात्विकस्वदुःखं न लक्षणघटकमिति स्फुटं प्रतीयते ॥

तदुत्तरं 'स्निग्धश्च स्वजने स्वसत्तामनपेक्ष्य पुत्रादिदुःखनिवृत्त्यर्थं प्रवर्तमानो दृश्यते । तच्च तद्गतदुःखासहत्वकृतमित्यत्र परदुःखानिष्टत्वप्रयोज्यतच्छिशमयिषा विवक्षिता इति प्रतीयते । सहनं—अनिष्टताऽभावः । असहनं—अनिष्टता । 'अलंकृञ् निराकृञ्' इति सूत्रविहितेष्णुच्प्रत्ययस्य 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इति सूत्रोक्तदिशा तत्साधुकारी इत्यर्थः । अनिष्टत्वसाधुकारिता—अनिष्टताकार्यकारितैव । एवं च परदुःखानिष्टत्वप्रयोज्यतच्छिशमयिषा परदुःखासहिष्णुताशब्दार्थः । इतरार्थे इष्णुचो विवक्षणे शिशमयिषापर्यन्तं

भावप्रकाशः

नञ्समभिव्याहृतसहेरर्थे इति प्रमाणानुसारिण्यर्थे भाष्यकृतस्तात्पर्यं न त्वन्यथेति भावः ॥

'दयाऽन्येषां दुःखाप्रसहनं (र. रा. स्त. उत्तर. श. ९८) इति कथयिष्यन्तो भट्टपराशरपादाः ;—

दया परव्यसनहरा भवव्यथा
सुखायते मम तदहं दयातिगः ।
तथाऽप्यसौ सुखयति दुःखमित्यतो
दयस्व मां गुणमय रङ्गमन्दिर ! ॥ ९८ ॥

इति श्लोके परदुःखदर्शनजनित दुःखवत्त्व न दयेति स्थापयन्ति ॥

अत्र दया परव्यसनहरा इत्यनेन दयायाः परदुःखदर्शनजन्य-दुःखवत्तारूपत्वे 'कृपया पर्यपालयत्' इत्यादेरनुपपत्तिः ; तस्यास्साक्षाद्धेतुत्वाभावात् । लोके कस्यापि तद्वाक्यात्परदुःखदुःखिताप्रतीतेरसंमतत्वाच्च इति । दयस्व मामित्यनेन केनापि लोके परस्य स्वदुःखदुःखिता न प्रार्थ्यते किं तु स्वदुःखनिवारणेच्छैवेति बोधितम् ॥

करणम् ;—ज्ञानकरणानां श्रवणनयनादीनां क्रियोपकरणाना करचरणादीनां च एतच्छक्तिशीकरतः करणत्वम् ; यथा ;—चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायण इत्यादि (महो.)। कारणम् ;—तैस्तैस्तद्गतस्तत्तत्कारयतीति कारणम्—दैवतम् । तत्र स्वतन्त्रः कर्ता—अधिकारी फली जीवोऽपि हि स्वयं स्वस्य यथा सुखदुःखाभिमानी तथा तदतिशयेन वा तदवस्थाभिमानी हि भगवान् । यथा ;—

व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ।

### भावप्रकाशः

उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ (रामा. अ. २-४०-२) 'बहुस्यां प्रजायेय' इति च । पृथगभिमानित्वे हि न बहुस्यामिति स्यात् । अत एव तत्फलभोगेन हर्षशोकादिभिर्विकुर्वाणः ;—[4]विकर्ता'। स्वार्थहर्षशोकाद्यभावेऽपि परार्थतत्प्रसक्तिरदोषः । अन्यथा परदुःखदुःखित्वादयो गुणाः कथमस्य स्युः ! एवं तदभिन्नतन्त्रात्मके 'महागुणे गहनः' इति सहस्रनामभाष्ये अस्य इत्यस्य जीवतत्कर्मशोकवत्त्वेनाश्रुतस्य 'अपहतपाप्मा विशोकः' इत्यादिषु विशोकत्वेन 'यस्सर्वज्ञस्सर्ववित्' इत्यादौ सर्वगतधर्मज्ञत्वेन श्रुतस्येत्यर्थः । तेनात्र दयायाः परदुःखदर्शनजनितदुःखाश्रयतारूपत्वं नोक्तम् ; तथा सति 'अनश्नन्नन्यो अभिचाकशीति' इत्यादिश्रौतनिषेधस्य श्रौतविधिमन्तरा स्वेच्छया संकोचकल्पनप्रसङ्गात् । किंतु भगवतः जीववत् परगतदुःखाभिमानित्वमेव । तदेव 'व्यसनेषु' इति श्लोके विवक्षितम् । अत्र बहुस्यामितिश्रुत्युपादानेन कथमस्य इत्यनेन परदुःखदर्शनजन्यदुःखवत्त्वं न भगवत इति भावः प्रतीयते । अत्र दयाशब्दाभावेन दयास्वरूपं न प्रतिपिपादयिषितम् ; कारणम् इति कारयितृत्वस्य कर्ता इत्यनेन स्वातन्त्र्यस्योक्त्याऽनन्तरं बहुस्यामिति श्रुत्यनुसारेण एकस्यैवाभिमानित्वोक्तेः । अत एव कारणत्वकर्तृत्वयोस्सत्त्वादेवेत्यर्थः । स्वार्थेत्यस्य स्वफलभूतयोः स्वगतयोः हर्षशोकयोरभावेऽपि परफलभूतयोस्तयोः पगगतयोरभिमानितया प्रसक्तिरदोष इत्यर्थः । अयमाशयः ;—यद्यद्वस्तुज्ञानजन्ये सुखदुःखे नैयायिकसंमते तत्तद्वस्तुज्ञाने एव ते नातिरिक्ते इति प्राभाकरसंमतोऽर्थः वेदार्थसंग्रहे भाष्यकृता समर्थितः । एवं च सर्वमनुकूलतया सर्वदाऽध्यक्षयितुरानन्दमयस्य अखिलभुवनजन्मस्थेमभङ्गादिलीलस्य अकर्म-

भावप्रकाशः

वश्यस्य तयोरनुकूलत्वेनैव भानम् । जीवस्य तु कर्मवशादेकस्य प्रतिकूलतयाऽन्यस्यानुकूलतया इति विवेकः ॥

एवमपि जीवबुद्ध्या प्रतिकूलतया भातत्वेन दुःखशब्देन व्यपदेशः । परमात्मनस्तदभिमानेन परदुःखाभिन्नदुःखिता तज्ज्ञान-मात्रेण तन्निराकरणे प्रवृत्तिश्चोपपद्यते ॥

लोकेऽपि स्वस्यानुकूलतया भातस्यापि वस्तुनः परस्य प्रति-कूलतया भानं ज्ञात्वा परदुःखस्यानिष्टतामात्रेण तन्निवर्तने प्रयतमानः परदुःखासहिष्णुरिति अभिमानमात्रेण परदुःखस्य दुःखताज्ञानेन अनि-ष्टत्वेन परदुःखदुःखीति च व्यवह्रियते न तु वञ्चकत्वेन इत्यनुभवः ॥

अत एव व्यासार्यैः श्रुतप्रकाशिकायां 'परदुःखदर्शनजनित-तादात्विकस्वदुःखनिवृत्तिरूपफलात्तत्प्रवृत्तिरिति न स्वार्थानपेक्षत्वमिति शङ्कायाः परदुःखज्ञानरूपदुःखनिवृर्त्तिं पराभ्युदयज्ञानरूपप्रीतिमत्त्वं च विना स्वार्थानपेक्षत्वस्य विवक्षितत्वात्' इति पूर्वपक्षवाक्यविलक्षण-वाक्येन समाधानोक्त्याऽयमर्थस्सूचितः । अवतारस्य कृपामूलकत्वेन ॥

'यदि ह्यहं न वर्तेयं जातु कर्मणि'

इत्यादि गीतोक्तलोकनाशो मा भूदितीच्छया कर्मकरणेन च--

त्वं चेन्मनुष्यादिषु जायमानः

तत्कर्मपाकं कृपयोपभुङ्क्षे । (रं. स्त. ९५)

इति निर्व्यूढम् । अकर्मवश्यत्वादिना श्रुत्यादिभिः प्रतिपन्नस्य कर्मपाक-भोगस्य पूर्वोक्तदिशैवोपपादनीयत्वात् । अतः 'परदुःखापाचिकीर्षा दया' इत्येव श्रीभाष्यकारादीनामाचार्याणां संमतम् ॥

एवं च श्रीभाष्यादिपर्यालोचनायामपि वेदार्थसंग्रहस्थद्रमिड-भाष्यघटककारुण्यशब्दस्य यथोक्त एवार्थ इति तत्र निग्रहानुग्रहयोः कर्मद्वारकत्वमप्रत्याख्येयम् ।

### भावप्रकाशः

एवं—पूर्वम्;—

(वे. सं.) 'स्वकर्मणा तमभ्यर्च्य'

इति वचनमुदाहृत्य;

'सर्वकर्माण्यपि'

इत्यस्योदाहरणेन गीतायां पूर्वं नित्यनैमित्तिककर्मणाम्। 'भक्त्या मामभिजानाति' इति पूर्वश्लोकोक्तपरभक्तिपरज्ञानपरमभक्तिपर्यन्तविपाकमभिधाय 'सर्वकर्माण्यपि' इत्यत्र काम्यानां यादृच्छिकादेश्च विपाकस्य प्रसादद्वारकस्याभिधानेन;—

'चतुर्विधा भजन्ते मां जनास्सुकृतिनः'

'येषां त्वन्तगतं पापम्'

इति सप्तमोक्तार्थो विशदीकृत इति च वेदार्थसङ्ग्रहकृदाशयः प्रतीयते॥

रचनानुपपत्त्यधिकरणभाष्येऽपि

'स्वकर्मणा तमभ्यर्च्य'

इत्यादौ—

'तेषां सततयुक्तानाम्' इत्यन्ते उदाहृतम्।

अतश्च 'आगमनानुवर्तिनं ज्ञात्वा कारुण्यात्स भगवान् वर्धयेत कर्मदक्ष' इति द्रमिडभाष्यकृत्सिद्धान्त एव रचनानुपपत्त्यधिकरणश्रीभाष्ये 'फलसंविभत्सयेति द्रमिडभाष्योपादानानन्तरं 'पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयत' इत्यत्र विवक्षितामिति सिद्धम्॥

परायत्ताधिकरणश्रीभाष्यमप्येतदेकार्थमिति स्फुटं विदुषाम्। संप्रदायपरिशुद्धौ द्रमिडभाष्यकृत्सिद्धान्त एव शठकोपमुनिभिः प्रवर्तित इति स्फुटम्। अत एव तैः पञ्चमहायज्ञानुष्ठातृसद्भावेन दिव्यदेशमहिमप्रतिपादनं सङ्गच्छते॥

तत्त्वमुक्ताकलापः

**मुक्तैश्वर्यान्तसंपन्निधिरपि भविता कश्चिदित्थं विपश्चित् ॥ २५ ॥**

सर्वार्थसिद्धिः

स्वशब्दः कृपाविषयः । सपदिह विवेकवैराग्यादिरूपा । अपिस्संभावनार्थस्समुच्चयार्थो वा । **इत्थमिति**—प्रकृतिपुरुषादितत्त्वचिन्ताप्रकारेण ; यद्वा हिरण्यगर्भादिविपाकवदित्यर्थः ॥

आनन्ददायिनी

तत्परा[1]मर्शी स्वस्य स्वकृपाविषयत्वमुक्तं स्यादित्यत्राह ;—**स्वशब्द इति ।** ऐश्वर्यादिसंपदां [2] मुक्त्यर्थत्वाभावादाह ;—**विवेकेति ।** मूलेऽपिशब्दस्संभावना[3]र्थस्समुच्चयार्थो वेति ;—स्वर्गाद्यैश्वर्याणामित्यर्थः ॥

भावप्रकाशः

मूले मुक्तैश्वर्यान्तसंपन्निधि इति वाक्येन 'वर्धयेत' इति द्रमिडभाष्यस्य तन्मूलकोदाहृतश्रीभाष्यस्य च अर्थस्संगृहीतः । अत्र सर्वत्र चेतनगतगुणमूलकत्वं भगवदनुग्रहस्योक्तम् । मूले कश्चित् इत्यनेन—

'कश्चिद्धि सुकृतान्मेषात्'

इत्याद्युदाहृत (ल. तं.) वचनं प्रत्यभिज्ञाप्यते ॥

एतेन द्रौपदीवस्त्रापहारपरिभवदर्शनदोष एवार्जुनस्य गीतोपदेशे प्रधान निदानम् ; न तु ;—

शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ।

---

[1] मर्शभ्रान्तिं वारयति स्वशब्द इति—क. ख. [2] मुक्त्यन्तत्वा—क. ख.
[3] नापरो वा समु—ग.

### भावप्रकाशः

इति गीतानुसारेण ;—

पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् ।

इति यामुनमुनिना धर्मबुभुत्सया च शरणागत पार्थमुद्दिश्य इति (गी.) भाष्यकृता चोक्तं प्रपदनम् ; दोषो गुणहानिश्च भगवतो जीवपरिग्रह-मूलमिति चोक्तिर्निरवकाशा ;

'इदं ते नातपस्काय नाभक्ताय + वाच्यम्'

इति गीतोक्तिविरोधात् ।

'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्'

इत्यर्जुनप्रपत्तेरपि ;—

'न मां दुष्कृतिनो मूढाः प्रपद्यन्ते'

चतुर्विधा भजन्ते मां जनास्सुकृतिनः'

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।

ते द्वन्द्वमोहनिर्मुक्ताः भजन्ते मां दृढव्रताः ॥

इति गीतावचनेनैव सुकृतमूलकत्वस्यावश्यमङ्गीकार्यत्वाच्च ।

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ।

इत्यनन्तरम् ;—

'अपि चेत्सुदुराचारो भजते माम्'

'क्षिप्रं भवति धर्मात्मा'

इत्यत्र भक्तिनिष्ठस्याचारव्यतिक्रमस्याल्पवैकल्यस्यानादरणीयताया एवोक्त्या ततो दोषस्य भगवद्भोग्यत्वस्य तत्परिग्रहहेतुत्वस्यासिद्धेः ।

'शश्वच्छान्तिं निगच्छति'

इत्यनेन भक्तावुपक्रान्तस्य प्राप्तिविरोध्याचारनिवृत्तिपूर्वकभक्तिपूर्तेर्भाषितत्वात् ॥

### भावप्रकाशः

रचनानुपपत्त्यधिकरणे 'शासनानुवर्तिनम्' इत्यादिद्रमिडभाष्यविवरणावसरे 'दया हि नाम' इत्यारभ्य 'स्वशासनातिवृत्तिव्यवसायनिवृत्तिमात्रेणानाद्यनन्तकल्पोपार्चितदुर्विषहानन्तापराधानङ्गीकारेण निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते' इति श्रीभाष्यं वेदार्थसंग्रहे 'शासनानुवर्तिनं ज्ञात्वा कारुण्यात्' इत्यादिद्रमिडभाष्यविवरणदशायामुदाहृते ;—

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तः मुच्यन्ते तेऽपि कर्मभिः ॥

इति गीतावचनं उत्तरार्धविवरणपरम् ; न तु प्रातिकूल्यव्यवसायनिवृत्तेरप्रतिबन्धमात्रत्वेन दयाया निर्हेतुकत्वपरम् ; उदाहृतद्रमिडभाष्यविरोधात् । 'एष एव साधुकर्म कारयति' इत्यत्र आनुकूल्यप्रवृत्तिसामान्यान्तःपातिन आनुकूल्यव्यवसायस्यापि मानसप्रवृत्तिरूपस्य विवक्षितत्ववत् 'एष एवासाधु कर्म' इति श्रुतावपि कायिकवाचिकप्रातिकूल्यप्रवृत्तेरपि विवक्षितत्वेन ।

'नाविरतो दुश्चरितात्'

इति श्रुतितद्भाष्यविरोधेन प्रातिकूल्यविरामापेक्षाविरहस्य भवदभिप्रेतस्यायोगात् । पापस्य च ज्ञानोदयविरोधित्वं 'एष एवासाधु कर्म कारयति तं यमधो निनीषति' इति श्रुत्याऽवगम्यते (१-१८) इति भाष्योक्तेः ॥

अत्र भाष्ये अनादिकल्पोपचितानन्तापराधेत्यनेन तदा अपराधनिवृत्तिरावश्यकीति सूचितम् । दयायाः साध्योपायमुखेन पूर्वाघाश्लेषसंपादकत्वं चेति । 'शासनानुवर्तिन ज्ञात्वा कारुण्यात् स भगवान् वर्धयेत विद्वान् कर्मदक्षः' इति द्रमिडभाष्यं वेदार्थसंग्रहे यथावद्व्याकृत्य श्रीभाष्ये प्रथमतः कारुण्यशब्दं विहाय अवशिष्टभागं 'पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते' इति विवृत्य

## भावप्रकाशः

कारुण्यशब्दं विहाय दयाशब्देन तदर्थं निर्दिश्य अनाद्यनन्तकल्पोपचितेत्यादिना दयामूलकोपकारं विशदयता भगवता भाष्यकृता धर्मार्थकामपुरुषार्थविषये प्राचीनानन्तापराधफलदित्साया अप्रतिरोधेनैव अपराधिन उपकारकरणेन अल्पास्थिरसुखसंपादनेन च दयाया उपकारोऽल्पः यत्किञ्चिद्दुःखनिराकरणेच्छारूपत्वात्तस्याः । मोक्षविषये तु अनाद्यनन्तकल्पोपचितप्राचीनानन्तापराधफलदित्साप्रतिबन्धेन अतिमात्रानुकूल्ये व्यवस्थितपुरुषस्य निरतिशयविशेषोपकारान् साधनान्तरानुष्ठापनेच्छया संपाद्य साध्योपायमुखेन निरतिशयसुखसवर्धनेन दयाया अतिशयित उपकारः; दुःखसामान्यनिराकरणेच्छारूपत्वादस्याः इति बोधितं च । वेदाख्यशास्त्रं प्रस्तुत्य 'तच्च परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्यापुण्ये तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे इति वदति' इति 'फलसंविभत्सया' इत्यादिद्रमिडभाष्यार्थमुपक्रम्य निर्हेतुककृपामूलकोपकारानभिधाय निरतिशयसुखसंवृद्धये इति 'शासनानुवर्तिनम्, इत्यादिद्रमिडभाष्यार्थोपसंहारे पुण्यकर्मणः भगवदनुग्रहद्वारकं साध्योपायमुखेन मोक्षेण वर्धनमेव निरतिशयसुखसंवृद्धये इत्यत्र विवक्षितमिति सिध्यति । एतेन—निर्हेतुककृपायाः पुण्यमूलकानुग्रहात्मकदयाद्वारं उक्तफलसंपादकत्वमुक्तं भवति ॥

अत्र निरतिशयसुखोत्पत्तये इत्यनुक्त्वा निरतिशयसुखसंवृद्धये इत्युक्त्या निरतिशयसुखं यत् धर्मभूतज्ञानविकासरूपं स्वरूपयोग्यतापन्नं सहजकारुण्यसिद्धं विद्यमानमप्यविद्यमानमिव स्थितं तदनया दुःखनिवृत्तावेव जीवव्यापारापेक्षया दयया अभिव्यञ्जितमिति द्योत्यते । एतेन (क्तं) पूर्वमुदाहृतानि 'आत्यन्तिकी निवृत्तिस्तु' (अ. सं.) इत्यादिवचनानि व्याख्यातानि ॥

## भावप्रकाशः

तत्र अनन्तापराधानङ्गीकारेणेत्यनेन वात्सल्यं दोषानादरहेतुः स्नेहः (१-१-७ श्रु. प्र.) इत्येव भगवद्भाष्यकृत्संमतम् इति प्रतीयते; अत एव ;---

दुष्कर्मव्यवसायतस्तु विरतो यस्तस्य पुंसः पुरा
भूयो जन्मसमार्जितान्यगणितान्यागांस्यनादृत्य यत् ।
तस्यानन्तसुखाप्तये च यतते लक्ष्मीसहायस्स्वयं
तत्कारुण्यपुरस्सरो गुणगणस्तस्यायमुज्जृम्भते ॥

इति भाष्यविवरणतत्त्वसारोक्तिः एतदुभयानुगुणा 'दयायास्तु प्राचीनासंख्येयजन्मसु महापराधकारिणि पश्चात्तनप्रातिकूल्यव्यवसायनिवृत्तिमात्रेण तदपराधाननन्ताननादृत्य तस्य निरतिशयसंपत्प्रदानाय स्वयमेव भगवान् प्रवर्तते' इति सावकाशत्वम्, (वे. सं. ता. दी.) इति 'दोषानादरहेतुः स्नेहः' इति च (१-१-७ श्रु. प्र.) व्यासार्यसूक्तिश्च सङ्गच्छते ॥

प्रकृष्टकृपास्नेहान्वितेषु इत्युपक्रम्य दयास्वरूपं (२-२-३) श्रीभाष्योक्तदिशा 'स्वार्थनिरपेक्षा परदुःखासहिष्णुता' इत्येवोक्ता; 'अत्रानुकूलेतरजनः पर इह विवक्षितः' (१-१-१) इति व्यासार्यसूक्तौ श्रीभाष्यतत्त्वसारवेदार्थसंग्रहतात्पर्यदीपिकानुसारेण अनुकूलेतरत्वं प्राक्कालिकं विवक्षितम् । अन्यथा 'शासनातिवर्तिनः च तद्विपर्ययैर्योजयति' इत्यादिभाष्य (वे. सं.) सूक्त्यन्तरविरोधात् ॥

एवमपि प्राचीनानन्तापराधानादरेण दयायास्साफल्यं सूक्तित्रये स्फुटम् ॥

संबन्धविशेषान्वितेषु प्रीतिः स्नेहः । यस्य विपाकाः अस्थानभयशङ्कित्वं दोषानवभासः दोषेषु गुणत्वबुद्धिः इत्यादयः (१-१-१) इति व्यासार्यसूक्तौ संबन्धविशेषान्वितेषु प्रीतिः स्नेहः इति वात्सल्य-

## भावप्रकाशः

स्वरूपनिरूपणपरम् । यस्य विपाका इत्यादि ज्ञापककार्यप्रदर्शनपरम । अनुपदमेव वत्सलशब्दघटितप्रमाणानुसारी पाणिन्यादिसर्वसम्मतोऽयमर्थ इति निरूपयिष्यते ॥

एतेन 'दोषेषु गुणत्वबुद्धिः वात्सल्यं यथा मातुर्वत्से इति समन्वयाधिकरणव्यासार्यसूक्तावपि वात्सल्यकार्यप्रदर्शनमुखेन प्रीते-र्वात्सल्यरूपता विवक्षिता । अभ्युपगतश्चायमर्थो (मु. प व्याख्याने) वीरराघवाचार्येण तात्पर्यदीपिकायाम् । दोषेषु गुणत्वबुद्धिः इति व्यासार्यसूक्तौ गुणत्वं—उद्देश्यप्रतीत्यप्रतिबन्धकत्वम् । आलङ्कारिकैः दोषत्वं उद्देश्यप्रतीतिप्रतिबन्धकत्वमिति निर्वचनात् दोषत्वप्रतिकोटित्वाद्गुण-त्वस्य, एवं च तत्रापि श्रीभाष्यतत्त्वसारान्तरधिकरणश्रुतप्रकाशिकानुगुण एवाऽर्थो विवक्षितः (१-१-१) । गुणत्वशब्दस्य यथाश्रुतार्थकत्वेऽपि 'प्रकृष्टकृपास्नेहान्वितेषु तद्दर्शनात्' इत्युपक्रमोक्त्या लोकबुद्ध्यनु-सारेणैव तत् । एतेन 'मध्ये स्वार्थानपेक्षताविचार अवशाश्रुपातादि-मत्त्वदर्शनात्' इत्युक्तिरपि व्याख्याता । अन्यथा युद्धे अप्राकृत-शरीरे रक्तनिस्सरणोक्तिरपि तात्त्विकी स्यात् । अत एव सहस्रनाम-भाष्ये; वत्सलः वत्सान् स्वोत्सुकान् कामयत इति 'वत्सांसाभ्यां कामबले' इति लच्प्रत्यय इत्येवोक्तम् । तत्रैव 'अविज्ञाता सहस्रांशुः,' इत्येतद्विवरणे; प्रपन्नापराधापरिगणनं गुण एव । अतो हि तातपादाः—

सर्वज्ञतामेवमुपालभामहे
त्वं ह्यज्ञ एवाश्रितदोषजोषणे ।

इति इत्युपक्रम्य;—ननु आश्रितापराधव्यतिरिक्तसर्वज्ञ इति विप्रतिषि-द्धम्; न; तदपराधेष्वतात्पर्येणोपेक्षा ह्यज्ञानं विवक्षितम् 'उपेक्षते हि तेषां दोषम्' इति ॥

### भावप्रकाशः

'दोषो यद्यपि तस्य स्यात्'

इति—

'अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।

इति'। इत्युक्तम्। अत्र अविज्ञाता इति स्मृतेः श्रुतिविरुद्धार्थपरत्वं न घटत इत्यान्यपर्योपपादनेन 'दोषानवभासः' इति व्यासार्योक्तिरप्युक्तार्थिकेति स्फुटम्। तेन 'आश्रितदोषजोषणः' 'दोषेषु गुणत्वबुद्धिः' इति वाक्यद्वयमुक्तार्थकमिति निर्णीतम्। एवं वदतां भट्टार्याणां 'परदुःखदुःखित्वादयो गुणाः कथमस्य स्युः' इति पूर्ववाक्ये प्रागुक्त एवार्थ इति न तिरोहितं विदुषाम्। अतो वात्सल्य दोषानादरहेतुः स्नेह इत्येव प्राचीनाचार्यसंमतम् ॥

'स्वामिन्! न चित्रमिदमाश्रितवत्सलत्वम्'

इति स्तोत्रभाष्ये 'स एष वात्सल्याख्यो गुणस्सर्वाविशेषेण कठवल्ल्यामुक्तः ;

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥

इति। उपबृंहितं च ;—

'रिपूणामपि वत्सलः'

इति। इत्यत्र श्रुतिरुदाहृता ;—

'दोषो यद्यपि तस्य स्यात्'

इत्यनन्तरम् ;—

'सतामेतदगार्हितम्'

इति वाक्यम् ॥

एवं च श्रुतिस्मृतिभ्यां वात्सल्यमुक्तरूपमेव। 'वत्सांसाभ्यां

## भावप्रकाशः

कामबले' इति सूत्रे कामबलशब्दावच्प्रत्ययान्तौ 'वत्सलः—स्नेहवान्' इति मनोरमाकाशिकयोरुक्तम्। स्निग्धस्तु वत्सलः इत्यमरः॥

यद्यपि काशिकादौ वत्सशब्दः कामार्थकः लच आश्रयोऽर्थः इति व्यवस्थापितम्; तथाऽपि स्नेहप्रतिसंबन्धिपदान्तरासमभिव्याहृताद्वत्सलशब्दात् स्नेहप्रतिसंबन्धिविनिर्मुक्तस्नेहवद्रूपार्थप्रतीतेः कस्याप्यनुभवस्याभावेन कामबले इति प्रत्ययार्थ एव निर्दिष्टस्सूत्रे इत्येव युक्तम्। कामबलशब्दावर्श आद्यजन्तावेव। प्राकरणिकमतुप्समुच्चयस्यास्मिन् सूत्रे काशिकादावपि परित्यागात्। उक्तरीत्यैव निर्वाहे वत्सांसशब्दयोः कामबलार्थकत्वकल्पनस्यायोगाच्च। अत एव 'भक्तस्नेहित्वाद्वत्सल' इति शाङ्करसहस्रनामभाष्यम्; वत्से—पुत्रादिस्नेहपात्रे अभिलाषोऽस्यास्तीति 'वत्सांसाभ्यां' इति लच् इत्यमरसुधा च संगच्छते। एतदेवाभिप्रेत्य वत्सान् स्वोत्सुकान् कामयते, 'उपेक्षते हि तेषां दोषम्' इति भट्टार्यैः तदनुसारिभिरष्टादशरहस्यकारैरपि बहुत्र वत्से कामः वात्सल्यमित्येवोक्तम्। तदेतत्सर्वमभिप्रेत्य गद्यभाष्ये;—वात्सल्यं दोषतिरस्कारिणी प्रीतिरित्युक्तम्॥

एतेन वत्सस्येदं वात्सम्। वात्सं लाति—आदत्ते इति वा लीते आस्वादयति वा वात्सला। आद्ये 'आतोऽनुपसर्गे' इति कप्रत्ययः द्वितीये अन्यत्रापि दृश्यते इति डप्रत्ययः। वात्सलायाः कर्म वात्सल्यम्; ब्राह्मणादेराकृतिगणत्वात् ष्यञ्' इति (व. भू.) वृत्तिविवरणे वीरराघवेण हठात् स्वोत्प्रेक्षितार्थसाधनमनुचितम्। वत्सलः वत्सला इत्यत्र पूर्वोक्तरीतेराश्रयणीयतया तत एव निर्वाहात्। वात्सलः वात्सला इति क्वापि प्रामाणिकप्रयोगविरहात्। उक्तरीत्या गुणवचनवत्सलशब्दात् ष्यञ्स्संभवे ब्राह्मणादिगणपाठकल्पनस्यान्याय्यत्वात्।

### भावप्रकाशः

वत्सलनामभाष्ये शरणागतेषु वत्सेषु धेनव इव संभ्राम्यतीति रावणेऽपि प्रसिद्धम् ;—

विदितस्स हि धर्मज्ञश्शरणागतवत्सलः ।

इत्येवोक्तेः । वात्सलशब्दघटितप्रमाणविरहेण सर्वैरपि वत्सलशब्द-घटितप्रमाणस्यैव पुरस्करणीयत्वात् ॥

स तं निपतितं भूमौ शरण्यश्शरणागतम् ।
वधार्हमपि काकुत्स्थः कृपया पर्यपालयत ॥

इत्यत्र शरणागतशब्दस्य 'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' इत्यत्र प्रपन्नशब्दस्य च सत्त्वेन प्रपत्तेरेव पालनहेतुतायास्सिद्धया चेतनदोषस्य भगवतः भोग्यत्वपरिग्रहहेतुत्वगुणत्वग्राहकानन्यथासिद्ध-वात्सलशब्दघटितप्रमाणविरहेऽपि वात्सल्यशब्दस्योत्प्रेक्षितार्थकल्पन-स्यान्याय्यत्वात् । अतः वत्सलशब्दघटितप्रमाणपाणिनिसूत्रसंप्रदायानु-सारेणान्तरधिकरणश्रुतप्रकाशिकागद्यभाष्योक्तमेव रमणीयम् । एवं च व्यासार्योक्त्यनुसारादपि (२-२-३) भाष्ये दयावात्सल्ये यथोक्त एव । भट्टार्यैश्च प्रायश्चित्तभूतयोर्भक्तिप्रपत्त्योरप्यकाम्यत्वेन आज्ञा-रूपत्वम्—

आज्ञा ते सनिमित्तनित्यविषयस्स्वर्गादिकाम्याद्विधिस्सोऽनुज्ञा (रं. स्तो. २१).

इत्यत्रोक्तम् । तयोः काम्यत्वाभावः—

निष्कृत्यात्मत्वमस्योदितदुरितसमुन्मूलनस्योपपन्नम्
नात्र स्वर्गादिनीतिः प्रतिहतिविगमे धीविकासस्स्वतो हि
(अ. ४-१-२०).

इत्यत्र समर्थितः । एवमेव श्रुतप्रकाशिकायामपि । व्याकरणा—

## भावप्रकाशः

धिकरणे (त. वा.) कुमारिलेन 'प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थमकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्तव्यानि' इत्युक्त्या दुरितक्षयमात्रफलकत्वेन अकाम्यस्य (वे. सं.) उपासनादेः प्रायश्चित्तरूपनैमित्तिकस्याप्याज्ञारूपत्वं युक्तमेव ॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः (९-१३)

इत्यत्र 'ये तु स्वकृतैः पुण्यसञ्चयैः मां शरणमुपगम्य विध्वस्तसमस्तपापबन्धाः दैवीं प्रकृतिमाश्रिताः महात्मानः इति ।

दैवी संपद्विमोक्षाय निबन्धायासुरी मता । (१६-५).

इत्यत्र दैवी मदाज्ञानुवृत्तिरूपा संपत् । आसुरी तु मदाज्ञातिवृत्तिरूपा इति च भाष्येण पञ्चमहायज्ञैकादश्युपवासादिकमातिवर्तमानानामासुरत्वस्यैव प्रतिपादनात् । रचनानुपपत्त्यधिकरणभाष्येऽपि वेदार्थसंग्रहानुरोधेन उक्तार्थस्य विवक्षितत्वाच्च सुकृतभगवदुपासनादिविहितं कर्मातिवर्तितुं ये व्यवस्यन्ति तथैव प्रयतन्ते तेषु ;—

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥

इति गीतोक्त्या भगवतो न दया प्रसरतीति विवक्षितम् । तत्त्वसारोक्तौ अनसूयापरेण 'दुष्कर्मव्यवसायतस्तुविरत' इत्यनेन ;—

'चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन'

इत्युक्तदिशा भक्तेः सुकृतहेतुकत्वं विद्विषताम् ।

'न मां दुष्कृतिनः'

इति पूर्वोक्तदिशा लक्ष्मीसहायकारुण्यविषयता नास्तीति द्योतितम् इति विदुषां व्यक्तम् । एवं च ऐतरेयश्रुतिलक्ष्मीतन्त्रादिविरोधेन मुक्तिफलोपधायिनी कृपा निर्हेतुका इत्यादिकमप्यन्यपरम् । अतः

**भावप्रकाशः**

कर्मानुगुणफलदायिनो भगवतः स्वातन्त्र्यमप्रत्यूहमित्येव द्रमिडभाष्यकृदनुयायिनां भगवद्भाष्यकारादीनां सिद्धान्तः ॥

अतः 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्यत्र सृष्ट्यनन्तरकालिकचेतनानुभाव्यफलवैषम्यसामान्यं विवक्षितमिति न्यायतस्साधनेन नकुलीशपाशुपतमिव केषांचिन्मतमपि व्यासेनैव निरस्तम् ॥

अत्र व्यासद्रमिडभाष्यकृन्मते (सि. उ. सु.) (गी. अं. त. प्र.) केश्चिदुत्प्रेक्षिता दोषा न लगन्तीति रचनानुपपत्त्यधिकरणश्रीभाष्ये फलसंविभत्सयेति वाक्योपादानात्पूर्वं कापिलशङ्कासमाधानसूक्तिषु तदुत्तरसूक्तिषु च विदुषां स्फुटम्। तथा हि;—'न च वाच्यं प्राज्ञाधिष्ठितत्वेऽपि तस्यावाप्तसमस्तकामस्य परिपूर्णस्यानवधिकातिशयानन्दस्य निरवद्यस्य निरञ्जनस्य सर्गप्रतिसर्गव्यवस्थाहेत्वभावाद्विषमसृष्टौ निर्दयत्वप्रसङ्गाच्च समानोऽयं दोष इति; परिपूर्णस्यापि लीलार्थत्वसंभवात्। सर्वज्ञस्य तस्य परिणामविशेषापन्नप्रकृतिदर्शनरूपसर्गप्रतिसर्गाविशेषहेतोस्संभवात्। क्षेत्रज्ञकर्मणामेव विषमसृष्टिव्यवस्थापकत्वाच्च इति ॥

नन्वेवं पुण्यापुण्यकर्मभिरेव सर्वा व्यवस्थास्सिध्यन्तीति कृतमीश्वरेण? अनभिज्ञो भवान् पुण्यापुण्यकर्मस्वरूपयोः। पुण्यापुण्यकर्मस्वरूपे हि शास्त्रैकसमधिगम्ये। शास्त्रं च वेदाख्याक्षरराशिः। तच्च परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्यापुण्ये; तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे इति वदति। तथाऽऽह द्रमिडाचार्यः;—'फलसंविभत्सया कर्मभिरात्मानं पिप्रीषन्ति। स प्रीतोऽलं फलायेति शास्त्रमर्यादा' इति। 'स भगवान् पुरुषोत्तमः स्वमाहात्म्यानुगुणलीलाप्रवृत्तः एतानि कर्माणि समीचीनान्येतान्यसमीचीनानीति कर्मद्वैविध्यं सविधाय' इत्यादि। 'पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते

भावप्रकाशः

शासनातिवर्तिनं तद्विपर्ययैर्योजयति' इत्यादि 'अतः प्राज्ञानधिष्ठितं प्रधानं न कारणम्' इत्यन्तं श्रीभाष्यम्। अतः—स्वातन्त्र्यवैकल्यादिप्रसङ्गाभावेन कर्मणां तदाराधनरूपतयैव फलजनकत्वात्' इति श्रुतप्रकाशिका। अत्र 'न च वाच्यं इत्यादि समानोऽयं दोष' इत्यन्तग्रन्थे 'न प्रयोजनवत्त्वात्' इत्यत्र पूर्वमीमांसकवत् निरीश्वरसांख्यानां पूर्वपक्षः। परिपूर्णस्यापीत्यादि विषमसृष्टिव्यवस्थापकत्वाच्चेत्यन्तग्रन्थे समाधानमपि 'लोकवत्तु लीलाकैवल्यम्' 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्यत्रोक्तमेवेति नन्वेवमित्याद्यनन्तरग्रन्थोऽपि सूत्रद्वयार्थप्रतिष्ठापनार्थ इति च न तिरोहितं विदुषाम्॥

तत्र 'लोकवत्तु लीलाकैवल्यम्' इत्यत्र सृष्टेः भगवदर्थत्वम् 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्यत्र सृष्टेः दयामूलकत्वेन जीवार्थत्वमिति व्यक्तम्। श्रीभाष्येऽपि स्वार्थः परार्थो वेति विकल्पितकोटिद्वयं सूत्रद्वयेन साधितम्। एवं च सृष्टेर्जीवार्थत्वे सृष्ट्यनन्तरकालिकमपि जीवफलं विषममभिसधायापि दोष उद्भाविते सृष्ट्यनन्तरकालिकविषमफलोपधायकदयायाः कर्मापेक्षत्वेन परिहार उक्तः द्वितीये॥

एवं च भगवदानन्दः जीवानन्दश्चेत्युभयमपि सृष्टेः फलमित्युक्तं भवति। समष्टिसृष्टौ कर्मद्वैविध्ये च भगवदानन्द एव फलम्। व्यष्टिसृष्टावपि भगवदानन्दः प्रधानं फलमित्यभिप्रेत्य 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रं प्रथमं प्रववृते। भगवद्भाष्यकारैरपि सर्वत्र सृष्टेर्लीलारूपत्वमुक्तम्। एवमेव तत्त्वत्रयेऽपि। एतेन भगवतश्शेषित्वं निर्व्यूढम्॥

जीवानन्दो द्विविधः बन्धानुकूलो मुक्त्यनुकूलश्चेति। द्विविधानन्दफलकः प्रलयकालेऽचिदविशेषितेषु जीवेषु करणकलेवरदानादिस्सामान्योपकारः निर्हेतुककृपामूलः अविषमत्वात्। विशेषोपकारमुखेन

## भावप्रकाशः

द्विविधजीवानन्दफलोपधानमपि कर्मसापेक्षकृपामूलकमेव अर्धजरतीयस्यान्याय्यत्वात् प्रमाणाभावाच्च । अतो यथेष्टविनियोगसमर्थपरस्वातन्त्र्यनिबन्धन एतत्कर्मकारिणे एतत्फलं दास्यामीति संकल्प उभयत्राविशिष्ट एवेति द्वितीयसूत्रमप्रधानजीवानन्दद्वयाभिप्रायकमुदियाय । अत एव भगवता भाष्यकृता अत्र (२-१-३) लीलाफलाया अपि सृष्टेः निर्हेतुककृपामूलकत्वं पुण्यहेतुककृपया फलं च ख्यापितम् । सामान्यविशेषोपकारद्वयमूलमपि कर्तृत्वं परमात्मायत्तमिति 'परात्तु तच्छ्रुतेः' इत्यत्रोक्तम् ॥

सर्वत्र प्रथमं पूर्वकर्मफलप्रदानाभिसंधिना सामान्योपकारमुखेन च भगवतस्साधारणकारणत्वेन साधनान्तरानुष्ठापनेच्छाविशेषोपकारयोरभावेन तन्मात्रेणोपेक्षकत्वम् । साधनान्तरानुष्ठापनेच्छया विशेषोपकारसंपादकत्वमनुमन्तृत्वं पश्चात् ॥

क्वचित्तु प्राचीनादृष्टफलाभिसंन्धिमिश्रया साधनान्तरानुष्ठापनेच्छया प्रथममेव विशेषोपकारसंपादकत्वेन प्रयोजकत्वम् । तत्परा 'एष एव साधुकर्म कारयति' इति श्रुतिः । विशेषोपकारश्च भोगादृष्टप्रवाहकारितः विशेषसन्निधिः इति प्रथमप्रवृत्तस्य अनुमन्तृत्ववत् अत्यन्तानुकूलप्रतिकूलयोः प्रयोजयितृत्वमपि फलदानकल्पमिति 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इत्यत्र कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति च जिज्ञासाधिकरणे व्यासार्यैरुक्तम्; न तु प्रथमप्रवृत्तिः परमात्मानधीनेति । न च 'अनुमन्तृत्वं कर्मसापेक्षं प्रयोजयितृत्वं तु तन्निरपेक्षमिति; न वा प्रयोजयितृत्वमात्रेण तत्र भोगादृष्टविशेषप्रवाहः प्राचीनादृष्टफलाभिसन्धिस्सामान्योपकारः भगवतस्साधारणकारणत्वं च नास्तीति; सर्वकार्यसाधरणत्वेन तन्निषेधायोगात् । अत्र प्रयोजयितृत्वे प्रथममेव अत्यन्तानुकूल्यादिफलाभिसन्धिवत् साधनान्तरानुष्ठापनेच्छाया अपि सत्त्वेन

## भावप्रकाशः

फलदानरूपमित्यनुक्तिः । एवं च 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इति सूत्रं 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति सूत्रसमानार्थकमेव । विहितप्रतिषिद्धावैयर्थ्ययोरिव आदिपदार्थानुग्रहनिग्रहयोरपि कृतप्रयत्नापेक्षत्वाभ्युपगमेनैव निर्वाह्यत्वात् निग्रहस्य कृतप्रयत्नापेक्षत्वस्यावश्यकतया अनुग्रहांशे कृतप्रयत्नापेक्षत्वस्य तात्पर्याविषयत्वोक्तेरयोगाच्च । अत एव अत्र श्रीभाष्ये अनुग्रहनिग्रहयोः अतिमात्रपरमपुरुषानुकूल्यप्रातिकूल्यप्रवृत्तिसापेक्षत्वोक्तिस्संगच्छते । अतोऽत्रापि 'परात्तु तच्छ्रुतेः' इत्यत्र परानन्दः प्रधानमिति 'कर्ता शास्त्रार्थवत्त्वात्' इति सूत्रे जीवानन्दद्वयं यदुक्तं तत् 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इति सूत्रे अप्रधानमिति च दर्शितम् । एतेन सर्वत्र भगवतश्शेषित्वेन लीलार्थप्रवृत्त्या च कैश्चिदुक्तं सृष्टेः कृपामूलकत्वेन भगवतः चेतनरक्षणे प्रथमप्रवृत्त्या रक्षणस्य निर्हेतुकत्वं नघटत इति सिद्धम् ॥

अतश्च निर्हेतुककारुण्यसंवलितस्वातन्त्र्येण अप्रधानजीवानन्दफलकस्वानन्दं प्रधानफलमभिसंधाय भगवान् सर्वामपि सृष्टिं कर्मद्वैविध्यं एतत्कर्मकारिणे एतत्फलं ददामीत्यादिव्यवस्थां चारचयन् जीवानन्दद्वये अप्रधानभूते निर्हेतुकसहजकारुण्यपरीवाहरूपां व्यवहितसाधनत्वादिरूपाप्रधानताश्रयचेतनव्यापारहेतुकां फलोपधायिनीं कृपामवलम्बते इति व्यासद्रमिडभाष्यकारादिसिद्धान्तघण्टापथः ॥

रचनानुपपत्त्यधिकरणश्रीभाष्ये 'क्षेत्रज्ञकर्मणामेव विषमसृष्टिव्यवस्थापकत्वाच्च' इत्यनन्तरम्; 'नन्वेवं क्षेत्रज्ञपुण्यापुण्यकर्मभिरेव सर्वा व्यवस्थास्सिध्यन्तीति कृतमीश्वरेणाधिष्ठात्रा' इति शङ्काभाष्येण 'पूर्वपूर्वकर्मानुगुण्येनैव व्याजकल्पनमिति न दोषः इति चेत् कृतमीश्वरेण शास्त्रेण च इत्यादिगीतान्तस्स्थतत्वप्रकाशिकोक्तदूषणमपि क्रोडीकृतम् ॥

## भावप्रकाशः

'अनभिज्ञो भवान् पुण्यापुण्यकर्मस्वरूपयोः' इत्यादिना 'तत्फले सुखदुःखे वदति' इत्यन्तेन भाष्येण (गी. अ. त. प्र.) उक्तदूषणमपि परिहृतं भवति ॥

पुण्यापुण्यादृष्टतत्फलस्वरूपपरिज्ञानार्थं शास्त्रमावश्यकम् । इदं च निरीश्वरमीमांसकानामपि संमतम् । पुण्यापुण्ययोः परमपुरुषाराधनतद्विपर्ययरूपत्वेन इश्वरनिग्रहानुग्रहायत्तत्वात्सुखदुःखयोः स्वतन्त्रकर्मानुगुणफलप्रदेश्वरावश्यकता । ईश्वरानभ्युपगमे मुक्तिस्वरूपस्य परिज्ञानं न संभवतीत्यपि तदावश्यकता ॥

यच्च 'ईश्वरस्य कर्मकिङ्करत्व अनादिवैषम्यनैर्घृण्यप्रसङ्गश्चेति केषांचिद्दूषणद्वयम्' तत् 'स्वमाहात्म्यानुगुणलीलाप्रवृत्तः' इत्यादिभाष्येण समाहितमिति पूर्वमेव निरूपितम् ॥

याच 'आनुकूल्यव्यवसायादिचेतनव्यापाराणां सिद्धोपायफलत्वमेव । स्तनन्धयस्तन्यदानार्थं मातुर्हेत्वन्तरापेक्षवत् स्वशेषभूतचेतनसंरक्षणे भगवतस्सहायान्तरापेक्षाया हेयत्वात् । चेतनकर्तृकप्रातिकूल्यव्यवसायस्य प्रतिबन्धकताकल्पनेनैकेनैव सर्वदोषपरिहारे सति हेत्वन्तरकल्पनायां गौरवाच्च इति केषांचिदुक्तिः; सापि; 'स्वशासनावबोधि शास्त्र प्रदर्श्य' 'क्षेत्रज्ञास्तु स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणी उपाददते । ततश्च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते' इत्यादिभाष्येण निरस्ता । प्रातिकूल्यव्यवसायतदाऽऽचरणयोर्बन्धहेतुताया भाष्यकृता शास्त्रसिद्धत्वमुक्तम् । न तु प्रातिकूल्यव्यवसायः रक्षणप्रतिबन्धकः न प्रतिकूलाचरणमितीति ॥

आरभ्य कर्माणि गुणान्वितानि
भावांश्च सर्वान् विनियोजयेद्यः । (श्वे. ६–४)

भावप्रकाशः

नित्यो नित्यानां चेतनश्चेतनानाम्
एको बहूनां विदधाति कामान् ॥ (१३)

इत्यादिश्रुतयोऽत्र विवक्षिताः। कल्पने गौरवं दोषः; न तु भगवच्छासने। प्रातिकूल्यव्यवसायवतेऽपि स्तनन्धयाय मातुः स्तन्यप्रदानार्थं लोके प्रवृत्तेर्दर्शनात् कथं भगवतश्चेतनरक्षणे प्रातिकूल्यव्यवसायस्य प्रतिबन्धकता कल्प्यते? प्रातिकूल्यव्यवसायनिवृत्तिं सिद्धोपायफलभूतां कुतो न वदसि? प्रातिकूल्यव्यवसायादीनां निग्रहद्वारा रक्षणप्रतिबन्धकतापरायाः 'एष एवासाधु कर्म कारयति' इति श्रुतेश्शरणीकरणे तत्सहपठिता 'एष एव साधु कर्म कारयति' इति श्रुतिरानुकूल्यव्यवसायादिचेतनव्यापाराणामनुग्रहहेतुत्व प्रतिपादयन्ती जागर्त्येवेति। एवं वदन्तं शसनातिवर्तिनं मोक्षविपर्ययेणयोजयत्येव भगवानिति भाष्यकृतोक्तप्रायम्। हेयाहेयविभागस्य शास्त्रेणैव निश्चेयत्वोक्तेः ॥

यच्च 'तेषां सततयुक्तानाम्' इत्याद्यत्रत्यगीतावचनद्वयस्य प्रातिकूल्याभिसन्धिराहितानां भगवत्कामनया तद्विषयप्रवृत्तिरवश्यं भाविनीति सततयोगाशंसापूर्वकभजनस्य प्रातिकूल्याभिसन्धिविराममात्ररूपत्वमित्याशयवर्णनम्; तदप्येतेन समाहितम्—

चतुर्विधा भजन्ते मां जनास्सुकृतिनः . . . . ।
येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥

इत्याद्यन्तगीतावचनविरोधात्। भक्तिप्रयोजककर्मणो दुरितनिवर्तकत्वोक्त्या भगवच्छासनरूपताया बोधनात्। तन्मध्ये 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इत्येतत्संग्राहकत्वात् 'तेषां सततयुक्तानाम्' इत्यस्य।

अनन्यचेतास्सततं यो मां स्मरति नित्यशः (८-१४)।

S. 1331

## भावप्रकाशः

इत्यत्र वक्ष्यमाणस्मृतावपि ; —

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च (८—७) ।

इत्युक्तयुद्धादिनित्यनैमित्तिकसाध्यत्वस्याप्रत्याख्येयत्वात् ॥

एवमत्र (२-२-३) भाष्ये पूर्वं 'फलसंविभक्तया' इत्येतदुत्तरम् ;—

स्वकर्मणा समभ्यर्च्य सिद्धिं विन्दति मानवः ।

इति गीतावचनोदाहरणेन गीताभाष्ये स्वकर्मणेत्येतदुत्तरस्य 'भक्त्या मामभिजानाति' इत्यन्तस्य नित्यनैमित्तिककर्मविपाकपरत्वोक्त्या 'तेषां सततयुक्तानाम्' इति (२-२-३) उत्तरोदाहृतवचनस्य तद्विरुद्धार्थवर्णनस्यानुचितत्वात् ॥

वेदार्थसंग्रहेऽपि—'उभयपरिकर्मितस्वान्तस्य ऐकान्तात्यन्तिकभक्तियोगलभ्यः' इति यामुनसूक्तौ 'विद्यां चाविद्यां च' इत्यादिश्रुतिं प्रमाणत्वेनोदाहृत्य 'विद्याशब्देन भक्तिरूपापन्नध्यानमुच्यते' इत्युक्त्वा 'भक्त्या मामभिजानाति' 'स्वकर्मणा तमभ्यर्च्य' इति गीतावचने अप्युदाहृत्य 'यथोदितक्रमपरिणतभक्त्येकलभ्य एव' इत्युपसंहृतम् । 'यथोदितेति;—यथोक्तकर्मानुगृहीतक्रमपरिणतभक्त्येकलभ्य इत्यर्थः' इति तात्पर्यदीपिका ॥

श्रीभाष्येऽपि—'विद्यां चाविद्यां च' इति श्रुत्या भक्तिरूपायां विद्यायां कर्मनिष्पाद्यत्वमुक्तम् । किंच परायत्ताधिकरणभाष्ये वेदार्थसंग्रहे च 'एष एव' इति श्रुतिविवरणदशायाम् आनुकूल्यप्रातिकूल्यप्रवृत्त्योरनुग्रहनिग्रहहेतुत्वमभिधाय तद्वचनद्वयसहभावेन 'तानहम्' इत्यादिवचनोदाहरणेन तानहमित्यत्र प्रातिकूल्याभिसन्धिमात्रविवक्षाभावे तत्प्रतिकोटिवचनेऽपि प्रातिकूल्याभिसन्धिविराममात्रं विवक्षित-

मिति कथमुत्प्रेक्ष्यते? एष एवेति श्रुत्यर्थवर्णनघट्टकस्य रचनानुपपत्त्यधिकरणभाष्यस्य चैककण्ठ्यं तात्पर्यदीपिकायाम् 'एष एव' इति श्रुत्यर्थवर्णनावसरे एतद्भाष्यमनुसृत्य दयायास्सावकाशत्वकथनेन मूलोक्तस्यासाधुकर्मकारयितृत्वान्नैर्घृण्यदोषस्य परिहारेण परायत्ताधिकरणभाष्ये 'पापकर्मसु निवर्तनशक्तस्याप्यनुमन्तृत्वं न निर्दयत्वमावहति इति सांख्य समयनिरूपणे प्रतिपादितम्' इत्युक्त्या च दृढीकृतम् ॥

किंच परायत्ताधिकरणे 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इति सूत्रे आदिपदेन अनुग्रहनिग्रहादयो गृह्यन्ते इत्यभिधाय अतिमात्रपरमपुरुषानुकूल्यप्रातिकूल्यप्रवृत्त्योर्भगवदनुग्रह—निग्रहहेतुत्वं 'एष एव' इत्यादिश्रुतितात्पर्यविषय इत्युक्त्वा तत्र प्रमाणतया गीतावचनोदाहरणेन गीतावचनेऽपि 'भजस्व माम्' इति पूर्वस्मिन्नध्याये विहितस्यैवानुग्रहहेतुत्वं विवक्षितमिति। 'यथोक्तम्' तेष-सततयुक्तानाम्' इत्येतद्विवरणावसरे;—'यथोक्तमिति—प्रथमप्रवृत्तस्यानुमन्तृत्ववत् अत्यन्तानुकूलप्रतिकूलयोः प्रयोजयितृत्वमपि फलदानां कल्पम्' इति व्यासार्यैरुक्त्या 'ददामि बुद्धियोगं तम्' इत्युक्तप्रयोजयितृत्वं प्रति 'भजताम्' इत्यनेनोक्तात्यन्तानुकूल्यप्रवृत्तेर्हेतुत्वं विवक्षितमिति च बोधितम् ॥

वेदार्थसंग्रहे;—'ये मे मतमिदं नित्यमनुतिष्ठन्ति' इत्यादिवचनसहभावेन 'तानहम्' इति वचनोपादानेन 'तेषां सततयुक्तानाम्' इति वचनेऽपि विहितस्यैव विवक्षा ख्यापिता ॥

अतः 'तानहं द्विषतः' इत्यत्र द्विषत इतिवत् 'तेषां सततयुक्तानां भजताम्' इत्यत्र भजतामित्यस्य हेतुसमर्पकस्य सत्त्वेऽपि

### भावप्रकाशः

प्रातिकूल्याभिसन्धिविरामवाचकपदाभावेऽपि प्रातिकूल्याभिसंधिविराम-मात्रपरत्वाभ्युपगमे श्रुतहानमश्रुतकल्पनं चापरिहार्यमेव ॥

वेदार्थसंग्रहे 'यस्तु पूर्वं स्वयमेवातिमात्रानुकूल्ये प्रवृत्तः तं प्रति प्रीतः स्वयमेव भगवान् कल्याणबुद्धियोगदानं कुर्वन् कल्याणे प्रवर्तयति' इत्येतद्वचनार्थ उक्तः । अत्र प्रीतशब्देन 'फलसंविभक्तसया कर्मभिरात्मानं पिप्रीषन्ति' इति द्रमिडभाष्यमनुसंहितमिति प्रतीयते ॥

अत्र प्रथमं स्वयमेवेत्यनेन अतिमात्रानुकूल्ये प्रयोजयितृत्वं नास्तीति स्फुटम् ॥

(२-२-३) भाष्येऽपि स्वयमेव स्वेच्छानुगुण्येनेत्यनेन मोक्ष-वर्धनप्रयोजकक्षेत्रज्ञपुण्यरूपशासनविषयेऽपि प्रयोजयितृत्वं नास्तीति यादृच्छिकमात्रसापेक्षत्वेन सङ्कोचोऽपि अनुचित इति च बोधितम् ॥

एवं ;—

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।

इति गीताभाष्यादौ जिज्ञासाधिकरणश्रुतप्रकाशिकायामपि अयमर्थोऽ-वसेयः ॥

एवमानुकूल्यव्यवसायादिचेतनव्यापारे चेतनस्यैव प्रथमप्रवृत्तेः भाष्यकृदुक्तत्वेऽपि प्रथमनिर्मितवेदार्थसंग्रहे एतत्समानार्थकप्रघट्टकोदा-हृतम् ;—

श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।

इति गीतावाक्ये अनसूयन्तः इति पदमभिप्रेत्य 'शासनातिवृत्तिव्यवसाय-निवृत्तिमात्रेण' (२-२-३ सू.) इति वाक्यं प्रवृत्तमिति भाष्यकृदाशयस्य; 'इदानीमननुतिष्ठन्तोऽप्यस्मिन् शास्त्रार्थे श्रद्दधाना अनभ्यसूयवश्च श्रद्धया चानसूयया च क्षीणपापा अचिरेणेममेव शास्त्रार्थमनुष्ठाय मुच्यन्ते' इति

## भावप्रकाशः

वाक्यस्य 'पुण्यरूपकर्मणारिणं- मोक्षैर्वर्धयते' इति पूर्ववाक्यस्यापि विरुद्धार्थकल्पनायोगस्य; 'पापकर्मसु निवर्तनशक्तस्याप्यनुमन्तृत्वं न निर्दयत्वमावहतीति साङ्ख्यसमयनिरूपणे प्रतिपादितम्' इति परायत्ताधिकरणभाष्यटीकायाम्—'पापकर्मस्वित्यादि; अन्यत्र दयायास्सविषयत्वादित्यर्थः। अल्पानुकूल्येन विपुलापराधसहत्वाद्दयादिगुणानां सविषयत्वादिति' इत्युक्तावत्रोक्तशासनातिवृत्तिव्यवसायनिवृत्तेरल्पानुकूल्यरूपतायाश्च विदुषां स्फुटत्वेऽपि आनुकूल्यव्यवसायादिचेतनव्यापाराणां सिद्धोपायफलत्वमेव; प्रातिकूल्याभिसन्धिविराममात्रमेव विवक्षितमिति व्यवसायश्शासनातिवृत्तिव्यवसाय एव पर्यवस्यति ॥

यच्च सिद्धतात्पर्यटिप्पण्याम्;—'सततयोगं काङ्क्षमाणा ये भजन्ते तेषां तं भजनात्मकं बुद्धियोगम्' इत्युपक्रम्य 'तस्मात्सततयोगमाशंसमाना भजन्तीति यत् तं बुद्धियोगमहमेव ददमीति भगवतोच्यते। अत एव 'भक्त्या मामभिजानाति' इति वचने तदनन्तरं मां तत एव भक्तितो विशत इति व्याख्यानमुपपद्यत इत्युक्तम् ॥

तत्र 'भजताम्' इत्यत्र भजधात्वर्थस्तेनैव रूपेण 'ददामि बुद्धियोगं तम्' इत्यत्र तच्छब्देन बोध्यतया यदि विवक्षितस्स्यात् तदैव स्वाभीष्टसिद्धिः न त्वन्यथा। तथा विवक्षा च न भगवतो वक्तुं शक्या; पूर्वार्धे भजतामित्येतत्प्रयोगवैयर्थ्यात्। उत्तरार्धे तच्छब्दं परित्यज्य 'बुद्धिं भक्त्याख्याम्' इत्यादिप्रयोगेण तदर्थलाभसंभवात्। यथाप्रयोग तमित्यस्य आशंसाविषयान्तर्गतमेवेत्यर्थः (ता. च.) येनेत्यस्य सत्त्वेन भजन्तीति यत् तमित्यर्थः न विवक्षित इति गीताभाष्ये तमेव बुद्धियोगं विपाकदशापन्नमिति भाषितम्। अत्र विपाकदशापन्नम् इत्यनेन भजतामत्यत्रोक्तार्थस्तेनैव रूपेण देयतया न विवक्षित इति स्फुटम् ॥

### भावप्रकाशः

एवम् 'अनन्यचेताः' इति श्लोकभाष्येऽपि मत्प्राप्त्यनुगुणोपासनविपाकं तद्विरोधिनिरसनमत्यर्थमत्प्रियत्वादिकं च अहमेव ददामीत्यभिधाय 'तेषां सततयुक्तानाम्' इति वचनमुपात्तम्। 'तेषां सततयुक्तानाम्' इत्येतद्भाष्योक्ता विपाकदशा च 'भक्त्या मामभिजानाति' इत्येतद्वचनेन वक्ष्यते ॥

'मद्भक्तिं लभते पराम्' इत्येतद्विवरणानन्तरम् 'तत्फलमाह' इति 'भक्त्या मामभिजानाति' इति श्लोकमवतार्य तच्छ्लोकविवरणानन्तरं 'एवं वर्णाश्रमोचितनित्यनैमित्तिककर्मणां विपाक उक्तः' इत्यनेन 'स्वकर्मणा तमभ्यर्च्य' इत्याद्येतदन्तप्रघट्टार्थोक्तेः; (२-२-३) श्रीभाष्ये 'स्वकर्मणा तमभ्यर्च्य' 'तेषां सततयुक्तानाम्' इत्यनयोरुपक्रमोपसंहारयोरुपादानेन गीताभाष्योक्तार्थविवक्षा स्फुटा ॥

'श्रुतत्वाच्च' 'धर्मं जैमिनिरत एव' इत्यत्रेदंशब्देन सजातीयपरामर्शवत् 'ततो माम्' इत्यत्र तच्छब्देन सजातीयपरमभक्तिपरामर्शः इति तात्पर्येण 'दर्शनोत्तरकालभाविन्या अनवधिकातिशयभक्त्या मां प्राप्नोतीत्यर्थ' इति भाषितम् ॥

वेदार्थसंग्रहेऽपि क्रमपरिणतभक्त्येकलभ्य इति निगमनेनायमर्थो विवक्षितः। तथा च तात्पर्यदीपिका ;—'भक्त्येति परभक्तिरुच्यते। अभिजानातीति परज्ञानमुच्यते। तत इति परमभक्तिरुच्यते' इति ॥

एवं च ;—चतुर्विधा भजन्ते मां जनास्सुकृतिनः' इत्युक्तसुकृतहेतुकत्वस्य 'येषां त्वन्तगतम्' इत्यत्र निग्रहनिवृत्तिद्वारकत्ववत्' भक्त्या मामभिजानाति' इत्यत्र वक्ष्यमाणं भक्तेर्हेतुत्वं भगवत्प्रसादद्वारकमिति 'ददामि बुद्धियोगं तम्' इत्यत्रोक्तं भवति । तथा च (२-२-३) उपसंहारे श्रुतप्रकाशिका ;—कर्मणां तदाराधनरूपतयैव फलप्रदत्वादिति ॥

## भावप्रकाशः

अतो 'ददामि बुद्धियोगं तम्' इत्यत्र तमित्यस्याशंसाविषयान्तर्गतमेवेत्यर्थः । परज्ञानोत्तरपरमभक्तेराशंसाविषयता 'भक्त्या माम्' इत्याद्यनुसारात् ।

नन्वेवमपि परज्ञाने भगवतः प्रयोजयितृत्वोक्त्या तत्फले चेतनव्यापारस्य कथं हेतुत्वमिति चेत्; प्रयोजयितृत्वस्य साधनान्तरानुष्ठापनेच्छया विशेषोपकारसंपादकत्वरूपस्य व्यासार्यैरुक्त्या परज्ञानादेर्हेतुत्वानपायात् । अयमर्थः;---'यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते तमनुगृह्णन् भगवान् स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेषु रुचिं जनयति' इत्यत्र स्फुटः । अत्र---अनुगृह्णन्नित्यनेन 'शासनानुवर्तिनं ज्ञात्वा कारुण्यात्' इत्यादि द्रमिडभाष्यं विवक्षितमिति प्रतीयते । एवं 'अनुग्रहात्मिका शक्तिस्सा कृपा' इति वचनार्थानुसन्धानेन ॥

'जीवे दुःखाभिसंतप्ते कृपा काप्युपजायते' ।

इति वचने कृपा--अनुग्रहः स च सहेतुक इति निर्णीतमिति बोध्यम् ॥

एतेन 'अन्यपरानपि भजतस्तच्छन्दानुवर्तनेन प्रियान् करोतीति प्रियकृत् ।

निराशीः कर्मसंयुक्तान् सात्वतांश्चाप्यकल्पयम्' ।

इति । अथोत्तरोत्तरगुणाविष्कारेण तां प्रीतिं वर्धयतीति प्रीतिवर्धनः ।

'भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तम्' ।

इति । तथा निरूढभक्तिपरकोटिभिः विहायसं पदमेव गम्यतेऽस्मादिति विहायसगतिः' इति सहस्रनामभाष्यं कैश्चित् (सि. ता. टी.) स्वानुकूलतयोदाहृतम्; तत्प्रतिकूलमेव जातम् । तत्र अन्यपरानपि भजत इत्यत्र भजनं प्रियकरणे हेतुः । अन्यपरानिति प्रयोजयितृत्व-

भावप्रकाशः

विशेषोपकारविवक्षया । तदुक्तं व्यासार्यैः ;—हेत्वन्तरासन्निधापितमपि विषयं बुद्धौ सन्निधापयतीति तत्सान्निधापनमेव विशेषः । ईदृशं विशेषोपकारं प्रथमत एव केषुचिदीश्वरः करोति तत्र प्रयोजयितृत्वामिति इति । तां प्रीतिं वर्धयति इत्यस्य पूर्ववाक्ये भजत इत्यनेनोक्तां प्रीतिं परज्ञानादिरूपेण वर्धयतीत्यर्थः ॥

अतः 'तेषां सततयुक्तानाम्' इत्यत्र भजनं बुद्धियोगदानहेतुरित्येव विवक्षितम् । तथाहि ;—

'मयि सर्वाणि कर्माणि सन्यस्य

ये मे मतमिदं नित्यमनुतिष्ठन्ति—मुच्यन्ते तेऽपि कर्मभिः' (३ अ.

इत्यत्र कृत्स्नज्ञानपूर्वककर्मणां बन्धहेतुकर्मनिवृत्तिः फलमित्युक्तम् (२ अ.) ॥

'न मां दुष्कृतिनो मूढाः' इत्यत्र दुष्कृतस्य मोहहेतुतावत्

'चतुर्विधा भजन्ते मां जनास्सुकृतिनः'

इत्यत्र तरतमभावापन्नस्य सुकृतस्य मुक्तितदितरफलकभक्तिहेतुत्वं विवक्षितम् इति पूर्वमेवोक्तम् । तच्च

'येषां त्वन्तगतं पापम्'

इति श्लोके भगवदौन्मुख्यविरोध्यनादिकालसंचितपापनिवृत्तिद्वारकत्वोक्त्या न दृष्टद्वारकम किन्त्वदृष्टद्वारकमिति सिद्धम् ॥

अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।

पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥ (वि. ६-८-१९)

साङ्केत्यं पारिहास्यं वा स्तोभं हेळनमेव वा ।

वैकुण्ठनामग्रहणमशेषाघविनाशनम् ॥ (भाग. ६-२ १४)

इत्यादिषु यादृच्छिकस्यापि पापनिवर्तकत्वस्यैव प्रतिपादनात् ॥

### भावप्रकाशः

एतेन 'अवजानन्ति मां मूढाः' 'महात्मानस्तु मां पार्थ' (९ अ. १३) इत्यत्रापि पूर्ववद्दुष्कृतसुकृतयोर्हेतुत्वं सिध्यति ॥

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । (९-१३)

इत्यत्रोक्तं ज्ञानस्य भक्तिहेतुत्वम् ।

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असम्मूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ (१०-३)

इत्यत्र पापनिवृत्तिद्वारकमिति प्रतिपादितम् ॥

तदधिगमाधिकरणे अघस्य विनाशकरणं वैदिककर्मायोग्यता-सजातियिकर्मारम्भरुचिप्रत्यवायहेतुशक्तेर्विनाशकरणम् । शक्तिरपि परम-पुरुषाप्रीतिरेव। तदेवं विद्या वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसंचय-जनिताप्रीतिं निवर्तयतीति भाष्योक्त्या अत्रापि कर्मज्ञानयोरदृष्टद्वारा भक्तिहेतुत्वं सिद्धम् ॥

अत्र ज्ञानस्य पापनिवर्तकत्वकथनेन ;—

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्प्येन योगेन युज्यते नात्र संशयः ॥ (१०-७)

इत्यत्रापि गुणविभूतिज्ञानस्य भक्तिविवृद्धिहेतुत्वं पापनिवृत्तिद्वारैवेति लभ्यते ॥

अहं सर्वस्य प्रभवः मत्तस्सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥

इति तदुत्तरश्लोके विभूतिज्ञानविपाकरूपभक्तिविवृद्धिप्रदर्शनपरे 'भाव-समन्विताः' इत्यत्र दिदृक्षागर्भता विवक्षितेत्यभिप्रेत्य 'मयि स्पृहया-लवः' इत्युक्तम् । तेन 'मद्भक्तिं लभते पराम्' इति वक्ष्यमाण परभक्तिर्विवक्षितेत्युक्तं भवति ॥

## भावप्रकाशः

अतः 'तेषां सततयुक्तानां भजताम्' इत्यत्र परभक्तिरेव भजधात्वर्थः। 'भक्त्या मामभिजानाति' इत्येतत्समानार्थकमेवेदं वचनम्। परभक्तेः परज्ञानपरमभक्तिहेतुत्वे द्वारप्रदर्शनपरम् 'तेषामेवानुकम्पार्थम्' इति। तत्र परज्ञानादिविरोधिनिरसनमपि भगवत्संकल्पद्वारकमिति बुच्यते॥

अत एव 'मामनुस्मर युध्य च' (८-७) इत्यत्र अहरहरनुस्मृतिकरं युद्धादिकं नित्यनैमित्तिकं च कर्म कुरु इति व्याख्याय 'अनन्यचेताः' (८-१४) इति श्लोकभाष्ये मत्प्राप्त्यनुगुणोपासनविपाकं तद्विरोधिनिरसनमत्यर्थमत्प्रियत्वादिकं च अहमेव ददामीत्यर्थः'। इत्युक्त्वा 'नायमात्मा' इति श्रुतेः 'तस्याहं सुलभः' 'नित्ययुक्तस्य' 'सततयुक्तानाम्' 'येन मामुपयान्ति ते' इत्यनयोश्चैकार्थत्वमभिप्रेत्य श्रुतेः एतद्वचनद्वयस्य च उदाहरणं संगच्छते। अत्राप्यदृष्टद्वारकत्वस्य विवक्षितत्वात्॥

तत्र अत्यर्थमत्प्रियत्वं निरतिशयभक्तित्वम्। आदिशब्देन परमपदपर्यङ्कासत्तिपर्यन्तं यन्मध्येऽपेक्षितं तत्सर्वं विवक्षितम् (ता. चं.) 'येन मामुपयान्ति ते' इत्युक्त्या परभक्त्यनन्तरकालिकी परमभक्तिपर्यन्तपरज्ञानावस्थैव। 'बुद्धियोगं तम्' इत्यत्र तच्छब्दविवक्षिता इति पूर्वमेवोक्तम्॥

अत्र परमभक्तिपर्यन्तविवक्षा च उत्तरग्रन्थेन सिध्यति। दशमे विभूतियोगविस्तरकथनेन जातपरभक्तेरर्जुनस्य एकादशे विश्वरूपप्रदर्शनानन्तरं दर्शनस्य भक्तिसाध्यत्वकथनावसरे 'भक्त्या त्वनन्यया शक्यः—ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च' इत्युक्तेः। अत्र नानावस्थापन्नभक्तेरेकेन शब्देन निर्देशमभिप्रेत्य 'बुद्धियोगं तम्' इत्यत्र तमेव विपाकदशापन्नमिति भाषितम्॥

भावप्रकाशः

एवं च 'भक्त्या मामभिजानाति' इत्यत्र 'भक्त्या–प्रवेष्टुम्' 'भक्त्या विशते' इत्युपक्रमोपसंहारयोरैकरूप्यात् वचनयोरैकार्थ्यप्रतीत्या एकादशे भक्तिशब्देन एकेन नानावस्था बोधितेति प्रत्यभिज्ञापनाय तच्छब्द इत्याशयेन 'ततः' इत्यस्य दर्शनोत्तरकालभाविन्या अनवधिकातिशयभक्त्या–इत्यर्थवर्णनमपि सङ्गच्छते । 'भक्तिरपि निरतिशयानन्यप्रयोजनस्वेतरवैतृष्ण्यावहज्ञानविशेषः' इति (वे. सं.) वाक्येन परमभक्तेरपि बुद्धिरूपत्वं सिध्यति ॥

एतेन भक्तेर्मुक्तिसाधनत्वे परेषाम् 'ददामि बुद्धियोगं तम्' इत्येतद्वचनविरोधोद्घाटनं प्रत्युक्तम् । 'मयि सर्वाणि कर्माणि सन्न्यस्य' 'ये मे मतमिदं नित्यमनुतिष्ठन्ति–मुच्यन्ते तेऽपि कर्मभिः' इत्युपक्रम्योक्तस्य सर्वस्यार्थस्य ;—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । (१२ अ.)

इति भगवत्संकल्पद्वारकमेव फलमित्युक्तम् ॥

एवं 'स्वकर्मणा तमभ्यर्च्य' 'भक्त्या मामभिजानाति' 'सर्वकर्माण्यपि—मत्प्रसादादवाप्नोति' 'तमेव शरणं गच्छ–तत्प्रसादात्परां शान्तिम्' इत्यत्रापि प्रसादद्वारकं फलमित्युक्तम् ॥

एवं च परमभक्तेर्मोक्षहेतुत्वे द्वारमपि—

मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ (१८ अ.)

इत्यत्र प्रदर्शितं भवति । अतः 'तेषां सततयुक्तानाम्' इत्यत्र परभक्तेः परमभक्तिपर्यन्तपरज्ञानहेतुत्वं विवक्षितम् । वेदार्थसंग्रहपर्यालोचनात् अतिमात्रानुकूल्यं परायत्ताधिकरणोक्तमपि निश्चितं भवति ॥

### भावप्रकाशः

तत्र साध्वसाधुकर्मकारयितृत्वं तु व्यवस्थितविषयं न सर्वसाधारणम् । 'यस्तु पूर्वं स्वयमेवातिमात्रानुकूल्ये प्रवृत्तः तं प्रति प्रीतः स्वयमेव भगवान् कल्याणबुद्धियोगदानं कुर्वन् कल्याणे प्रवर्तयति' इत्यारभ्य एतद्वचनद्वयमुदाहृत्य ;—

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ (वि. ध.)

इति वचनानुसारेण 'निरतिशयपुण्यसंचयक्षीणाशेषजन्मोपचितपापराशेः' इति प्रक्रम्य 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' 'मामेव ये प्रपद्यन्ते' इत्यभिप्रेत्य परमपुरुषचरणारविन्दशरणागतिजनिततदाभिमुख्यस्येति ;—

शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ।
अद्वेष्टा सर्वभूतानाम् +अभयं सत्त्वसंशुद्धिः ॥

इत्याद्यनुसृत्य सदाचार्योपदेशोपबृंहितशास्त्राधिगततत्त्वयाथात्म्यावबोधपूर्वकात्मगुणोपेतस्येति 'वर्णाश्रमाचारवता' 'स्वकर्मणा तमभ्यर्च्य' 'नाविरतो दुश्चरितात्' इत्याद्यभिसन्धाय वर्णाश्रमोचितपरमपुरुषाराधनवेषनित्यनैमित्तिककर्मोपसंहृतिनिषिद्धपरिहारनिष्ठस्येति ; 'सततं कीर्तयन्तो माम्' 'मन्मना भव मद्भक्तः' 'एतां विभूतिं योगं च' 'इति मत्वा भजन्ते माम्'—

यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥
मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ॥ (वि. पु.)

इत्यादि मनसिकृत्य 'तद्भक्तिकारितानवरतस्तुतिस्मृतिनमस्कृतियतनकीर्तनगुणश्रवणवचनध्यानार्चनप्रणामादिप्रीतपरमकारुणिकपुरुषोत्त-

भावप्रकाशः

मप्रसादविध्वस्तस्वान्तध्वान्तस्य अनन्यप्रयोजनानवरतनिरतिशयविशदतमप्रत्यक्षतापन्नानुध्यानरूपभक्त्येकलभ्य' इत्युक्त्वा 'भक्त्या मामभिजानाति' इत्युदाहृत्य 'एवंविधपरमभक्तिरूपज्ञानविशेषस्योत्पादकः पूर्वोक्ताहरहरुपचीयमानज्ञानपूर्वककर्मानुगृहीतभक्तियोग एव' इत्यभिधाय 'यथोदितक्रमपरिणतभक्त्येकलभ्य एव' इत्युपसंहृतम् ॥

अत्र स्वयमेव चेतनस्य ध्यानात्पूर्वं प्रवृत्तिरिति ध्यानार्चनप्रणामादिप्रीतेत्यादौ प्रत्यक्षतापन्नभक्तिरूपसमाधेः चेतनप्रवृत्तिफलत्वम्; तदपि भगवत्प्रसादद्वारकमिति परभक्तेः परमभक्तिहेतुत्वं परज्ञानद्वारकमिति 'एष एव साधु कर्म कारयति' इति श्रुतेः 'तेषां सततयुक्तानाम्' इति श्लोकद्वयस्य च तात्पर्यम्—आनुकूल्यम्—आभिमुख्यम् अनसूयादिरूपम् पुण्यसञ्चयजनितपापक्षयानन्तरकालिकम्। अतिमात्रानुकूल्यमपि तद्भक्तिकारित—ध्यानार्चनप्रणामादिपर्यन्तमपीति च व्यक्तं विदुषाम् ॥

'गुणश्रवणवचन' इत्यनेन 'एतां विभूतिं योगं च' 'कथयन्तश्च माम्' इत्येतद्वचनार्थस्योक्त्या विवृद्धभक्तेर्विवक्षा स्फुटा ॥

एतेन उपक्रमे 'ददामि बुद्धियोगं तम्' इत्यस्य कल्याणबुद्धियोगदानं कुर्वन्निति विवरणेन कल्याणबुद्धिः—परज्ञानपरमभक्तिपर्यन्ता इति बोधितम्। तथा च प्रत्यक्षतापन्नानुध्यानरूपभक्तीत्यत्र अनुध्यानशब्देन दिव्यात्मस्वरूपानुसन्धानरूपस्समाधिरुच्यते। स हि ध्यानसाध्यः—इति परमभक्तिरूपज्ञानविशेषस्योत्पादकः भक्तियोग एव' इत्यत्र; भक्तियोगः परमभक्तिदशापन्नस्स्यादित्यर्थः। प्रीतिरूपध्यानेन निरतिशयानन्दरूपदिव्यात्मस्वरूपानुसन्धानं निरतिशयप्रियं सिध्यति। तदेव साक्षात्काररूपमनुभवाभिनिवेशं जनयति। सोऽभिनिवेशः परम-

5*

भावप्रकाशः

भक्तिरिति यावत्, इति च तात्पर्यदीपिका ;—अत्र समाधिः परभक्तिरेव इति स्फुटम् । एतच्च 'भक्तिर्मुक्तेरुपायः' इति श्लोके विशदीकरिष्यते ॥

अत्र परभक्तौ चेतनस्य स्वयमेव प्रवृत्तिः । तस्याः प्रसादद्वारा परज्ञानादिहेतुता इत्यनुक्तिस्तु परभक्तिपूर्वकालिकोक्तव्यापारस्याप्यतिमात्रपरमपुरुषानुकूल्यरूपत्वेन 'एष एवेति श्रुतिस्वारस्यासम्भवाभिप्रायेण च (कौ. उ.) 'यं त्वं मनुष्याय हिततमं मन्यसे' इति प्रश्नप्रतिवचने मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्, प्राणोऽस्मि प्रज्ञात्मा 'तं मामायुरमृतमित्युपास्व' 'स यो मामायुरमृतमित्युपास्ते सर्वमायुरस्मिन् लोक एति आप्नोत्यमृतत्वमाक्षितिं स्वर्गे लोके' इति ध्यानविध्युत्तरं उपसंहारे—'प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः—एष ह्येव साधु कर्म कारयति' इत्यादिश्रुतौ समाधिपर्यन्तध्यानस्य अपवर्गप्रापणरूपोन्नयनहेतुत्वं साक्षात्; साधुकर्मणां तद्वारकं हेतुत्वं विवक्षितमिति हि प्रतीयते। स्पष्टं चेदं (१-१-१) श्रुतप्रकाशिकायाम्। एवं च—

पुण्यपापादिकं विष्णुः कारयेत्पूर्वकर्मणा ।
अनादित्वात्कर्मणश्च न विरोधः कथंचन ॥ इति (भ. पु.)

वचनोपबृंहितायां उक्तनयानुगृहीतायां च श्रुतावस्यां ध्यानपर्यन्त अतिमात्रानुकूलपूर्वकर्महेतुकं साधुकर्मकारयितृत्वं विवक्षितमिति सिद्धम्। श्रुत्या तदर्थस्य सिद्धौ 'तेषां सततयुक्तानाम्' इति स्मृत्या परभक्तिरूपसमाधेः पूर्वमुक्तरीत्या परज्ञानादौ हेतुत्वं सिध्यतीत्याशयात्। एतत्तात्पर्येणैव 'अनन्यप्रयोजनानवरतनिरातिशयप्रत्यक्षतापन्नानुध्यानरूप-

भावप्रकाशः

भक्त्येकलभ्यः' इति सर्वाकारविशिष्टाया ध्यानसाध्यत्वं भाष्यकृतोक्तम् ॥

अतश्चायमर्थस्सिद्धः ;—पूर्वं यत्र यत्र यं यं अतिमात्रपरमपुरुषानुकूलप्रतिकूलचेतनव्यापारमभिधाय तदनन्तरव्यापारान्तरकारयितृत्वदातृत्वादिकं प्रतिपाद्यते तत्र तत्र पूर्वोक्ततत्तच्चेतनव्यापारमूलकप्रसादसाध्यता कारयितृत्वादेर्विवक्षितेति। 'एष एव' इति श्रुतौ कारयितृत्वप्रयोजकोन्निनीषायास्सर्वसाधारणत्वाभावेन तत्र कर्म चेतनसम्बन्धिप्रयोजकम् ; एष एव कर्म कारयतीत्येतावन्मात्रेणैवावैषम्येण कारयितृत्वलाभसम्भवेन वैषम्यप्रतीत्यर्थमेवायं श्रुतिक्रम इति स्फुटम्। 'य आत्मनि तिष्ठन्' इत्यादौ तु सर्वसाधारणं नियन्तृत्वं विवक्षितमित्यभिप्रेत्य श्रुत्योरनयोरविशेषेण शङ्कराचार्यैरुदाहृतयोः–साधारणासाधारणसहेतुकनिर्हेतुकनियन्तृत्वपरतया विशेषः प्रदर्शितः परायत्ताधिकरणश्रीभाष्ये— एवं तत्र यस्त्वातिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते तमनुगृह्णन् भगवान् स्वयमेव स्वप्राप्त्युपायेष्वातिकल्याणेषु कर्मस्वेव रुचिं जनयति' इत्यत्र अतिमात्रपरमपुरुषानुकूल्ये अतिकल्याणेषु इत्युभयत्रातिशब्दप्रयोगात् कल्याणेषु कर्मसु इति बहुवचनप्रयोगाच्च (अनति) आनुकूल्ये प्रवृत्तमनुगृह्णन् (अनति) कल्याणकर्मरुचिं जनयतीत्ययमंशोऽपि भाष्यकृतोऽभिमतः इति प्रतीयते ; अल्पानुकूल्येन विपुलापराधसहत्वाद्दयादिगुणानां सविषयत्वमिति व्यासार्योक्तिः। ध्यानार्चनप्रणामादिप्रीतपरमकारुणिकपुरुषोत्तमप्रसादविध्वस्तस्वान्तध्वान्तस्य' इत्यत्र परमकारुणिकशब्दे निर्हेतुककृपा विवक्षिता अथापि ध्यानादिजन्यप्रीतिहेतुक एव प्रसाद इति स्पष्टम्। एवं श्रीभाष्येऽपि अतिमात्रपरमपुरुषानुकूल्ये (२-२-३) इत्यत्र जगत्कारणशरीरिबहुपदार्थकपुरुषशब्दप्रयोगपूर्वकोक्त्या।

भावप्रकाशः

कारणत्वान्तर्यामित्वयोर्निर्हेतुककृपामूलकत्वेऽपि फलप्रदानौपयिककृपा सहेतुकैवेति बोधितम्। अत एवोदाहृतश्रुतौ प्रश्नप्रतिवचनयोः कर्मव्यावृत्तमुक्त्युपायार्थकः हिततमशब्दस्सङ्गच्छते ॥

'तेषामेवानुकम्पार्थम्' इत्यत्र अनुग्रहार्थम् इति व्याकुर्वतो भाष्यकृतः अत्रानुगृह्णन्नित्यत्र दयैव विवक्षितेति व्यक्तम्; तेन (नायमात्माभाष्ये) (व. भू. भाष्यकारैः) कैश्चित्स्वपक्षसाधकतयोपात्तम्—

'येषां स एव भगवान् दययेदनन्त-
स्सर्वात्मना श्रितपदो यदि निर्व्यळीकम्।
ते दुस्तरामतितरन्ति च देवमायां
नैषां ममाहमिति धीःश्वसृगालभक्ष्ये (भाग. २-७-४२)

इति वचनमपि व्याख्यातं भवति। तद्वचने भगवाननन्तः निर्व्यळीकं सर्वात्मना श्रितपदो यदि 'स एव' येषां दययेत् ते दुस्तरां देवमायामतितरन्तीति योजना। परिच्छेदत्रयशून्यवाचिना अनन्तशब्देन सर्वसाधारणः अन्तर्यामित्वेन नियमनपर्यन्तः निर्हेतुककृपामूलकः उपकार उक्तः। सर्वात्मना श्रितपद इत्यस्यार्थः परमपुरुषचरणारविन्दशरणागतिजनिततदाभिमुख्यादिः अतिमात्रपरमपुरुषानुकूल्यरूपः वेदार्थसङ्ग्रहे प्रदर्शित एव। स एव—निर्हेतुककृपया साधारणोपकारान् सम्पादयितैव। येषां अतिमात्रपरमपुरुषानुकूल्यरूपशासनानुवृत्तिमताम्। दययेत्—दुस्तरमायातरणाभिसन्धिना निर्हेतुककृपामूलकान् साधारणोपकारान् सम्पादयितुरेव सहेतुकदयया असाधारणविशेषोपकारमुखेन दुस्तरमायातितरणं न त्वन्यथेति भावः ॥

'देवमायाम्' इत्यत्र क्रीडार्थकदिवुधातुनिष्पन्नदेवशब्देन जीवस्य मायासम्बन्धस्य भगवल्लीलार्थत्वं बोधितम्; अत एव हि दुस्तरत्वम्!

**भावप्रकाशः**

'यमेभ्यो लोकेभ्यः' इति श्रुतौ यमित्यत्र अत्र येषामित्यत्र च अर्थविशेषस्यास्फुटतया सर्वात्मनेत्याद्यभावे निर्हेतुकदययैव मायातरणं प्रतीयेत; तन्मा भूदिति सर्वात्मनेत्यादिकम् । एतेन श्रुतौ यच्छब्दस्यार्थनिष्कर्षः कृतः । एतदेवाभिप्रेत्य' एतैरुपायैर्यतते यस्तु विद्वान् (मु. ३-२-४)' इत्युक्तश्रुतिप्रत्यभिज्ञापक 'यस्तु' इति घटितं (कौ.) (मुं,) श्रुत्योरैकार्थ्यबोधकमुदाहृतं भाष्यकृद्वाक्यद्वयम् ॥

ननु सर्वात्मना श्रितपद इत्यत्र चेतनानामाश्रयणकर्तृत्वमुक्तम् ; एवं सति ;—

अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ।

इत्याद्युक्तदिशा मोहोऽभ्युपगन्तव्यः । अत्रैव पूर्वम् ;—

यन्मायया दुर्जयया . . . . . . . ।

विमोहिता विकत्थन्ते ममाहमिति दुर्धियः । (भागवत २-५-१३) इत्युक्तेः ? इति शङ्कामपाकरोति ;—नैषामित्यादिना । न हि कर्तृत्वमात्रेण मोह आपादयितुं शक्यते !

'मुक्तसङ्गोऽनहंवादी—कर्ता स्वात्त्विक उच्यते । (गी. १८) इत्युक्तिविरोधात् । यस्तु इत्यादि भाष्यकृत्सूक्त्या 'एतैरुपायैर्यतते यस्तु विद्वान्' इति श्रुतिप्रत्यभिज्ञापनेन तत्र विदुष उपायप्रयत्नोक्त्या उपायकर्तृत्वस्य मोहमूलकत्वभ्रमोऽपोदितः (व. मू. भा) एतदर्थः पर्यालोचयिष्यते । एतदुपबृंहणवचनेषु ;—

निरस्तातिशयाह्लादसुखभावैकलक्षणा ।

भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥

इति मुक्तेरेकरूपाया एवाभिधानेन (व. भा.) मुक्तिद्वैविध्यस्याप्रामाणिकतां प्रदर्श्य ;—

तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ।

**भावप्रकाशः**

तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं . . . . . ॥

द्वे विद्ये वेदितव्ये--परया त्वक्षरप्राप्तिः . . . . ॥

यत्तदद्रेश्यम्--तद्ध्येयं मोक्षकाङ्क्षिभिः ।

इति परविद्याया मोक्षसाधनतां मोक्षेच्छया अनुष्ठेयतां च प्रतिपाद्य केशिध्वजखाण्डिक्यसंवादे ;—

अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।

इति ;--

नैषां ममाहमिति धीः श्वश्रृगालभक्ष्ये ।

इत्यत्रोक्तरीत्या अविद्याद्वयमभिधाय ;--'निर्वाणमय एवायम्' इति जीवस्वरूपं निरूप्य परविद्याया अष्टाङ्गयोगरूपतां विशदीकृत्य ;—

विज्ञानं प्रापकं--'क्षेत्रज्ञः करणी ज्ञानं करणम्' ।

यद्विमुक्तिप्रदो योगः प्रोक्तः केशिध्वजाव्ययः ॥

इत्युपसंहृतम् । अत्र मुक्तिफलेच्छया मुक्तिसाधने यत्नः कर्तव्य इति स्फुटम् ॥

ननु केशिध्वजखाण्डिक्यसंवाद एव मूर्तामूर्त (बद्धमुक्त) स्वरूपनिरूपणावसरे ;--

बोधाधिकारयुक्तेषु विद्यते भावभावना ।

अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु ॥

विश्वमेतत् . . . . . . . . . . . ।

इतिमूर्तस्वरूपम् ;--

परं चान्यद्भेदभिन्नदृशां नृणाम् ॥ (वि. पु. ६-७-५२)

प्रत्यस्तमितभेदं यत् . . . . . . . ।

इत्यादिना अमूर्तस्वरूपं च निरूपितम् । अत्र विष्णुचित्तार्याः ;—अधिकारो नाम मत्फलसाधनत्वान्मदर्थमिदं कर्म इति कर्मण्यैश्वर्यबोधः ।

**भावप्रकाशः**

विशेषज्ञानं—देवमनुष्यादिभेदभिन्नतयाऽऽत्मानुसन्धानम्। तत्तदभिमानानुरूपं कर्म—विशेषकर्म' इति व्याचख्युः। एवं च ब्रह्मभावनावतामुभयभावनावतां च अधिकारविज्ञानयोर्मोहमन्तरा उपपादनं न संभवति। स्पष्टं चेदं (व-भू.) मीमांसाभाष्यादौ इति चेत्; न;—

मूर्तमेतद्धरे रूपं भावनात्रितया (त्मकम्) न्वितम् (६-७-५९) इत्यत्र मूर्तसामान्यस्य भावनात्रितयान्यतमवत्त्वं वक्ष्यते। तथा च भाष्यम्;—(१-१-१) 'कर्माख्याविद्यावेष्टितमाचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभम्। कर्माख्याविद्याविरहिणोऽचिद्वियुक्तस्य ज्ञानैकाकारस्य अमूर्ताख्यविभागस्य' इत्यादि॥

एवं च मुक्तव्यतिरिक्तबद्धजीवानां सर्वेषां भावनात्रयान्यतमसंबन्धेन अधिकारविशेषज्ञानाभ्यां मोहापादने कस्य कथं वा मुक्तिः? (वि. पु.) उपक्रमे मुक्तिमेकरूपामेवाभिधाय मुक्त्यर्थं तत्साधने प्रयत्नस्य; उपसंहारे प्रापकज्ञानस्य करणतायाश्च प्रतिपादनं च कथं घटते? अतोऽधिकारविशेषज्ञाने न मोहापादके। किं तु वेदार्थसंग्रहान्तोक्तात्माभिमानानुगुणपुरुषार्थव्यवस्थातस्सुसङ्गते भवतः। तथा हि देवोऽहं मनुष्योहमिति ज्ञानं त्रिविधम्;—देहात्मभ्रमरूपम्, देहसंयुक्तजीवमात्रज्ञानरूपम्, तत्तज्जीवान्तर्यामिशेषिज्ञानरूपं चेति। त्रिविधं विशेषज्ञानशब्दे विवक्षितम्। 'देहयोगाद्वा सोऽपि' इत्यादौ देहस्य कर्मणां व तिरोधायकत्वोक्त्या तन्निवृत्त्यर्थं ब्रह्मभावनाऽपि मूर्तस्य (बद्धस्य) जीवस्य न तु अमूर्तस्य (मुक्तस्य) फलस्य ब्रह्मप्राप्तेर्लाभानन्तरम् तत्तत्साधने प्रयत्नासंभवात् इत्युक्तं भवति। मत्फलसाधनत्वान्मदर्थमिदं कर्मेति विष्णुचित्तसूक्तौ अस्मच्छब्दः त्रिविधानुसन्धानविषयपरः। तेन ब्रह्मभावनावतः फलसङ्गकर्तृत्वत्यागस्य नानुपपत्तिः एतेन—मुमुक्षोरुपासने स्वकीयताबुद्धिः (ब. सं. ता.) इति—विष्णुचित्तार्यप्रशिष्य व्यासार्यसूक्तिरपि व्याख्याता।

भावप्रकाशः

ब्रह्मभावनावतोऽनुसन्धानं च ;—

यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित् ।
सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः॥(वि. पु. १-२२-८६)

अहं हरिस्सर्वमिदं जनार्दनो
नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो
भवोद्भवा द्वन्द्वगदा भवन्ति ॥ (८७)

इति अस्त्रभूषणाध्यायान्ते प्रतिपादितम् । अतोऽत्रापि योगावयवधारणासिद्ध्यर्थं मूर्तामूर्तकर्मसामान्यरूपशक्तित्रयाश्रयशुभाश्रयदिव्यमङ्गलविग्रहनिरूपणावसरोक्तब्रह्मभावनावदनुसन्धानमन्तर्यामिशेष्यनुसन्धानमेवेति न तस्य मोहताप्रसक्तिः । न वा उपक्रमोक्तमोक्षार्थसाधनप्रयत्नस्य मोहमूलत्वमुत्प्रेक्षितुमप्यलमिति विभावनीयम् ॥

अहिर्बुध्न्यसंहितायाम् (१४ अ.) ;—
यथा हि मोषकाः पान्थे परिबर्हमुपेयुषि ।
निवृत्तमोषणोद्योगाः सदा (स्समा) सन्त उपासते ॥

इत्यत्र मोषणोद्योगनिवृत्तिरेवोक्ता ; न तु (२० पु.) उदाहृत (अ.बु.सं.) त्रयोदशवचनोक्तसाधनोद्योगनिवृत्तिः ॥

एतेन ;—(अ. सं.) ;—
अनुग्रहात्मिका शक्तिस्सा कृपा वैष्णवी परा । (१४—३१)
इत्यतः पूर्वम् ।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ।

इति वाक्ये कृपा आनुकूल्यनिबन्धनैव । न तु निर्हेतुका इति बोधितम् ॥

### भावप्रकाशः

अत एव ;—

शक्तेस्सूपसदत्वाच्च कृपायोगाच्च शाश्वतात् ।

रक्षिष्यत्यनुकूलान्नः . . . . . ॥

इति लक्ष्मीतन्त्रवचनं सङ्गच्छते । एवं च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा (२-२-३) इत्यादि श्रीभाष्येण द्रमिडभाष्यस्य उक्तश्रुतितात्पर्यनिर्णायकताबोधनेन 'एष एव साधु कर्म' इति श्रुतितात्पर्यनिर्णायकं 'शासनानुवर्तिनं ज्ञात्वा कारुण्यात्स भगवान् वर्धयेत विद्वान् कर्मदक्षः' इति द्रमिडभाष्यमत्राप्यनुसंहितं भवति । आनुकूल्यं शासनानुवृत्तिरूपं कारयितृत्वं च वर्धनरूपमेव । एतेन करणकळेबरघटनसाधारणनियमनयोरुत्पादनरूपता निर्हेतुककृपामूलकता च व्यञ्जिता ; तेन सृष्टेर्दयामूलकत्वेन चेतनरक्षणे भगवतः प्रथमप्रवृत्ततया प्रातिकूल्यव्यवसायनिवृत्त्यविशिष्टस्यापि चेतनव्यापारस्यानुकूल्यादेः सिद्धोपायफलत्वमेवेत्युत्प्रेक्षणमपि (सि. वि. मं. दी.) आनुकूल्यस्य शासनसिद्धस्याहेतुत्वायोगसूचनेन शिक्षितम् । अतश्चेतनव्यापारस्य कारुण्यहेतुत्वे न कोऽपि दोषलेशः ॥

यच्च कैश्चित् भाष्यकारसिद्धान्तप्रतिकूलतयोदाहृतम् ;— 'पराभिध्यानात्तु तिरोहितं ततोऽह्यस्य बन्धविपर्ययौ' (३-२ ४) इति सूत्रम् ; तत्रापि परशब्देन 'परात्तु तच्छ्रुतेः' इति सूत्रघटकपरशब्दप्रत्यभिज्ञापनमुखेन 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इति तदधिकरणोत्तरसूत्रन्यायानुसारस्य 'बन्धविपर्ययौ' इति विषमफलोक्त्या 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' 'न कर्माविभागादिति चेन्नानादित्वात्' इति सूत्रार्थविवक्षायाश्चावश्यकतया बन्धस्य निर्हेतुकाभिध्यानसाध्यत्वस्य केषां चिदप्यनिष्टतया एकत्र निर्हेतुकत्वस्थापनायोगेन च जीवव्यापारसापेक्षाभिध्यानस्यैव बन्धविपर्ययो-

भावप्रकाशः

भयहेतुताया भाषितत्वात् । अहिर्बुध्न्यसंहितायामपि चतुर्दशे न्यायानुसार्यर्थ एव प्रतिषेधकवचनाभावेन प्राह्यः । 'सर्वैरननुयोज्यं तत्स्वातन्त्र्यम्' 'क्रीडते राजवद्वशी' इति सृष्टिस्थितिलयनिग्रहानुग्रहाणां लीलात्वमाभिधाय निग्रहानुग्रहयोरैकरूप्येण स्वातन्त्र्यमूलकत्वोपपादनात् ॥

अष्टमे च 'स्वातन्त्र्यमनियोज्यं तु' 'चित्रा सृष्ट्यादिशास्त्राणां प्रवृत्तिः' इत्यादौ सुखदुःखव्यवस्थायाः कर्मवैषम्यसम्भवत्वोक्त्या निग्रहानुग्रहयोः कर्महेतुकत्वेऽपि स्वातन्त्र्यस्याप्रच्युतेस्स्थापनाच्च ॥

एवं च वेदार्थसङ्ग्रहश्रीभाष्ययोः निग्रहानुग्रहयोः कर्मसापेक्षत्वसिद्धान्तस्य द्रमिडभाष्यकारीयस्य प्रतिकूलतया संहितावचनानां केषांचिदुदाहरणं अकिञ्चित्करमिति सिद्धम् ॥

लक्ष्मीतन्त्रेऽपि अनुग्रहवैषम्ये कर्मवैषम्यं हेतुरित्येकादशे कर्मणः करणत्वेऽपि स्वस्वातन्त्र्यपरिक्लृप्तकर्मरूपकरणसापेक्षसुखदुःखरूपकार्यकारित्वं स्वातन्त्र्यं न विहन्तीति तृतीये ।

स्वाच्छन्द्यं ते कथं तदा . . . . ।
कर्म चेत्समवेक्ष्य त्वं विदधाति सुखासुखे ॥

श्रीः ;—

कुर्वन्त्या मम कार्याणि कर्म तत् करणं स्मृतम् ।
कर्तुश्च करणापेक्षा न स्वातन्त्र्यविरोधिनी ॥

इत्यत्र निरूपितम् ।

एतेन ;—

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥ (वि. पु.)

## भावप्रकाशः

इत्यत्र कर्मणां सुखदुःखहेतुत्वमपि विवक्षितम् । कर्मणो दुःखहेतुत्वस्य (२ ६ वि. पु.) भगवदाराधनरूपत्वसुखहेतुत्वयोश्च (३-८) तत्रैव प्रतिपादनात् । तच्च प्रसादव्यापारवत्कारणतारूपं करणत्वं । नारायणशब्दाभिहितं करणत्वं तु परामर्शादिनिष्ठतया नैयायिकादिसम्मतं—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ इति ॥

हरिकारिकोक्तं च अव्यवहितोपायत्वं फलदातृत्व एव पर्यवस्यति—कर्मणः करणत्वं परस्य फलदातृत्वं चेत्यर्थद्वयम् 'फलमत उपपत्तेः' इत्यधिकरणे व्यासेन निरधारि। तथा हि ;—मुमुक्षूणां प्राप्यतृष्णाभक्तिजननाय परस्य निर्दोषत्वकल्याणगुणाकरत्वानिरूपणपरे उभयलिङ्गपादे (३-२) प्रथमाधिकरणे स्वाप्नार्थहेतुताप्रतिपादनावसरे (३-२-४) परस्य बन्धमोक्षहेतुसङ्कल्पवत्त्वम् ; मध्ये (२३) 'अपि संराधने' (२४) 'प्रकाशश्च कर्माणि' इत्यत्र भक्तिरूपदर्शनस्य परप्रीतिजनकत्वरूपपराराधनत्वम् । पराधिकरणे परस्य विशेषोपकारसंपादनमुखेन स्वाराधनकर्मप्रवर्तकत्व रूपप्रापकत्वं (साधुकर्मकारयितृत्वं) प्राप्यत्वं चाभिधाय फलाधिकरणे परस्य फलप्रदत्वं चेतनासाधारणमुच्यते ॥

'फलमतः, इत्यत्र शब्दान्तरं विहाय इदंशब्दनिर्देशेन 'इदमस्तु सन्निकृष्टम्' इत्युक्तदिशा इदंशब्देन बन्धमोक्षहेतुसङ्कल्पाश्रयतया कर्माराधिततया च पूर्वप्रस्तुतः परः परामृश्यते । फले सङ्कल्पाश्रयहेतुकत्वप्रतिपादने विशिष्टान्वयमहिम्ना फलजनकसङ्कल्पवत्त्वं परस्य सिध्यतीति फलप्रदत्वसिद्धिः लोके च कृष्यादिभिर्विचित्ररूपान् द्रव्यविशेषान् संपाद्य ते राजानं भृत्यद्वारेण साक्षाद्वा अर्चयन्ति । अर्चितश्च राजा तत्तदाराधनानुगुणं फलं प्रयच्छन् दृश्यते, इति

### भावप्रकाशः

भाष्योक्तदृष्टान्ते प्रीतिजनकव्यापारस्य प्रीतिरूपव्यापारवत्कारणत्वरूपं करणत्वं व्यक्तम् । अर्चनेन फलं प्रयच्छतीत्येतत्तुल्यत्वात् अर्चितः फलं प्रयच्छतीत्यस्य धनेन सुख्यति धनवान् सुखी इत्यनयोरविशेषवत् ।

कर्मजन्यप्रीतिविशिष्टहेतुकत्वस्य फले प्रतिपादने कर्मजन्यप्रीतेरपि फलं प्रति हेतुतालाभेन कर्मणो व्यापारवत्कारणत्वरूपकरणत्वप्रतिपत्तिसंभवात् । अत्रोदाहृते 'फलसंविभत्सया कर्मभिरात्मानं पिप्रीषन्ति' इति द्रमिडभाष्ये कर्मणां करणत्वस्य स्वयंप्रयोजनत्वाभावस्य च स्फुटत्वात् । 'धर्मं जैमिनिरत एव' इति पूर्वपक्षसूत्रे कर्मशब्दं विहाय धर्मशब्दप्रयोगेण धर्मपदस्य 'चोदना लक्षणोऽर्थो धर्मः' इत्यनुसारेण वेदैकप्रातिपाद्यश्रेयस्साधनतावदर्थकतया साधनतायाश्च चोदना पुनरारम्भः (२-१-५) इति सूत्रे भाष्यवार्तिकयोः अपूर्वद्वारिकायास्सिद्धान्तकरणेन कर्मणोऽपूर्वद्वारा साधनत्वस्यैव पूर्वपक्षत्वात् । वेदान्तदीपे कर्मैवापूर्वद्वारेण भोगापवर्गफलदं उत तत्तदाराधनैः प्रीतः परमपुरुष एव फलदः इति संशयं प्रदर्श्य सर्वेश्वरः स्वाराधनरूपेण कर्मणाऽऽराधितः फलप्रद इति सिद्धान्तनिगमनेन कर्मणा करणेन फलं ददातीति सिद्धान्त उक्तो भवति । पूर्वपक्षे चेतनस्य फलदत्वानभ्युपगात् धर्मस्य करणतामात्रम्; सिद्धान्ते चेतनस्य फलप्रदत्वोपपादनेन चेतनस्य फलदातृत्वं कर्मणः व्यापारवत्कारणत्वरूपं करणत्वं च सिद्ध्यतीति ।

अत एव 'ईश्वरस्य स्वातन्त्र्यवैकल्यादिप्रसङ्गाभावेन कर्मणां तदाराधनरूपतयैव फलप्रदत्वात्, इति रचनानुपपत्त्यधिकरणे 'पूर्वमीमांसायामपूर्वाधिकरणे द्वारमात्रं निरूपितम् । अत्र तु द्वारविशेषो निरूप्यते इति भिदा' इति फलाधिकरणे च व्यासार्योक्तिः । एवंरूपं च

**भावप्रकाशः**

ध्यानमहरहरनुष्ठीयमानैर्नित्यनैमित्तिककर्मभिः परमपुरुषाराधनरूपैः परमपुरुषप्रसादद्वारेण जायते (३-४-२६) इति; वेदनस्य दृष्टोपायस्वाभावात् ज्योतिष्टोमादीनि कर्माणि वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम् आराधिताच्च परमपुरुषात् धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति 'फलमत उपपत्तेः' इत्यत्र प्रतिपादितम्। (४-१-१) इति श्रीभाष्योक्तिः; अदृष्टोपायत्वं सिद्धान्तिनैवोक्तमित्याह;—ज्योतिष्टोमादीति, तदापरोक्ष्यं च बन्धनिवृत्तौदृष्टोपाय इति चायुक्तम् 'धातुः प्रासादाद्वीतशोकः' 'मद्भक्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यति' इति श्रुतिस्मृतिविरोधात् इति व्यासार्यसूक्तिः पूर्वोदाहृतवेदार्थसङ्ग्रहसूक्तिश्च सङ्गच्छते। एतेन फलाधिकरणे कर्मणां स्वयं प्रयोजनता न विवक्षितेति सिद्धम्। अत एव 'एष पन्थाः एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' इत्यैतरेयारण्यकोपनिषदुपक्रमश्रुतिस्सङ्गच्छते॥

श्रुतौ कर्मशब्दः मानासिकज्ञानसाधारणः 'प्रकाशश्च कर्माणि' इत्यादिनिर्देशात् 'पन्था नान्योऽस्ति विज्ञानादयनाय' इति (ल. तं.) वचनोपबृंहितायाः 'नान्यः पन्था अयनाय, इति श्रुतेरनुसाराच्च। एतेन फले कर्म करणम्। ब्रह्म कर्तृ अव्यवहितं च कारणमिति सिद्धम्। ब्रह्मज्ञानस्य पथित्वमेतच्छ्रुत्यादिसिद्धमभिप्रेत्य 'बालानर्हैर्बहुभिरयनैश्शोचतां नस्सुपन्थाः, (र. त्र. सा) इत्यत्र ज्ञानहेतुतावैलक्षण्यबोधनाय सुशब्दप्रयोगः॥

इत्थं च सिद्धतात्पर्यटिप्पण्यां ब्रह्मनिष्ठमेव कारणत्वम्। कर्मणि त्वौपचारिकमित्युक्तिः डिम्भप्रलोभनामिति सिद्धम्। तत्रत्यफलाधिकरणविचारस्य स्वोत्प्रेक्षामात्रसिद्धत्वेन प्रमाणद्रमिडाचार्यसंप्रदायासंस्पर्शस्य विदुषां व्यक्तत्वात्। 'फलसंविभक्तसथा' इति भाष्य-

## भावप्रकाशः

विवरणावसरे (वे. सं.) उक्तरीतेरेवाश्रयणेन फलाधिकरणे भगवद्भाष्यकृद्भिस्सिद्धान्तस्य स्थापनात् ॥

एवं च फलाधिकरणार्थनिर्णायकं फलसंबिभत्सया कर्मभिरात्मानं पिप्रीषन्ति स प्रीतोऽलं फलाय' इति द्रमिडभाष्यं कर्मणां करणत्वोपपादनपरं निर्व्यूढम् । अतश्च श्रीभाष्यादिसूक्तावपि निग्रहानुग्रहौ कर्मरूपकरणसापेक्षौ विवक्षितौ । दयास्वरूपं प्रमाणानुगुणमेव श्रीभाष्यकृतामभिमतामिति पूर्वमेव निरूपितम् ॥

. . . . धिङ्मां दुष्कृतकर्माणम् ॥ (रा. यु.)

ममैव दुष्कृतं किंचिन्महदस्ति न संशयः । (सुं.)

इत्यादिवत् ;—

व्यसनेषु मनुष्याणां भृशं भवति दुःखितः । (अ.)

इत्यत्रापि 'तन्निग्रह एव तत्र गुणः' इत्यादौ क्रोधस्यादोषत्ववत् परदुःखदर्शनजन्यदुःखस्य भगवत्यदोषताया भाष्यतट्टीकयोरनुक्तेः श्रुतिविरोधाच्च । आश्रितरञ्जनार्थम्—

देवातिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ।

'जगतामुपकाराय' (वि. ६)

इत्युक्तदिशा मनुष्यस्वभावमात्रानुगुणदुःखमात्रांशे अभिनयः । तादात्विकानन्दमन्तरा लीलाया असंभवेन आनन्दप्रतिकोटिभूतदुःखस्य भगवत्यङ्गीकारासंभवात् । उक्तं च भट्टार्यैरपि ;—

'सुरमनुजतिरश्चां लीलया तुल्यधर्मा' इति ॥

'प्रीत्यंशे परं नाभिनयः ; किंतु तात्विकतैव ; प्रमाणाविरोधात् सृष्ट्यादेः कृपामूलताप्रतिपादकश्रुत्याद्यनुसाराच्च । अतो मानुषदेहे स्थितस्य भगवतो दुःखाभिनयमुखेन तात्विकप्रीतिप्रदर्शनस्य न वञ्चकतापर्यव-

भावप्रकाशः

सानम् । वल्लववसुदेवादिसाजात्याभिमानिनी मेधा सत्याऽस्य न नटनमात्रमिति सत्यमेधाः । स हि वल्लवानाह—

यदि वोऽस्ति मयि प्रीतिः श्लाघ्योऽहं भवतां यदि ।
तदात्मबुद्धिसदृशी बुद्धिर्वः क्रियतां मयि ॥ (वि. पु. ५-१३-१)
नाहं देवो न गन्धर्वो न यक्षो न च दानवः ।
अहं वो बान्धवो जातः न वश्चिन्त्यमतोऽन्यथा ॥ (५-१३-११)

इति भट्टार्यसूक्तौ प्रीत्यंशे अभिनयाभावस्य व्यक्तत्वात् । अतः सारोक्तरीत्यादरे भगवतो वञ्चकत्वं यत् कैश्चित् (गी. त. प्र.) उक्तम् ; तदनवकाशम् । सहजासहजकारुण्यद्वयप्रतिपादकं यच्च—

दया भूतहितैषित्वम् ।
दया च सर्वभूतेषु सर्वत्रानुग्रहः स्मृतः ।

इति व्यासयोगयाज्ञवल्क्यवचनद्वयम् (श्रु-प्र-ता दी) तत्पूर्वोदाहृतवचनैकार्थं दयायाः परदुःखदुःखितारूपतां विघटयत्येव । एतेन ;—

ःज्ञानवानः परवीरहन्ता
रामो मुहूर्तं विमना बभूव ।

इत्येतदपि उक्तदिशैव संगमनीयम् । अन्यथा विमना इत्यादावुक्तस्य इन्द्रियक्षोभस्य तन्निबन्धनप्रवृत्त्यभावस्यापि तात्त्विकता तथा इन्द्रियाधीनव्यापारवत्ता च प्रसज्यते । न चेष्टापत्तिः ! 'पश्यत्यचक्षुस्स शृणोत्यकर्णः' इत्यादेरपि स्वेच्छया संकोचकल्पनप्रसङ्गात् । एवं मायासीतावधश्रवणकाले हता मायासीता इति ज्ञानाभावस्य समनन्तरशोकादेः विभीषणवाक्यश्रवणसमनन्तराज्ञाननिवृत्तिचित्तसमाधानयोः चित्रकूटे भरतवाक्यश्रवणात्पूर्वं स्वपितुर्मरणाज्ञानस्य तदनन्तरं मरणज्ञानेन शोकस्य शापेन सीतावियोगस्य तद्वासस्थलाज्ञानशोकादेश्च आसुरप्रकृतिमोहनाद्यर्थत्वमनङ्गीकृत्य तात्त्विकत्वाङ्गीकारे 'यस्सर्वज्ञ-

### भावप्रकाशः

स्सर्ववित्' इत्यादेरपि स्वेच्छया संकोचकल्पनमापद्यते । 'अविज्ञाता' इति नामभाष्ये श्रुतेरसंकोचेनैवार्थ उक्तः 'एष एवासाधु कर्म कारयति' इत्यादिश्रुतौ दयां प्रस्तुत्य 'सा च स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते तन्निग्रह एव तत्र गुणः' इत्यत्र भाष्योक्तौ 'दुरारिहा' इत्यादिनामनिर्वचनावसरे 'प्रपन्नपरिपालनार्थत्वाद्दुराचार-दण्डनार्थत्वाच्च खलु परमकारुणिकस्यैव विप्रलम्भसंभवः' इत्यादौ च 'आसुरप्रकृतिमोहनमपि न दोषः' इति व्यक्तम् ॥

यद्यपि भट्टार्यैः ;—'व्यसनेषु+दुःखितः' इति 'बहुस्याम्' इति श्रुत्यनुसारेण तदवस्थजीवाभिमानपरमित्युक्तम् । तथाऽपि अज्ञानादिसाधा-रण्येनाचार्यपादैरेकैव रीतिराश्रिता इति बोध्यम् । अत आश्रितरञ्जनार्थम् आसुरप्रकृतिव्यामोहनार्थं च दुःखाज्ञानांशे मनुष्याद्यवस्थानुकाररूपाभिन-यमुखेन प्रवृत्तैरावतारिकवृत्तान्तैः श्रुतिसंकोचरूपबाधकल्पनमनुचितम् । बुद्धाद्यवतारमुखेन आसुरप्रकृतिमोहनं सर्ववैदिकसंमतम् ॥

विरोधपरिहारे लोकवृत्तिं भरतादिशास्त्रप्रसिद्धिं चानुसृत्य जीवस्य देवादिवेषपरिग्रहसंपादनेन परव्यामोहनरसानुगुणतया लीला-विभूतिविभाग उपपादितः । सृष्टौ लीलायाः प्राधान्यं तत्त्वत्रय-व्याख्यानेऽपि स्फुटम् । एवं 'शासनानुवर्तिनं ज्ञात्वा कारुण्यात्' इत्यादि द्रमिडभाष्ये वर्धनहेतुकारुण्यस्य शासनानुवृत्तिसापेक्षत्वाभिधानेन परदुःखदुःखितारूपत्वाभावसहेतुकत्वयोः बोधनं स्फुटम् । एवं च ;—

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ सात्विकी ॥ (१८-३०)

इति गीताभाष्ये शास्त्रातिवृत्तिर्भयस्थानम् तदनुवृत्तिरभयस्थानमित्युक्ति-स्संगच्छते । द्रमिडभाष्ये ज्ञात्वेति–हेतोर्वर्धनसामानाधिकरण्यार्थम् ॥

**भावप्रकाशः**

एतेन (वे. सा.) 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (३-२-४) इति सूत्रोदाहृतयोश्श्रुत्योः 'अथ तस्य भयं भवति' 'अथ सोऽभयं गतो भवति' इत्यनयोरर्थः निरणायि। अभ्युगतश्चायमर्थः भट्टार्यैरपि—स्वशासनातिवर्तिन्यनुवर्तिनि यथासङ्ख्यं भयकृत् भयनाशन इति। महागर्तः—एवं स्वशासनातिलङ्घिनामसुराणां निग्राहकत्वमुक्तम्। अथ दैवी सम्पदमभिजातानां स्वशास्त्रवश्यानामनुग्राहकत्वं महाभूतः इति चोक्तेः—

(२-२-३) श्रीभाष्ये 'तदनुग्रहनिग्रहायत्ते तत्फले सुखदुःखे। पुण्यरूपकर्मकारिणं शासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते। निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते' इत्युपक्रममध्योपसंहारवाक्यैः सुखं मोक्षः निरतिशयसुखम् इत्येकमेव वस्तु भिन्नरूपेण दर्शितम्॥

एवं च 'फलमत उपपत्तेः' इत्युक्तदिशा धर्मार्थकामवृद्धेरिव मोक्षवृद्धेरपि शासनानुवृत्तिसापेक्षत्वे पूर्वमभिहिते निरतिशयसुखवृद्धिः तन्निरपेक्षा कथं भवितुमीष्टे? निग्रहफलं दुःखम्। शासनातिवर्तिनं च तद्विपर्ययैर्योजयतीति विशदयन्मध्यवाक्यं शासनाननुवर्तिनं—विहिताकरणेन शासनातिवर्तिनं पुरुषं कथं न विषयीकरोति। उपक्रमोक्तमनुग्रहम् उदाहृताहिर्बुध्न्यसंहितादिकमभिसन्धाय दयाशब्देन निर्दिश्य सा च स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते तन्निग्रह एव तत्र गुणः' इत्यनेन निग्रहप्रतिकोटिभूतं गुणमुपक्रमोक्तमनुग्रहमेव दयारूपं बोधयन् भगवान् भाष्यकारः कथं परदुःखदर्शनजन्यदुःखं दयाशब्दार्थमभिप्रैति? 'शासनातिवृत्तिव्यवसायिन्यपि' इत्यत्र शासनातिवृत्तिव्यवसायोऽपि शासनातिवृत्तिवृक्षाङ्कुरबीजभूतः 'शासनातिवर्तिनम्' इत्यत्रोक्तशासनातिवृत्तिरूप एव;—

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्। (वे. सं उ.)

तत्त्वमुक्ताकलापः

**कृच्छ्रात्संवर्तकष्टाद्यपगमजनितस्थूलदेहस्य जन्तोः जाग्रत्स्वप्नस्सुषुप्तिर्मरणमथ मृतेरर्धसंपद्दशाः स्युः ।**

सर्वार्थसिद्धिः

* निर्वेदं संधुक्षयन् मुमुक्षोत्पत्तिप्रकारमाह ;—**कृच्छ्रादिति । मृतेरर्धसंपत्**—मूर्छा ; तथा च सूत्रम् ;—'मुग्धेऽर्धसंपत्तिः परिशेषात्'। सर्वम्—अनुकूलतया भाव्यमानमपि । ननु स्वर्गस्वाराज्यादिप्रभूतसुखमप्यस्ती-

आनन्ददायिनी

ननु मोक्षेच्छया शास्त्रप्रवृत्तिरिति [illegible] नोपपद्यते । ऐहिकामुष्मिकस्वर्गादिसुखाभिलाषया प्रतिबन्धात् । तथाचाननुष्ठानलक्षणाप्रामाण्यं स्थितमेवेत्याक्षेप[1]सङ्गत्याह ;—**निर्वेदं संधुक्षयन्निति । अनुकूलतयेति**—

भावप्रकाशः

इति गीतार्थबोधनार्थमुक्तः । एवंस्वशासनातिवृत्तिव्यवसायनिवृत्तिमात्रेण स्वयमेव प्रयतते इत्यत्र शासनातिवृत्तिव्यवसायनिवृत्तिः शासनानुवृत्तिवृक्षाङ्कुरबीजभूता 'शासनानुवर्तिनं' इति पूर्वोक्तशासनानुवृत्तिरूपैव ;—

श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः । (वे. सं. उ.)

इति गीतार्थबोधनार्थमुक्ता । एवं स्थिते ; केषांचिदुक्तिः स्वोत्प्रेक्षितार्थस्य भगवति श्रीभाष्यकृत्यारोपेण 'एतैरुपायैर्यतते यस्तु विद्वान्' इत्याद्यनुयायि विद्वद्गोष्ठ्यां हासास्पदमेव भवति ॥

अतो रचनानुपपत्त्यधिकरणश्रीभाष्यं द्रमिडभाष्यविवरणरूपं केषांचिन्मतस्यानवकाशतां प्रदर्शयत् पाराशर्यादिद्रमिडभाष्यकारान्तसिद्धान्तं निष्कण्टकीकरोतीति दिक् ॥

* निर्वेदमिति ;—निर्वेदश्च;—

तत्वज्ञानापदीर्ष्यादेर्निर्वेदःस्वावमाननम् ।

---

[1] सङ्गत्यभिप्रायेणाह—क. ख.

तत्वमुक्ताकलापः

**सर्वं दुःखान्धकारस्थगितमिह सुखं त्वत्र खद्योतकल्पम् त्यक्त्वा शुद्धाशयास्तन्निरवधिकसुखां निर्विविक्षन्ति [1]मुक्तिम् ॥ २६ ॥**

सर्वार्थसिद्धिः

त्यत्राह ;—**सुखं त्विति** । अल्पास्थिरत्वव्यक्त्यै **खद्योत**दृष्टान्तः । **तत्**—विषमधुकल्पं वैषयिकसुखम् । **निरवधिकत्वोक्त्या** निर्दुःखत्वमपि लक्ष्यते । निर्विविक्षन्ति—भोक्तुमिच्छन्तीति ॥ २६ ॥

आनन्ददायिनी

कलत्रपुत्रमित्रार्थगृहक्षेत्रधनादिकैः ।
क्रियते न तथा भूरि सुखं पुंसां यथा सुखम् ॥

इत्याद्युक्तप्रकारेण सुखसाधनतया भ्राम्यमाणस्य दुःखसाधनत्वादिति भावः । तुशब्दस्य विशेषार्थकत्वात् स्वर्गादिविशेषपरत्वं सामान्यशब्दस्येत्यभिप्रायेणाह ;—ननु स्वर्गेत्यादिना । **अल्पेति** ;—खद्योतप्रकाशस्याल्पत्वादस्थिरत्वाच्चेति भावः । **तद्विशेषेति** ;—स्वर्गादीनामपि वैषयिकत्वात् पुना रागवर्धकत्वेन बन्धकत्वादिति भावः । प्रवेशार्थकस्याप्युपसर्गवशाद्भोगार्थत्वामित्याह ;—भोक्तुमिति । विवक्षन्तीति [2]क्वचित् पाठः ; [3]तदा वचेस्सनि रूपम् । वचनस्येच्छापूर्वकत्वादिति चोच्यते ॥

कृच्छ्रादित्यादिमूलस्य प्रलयदुःखाद्यपगमेन स्थूलशरीरं प्राप्तस्येत्यर्थः । इति दशास्स्युरितिशब्दोऽध्याहर्तव्यः । जाग्रच्छब्दो यद्यपि शत्रन्तः पुरुषवचनः तथाऽपि भावप्रधाननिर्देशप्रचुरप्रयोगाद्दशापरः इति केचित् । यद्वा जाग्रतः स्वप्नो जाग्रत्स्वप्नः जाग्रतोऽनन्तरस्स्वप्न इत्यर्थः । स्थगितं—छन्नम् ॥ २६ ॥

---

[1] मुक्ताः—**क. ख.** [2] बहुशः पाठः—**ग.** [3] तदावशकान्तावितिधातुः—**क. ख.**

## सर्वार्थसिद्धिः

**इह सयूथ्याः परे च केचिदाहुः;—इतः पूर्वमिव कारणाभावात् केचित् पश्चादपि न मोक्ष्यन्ते;—**

**[1] एकं पादं नोद्धरति [2]स्वलीलाद्यर्थं? [3]समुद्धरन्।**

## आनन्ददायिनी

नन्वेवमपि मुमुक्षायां सत्यामपि मुक्तिसाधने प्रवृत्तिर्नोपपद्यते; [4] आत्मनो नित्यबद्धत्वशङ्कया प्रवृत्त्यसम्भव इत्याक्षेपसङ्गत्याऽऽह—**इह सयूथ्या इति।** सयूथ्याः—श्रीराममिश्रप्रभृतयः। परे—माध्वादयः। ननु 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मोपासनस्यावश्यं फलव्याप्तत्वात् [5] कारणे सति कथं न मुक्तिः? इत्यत्राह;-**कारणाभावादिति।** केषाञ्चिदुपासनमेव नास्तीत्यर्थः। तत्र किं प्रमाणमित्यत्राह;—**एकं पादमिति।**

## भावप्रकाशः

इति गान्धर्ववेदिवचनानुसारेण स्वावज्ञारूपः। स च हेयसङ्गमुपादेयवैतृष्ण्यं च परामृश्य भवति (गी. २-५२ ता. चं)॥

काव्यप्रदीपे (उ. ४-३१) निर्वेदग्लानि इति मूलविवरणावसरे इय कारिका उपात्ता। एतेन—

अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा। (द. श) इत्यत्र निर्वेदशब्दोऽपि व्याख्यातः। तेनात्र निर्वेदशब्दस्य दुःखार्थकत्वशङ्काया नावकाशः। एवं च प्रलयकाले भगवतो यो निर्वेदः स जीवनिर्वेदमन्तरा नेष्टपूर्तिमाधत्ते किं तु जीवनिर्वेदानन्तरमेवेत्युक्तं भवति॥

[1] एकं पादं नोत्क्षिपति सलिलाद्धंस -च्चरन्।
तं चेत् सततमुत्क्षिपेत् न मृत्युर्ना मृतंभवेत्॥

इति **शांकर, सन, सु, भा,** संमतः पाठः। नोत्क्षिपति—नोद्धरति इति च तैर्विवृतम्। 'एकं पादं—च्चरन्। स चेदुत्क्षिपेत् पादं—वेत्' इति आथर्वणिकश्रुतिरप्युदाहृता तत्र। एकं पादं समुत्क्षिपति इति तु वादिराजसम्मत पाठः। [2] स्वलीलार्थम्—**क.** 'स्वलीलाद्यर्थ समुद्धरन्' इति सर्वार्थसिद्धिकोशेषु दर्शित पाठस्तु क्वत्य इति चिन्तनीयम्। [3] समुद्धरन् इति पाठ विमलबोधादृतः। [4] स्यात्मनि—**क. ख.** [5] त्वात् तस्मिन् सति—**क. ख.**

## तत्त्वमुक्ताकलापः

**कश्चिच्चेन्नित्यबद्धः किमयमहमिति स्यान्मुमुक्षोरुपेक्षा**

### सर्वार्थसिद्धिः

[1] तं चेत्? [2] सततं च मृत्यु? जन्म[3] नामृतं भवेत् ॥

क्षिपाम्यजस्रमशुभान् . . . . . . . . ।

मामप्राप्यैव . . . . . . . . . . . . ।

इत्यादिभिरेतत्सिद्धम् । तस्मिन् पक्षे बाधकं शङ्कते ;—**कश्चिदिति** ।

### आनन्ददायिनी

मोक्षयिष्यन् स्वलीलारससिद्धये प्राणिजातेष्वेकांशं नोद्धरति न मोक्षयिष्यतीत्यर्थः । **सततं चेति** ;—सततं जन्मजरामरणजन्मवत्त्वान्न मुक्तो भवतीत्यर्थः । 'मामप्राप्य' इति कालविशेषानिर्देशेन सर्वकालप्रतीतेरित्यर्थः । **बाधकं शङ्कत इति** ;—नित्यबद्धस्स्वयं चेत् मोक्षार्थस्वप्रयत्नवैफल्यादिति भावः । न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्यत्राह ;—

---

[1] 'तं चेत्सतत —**क.** तं चेत्सन्ततमृत्विजम्' इति पाठः अर्जुनमिश्रसर्वज्ञनारायणविमलबोधैरादृतः । तं चेत्सन्ततमूर्ध्वाय इति पाठ नीलकण्ठेनादृत । [2] सततमृत्युज–**ख.** 'सततमृत्विजम्' इति पाठ. विमलबोधेनानूदित । शङ्कराचार्यपरिगृहीतः आथर्वणिकाधीनश्च पाठो दर्शित एव । न मृत्युरमृतं भजेत् इति पाठः अर्जुनमिश्रेण परिगृहीत । तत्तत्परिगृहीता पाठा यथा स्वं विवृतास्तै· प्रकृतानपेक्षिता इत्युपेक्षिताः । शङ्कराचार्यपरिगृहीतपाठस्य तु 'संसाराद्बहिरेव वर्तमानः परमात्मा जीवाख्यमेकं पादं नोद्धरति—नोपसंहरति । तं जीवाख्यं पादं सन्ततयायिनं यदि उत्क्षिपेत् तदा न मृत्यु न जननमरणादिलक्षणोऽनर्थस्संसारो भवेत् तथा अमृतत्वं मोक्षो न भवेत् इति तद्विवरणसारः । आचार्यपरिगृहीतः पाठः एवंविध एव स्यादिति संभावयामः ॥

### तत्वमुक्ताकलापः

**मैवं युक्तस्य [1] मुक्तिर्भवति दृढमिति प्रत्यया-त्तत्प्रवृत्तेः ।**

### सर्वार्थसिद्धिः

संदेहेऽपि प्रवृत्तिस्संभवतीत्यभिप्रायेण प्रतिवक्ति ;—**मैवमिति** । अयं भावः ;—

स्वरूपे योग्यभावेऽपि सहकार्यव्यवस्थितेः ।
विमुक्तिर्मम सिध्येद्वा न वेति विचिकित्सते ॥
अनिर्धार्यापि यः कश्चित्तथ्यमात्ममनोरथः ।
पाक्षिके फलभूयस्त्वे सांयात्रिकवदीहते ॥
यथाकथंचिदारब्धेऽप्यापवर्गिकवर्त्मनि ।
प्रसीदन्नीश्वरो बुद्धिं प्रयच्छेन्निश्चलामिति ॥

उपायविधानशास्त्रार्थनिश्चयात् स्वस्य तदानुगुण्यदर्शनात् निस्संशयोऽपि कश्चित्प्रवर्तेतेत्याह ;—युक्तस्येति ॥

### आनन्ददायिनी

**अयं भाव** इति । संशयो न प्रतिबन्धकः प्रवृत्ताविति भावः । अन्यथा सर्वमुक्तिपक्षेऽपि दोषस्स्यादित्याह ;—**स्वरूपेति** । मुक्तौ स्वरूप-योग्यस्य भावः स्वरूपयोग्यता ; तस्मिन् सत्यपि सहकारिणो विद्यो-त्पादकस्याव्यवस्थितेरप्राप्तिसंभवात विमुक्तिः मोक्षः भवेन्न वेति विचिकित्सते—सन्दिग्धे । तथा च सर्वस्य मुक्तियोग्यतापक्षेऽपि सन्देहस्य सुलभत्वात् प्रवृत्तिर्न स्यादिति भावः । [2] ननु तर्हि पक्षद्वयेऽपि दोषे मोक्षार्थप्रवृत्तिरेव न स्यादित्यत्राह ;—**अनिर्धार्येति** । आत्मनो

---

[1] मुक्तिर्दृढमिति भवति—**क. ख.** [2] ननु पक्षद्व—**क. ख.**

तत्वमुक्ताकलापः

## नो चेत्स्यामन्त्यमुक्तः किमहमिति न केऽप्यद्य मुक्तौ यतेरन्

सर्वार्थसिद्धिः

अन्यथा कथञ्चिन्निष्फलयत्नोऽप्यस्तीति निश्चयात् स किमहमिति कृष्यादावपि न प्रवर्तेतेति भावः । नो चेदित्यादिनाऽपि प्रतिबन्द्यन्तरोक्तिः । स्वात्मन्यन्त्यमुक्तत्वशङ्कायामपि कृतांशः फलिष्यत्येवेति शास्त्रतोऽवगमात् प्रवर्तेतेति चेत्; एवं नित्यबद्धसद्भावनिश्चयेऽपि स्वयं निवृत्तिधर्मयोग्यतया दृष्टः कृतमपि फलिष्यतीति किन्न प्रवर्तेत? एवं नित्यबद्धे संभवति;—

अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ।

आनन्ददायिनी

मनोरथ इच्छा; तस्याः फलाभाव इति निश्चित्यापि फलस्य भूयसः पाक्षि[1]कज्ञानमात्रेणापि पोतवाणिज्ये समुद्रपतनादिबह्वपायसम्भवेन पाक्षिकविपरीतफलकत्वज्ञानेऽपि प्रवृत्तिदर्शनात् अत्र सुतरां प्रवृत्तिर्भवतीति भावः । यथा कथञ्चिदिति पद्यं गद्येनैकवाक्यम्; उपायारम्भमात्रेणोपायपूर्तिर्नियतेति प्रतिपादनात् । स्वस्य कथञ्चित्प्रारम्भसामर्थ्यनिश्चयेनोपायपूर्तेरपि निश्चयात् फलव्याप्यत्वेनोपायस्य तन्निर्णयाच्च प्रवर्तेत इत्यर्थः । केचित्तु यथाकथञ्चिदारब्धेऽपि सन्देहेनैव प्रथमं प्रवृत्तिः तदनन्तरमन्यफलासिद्धिपर्यन्तनिश्चयः । स्वयमेव भगवत्कृपा भवतीति नास्य मध्ये निवृत्तिशङ्कापीति पूर्वशेषं पद्यमित्याहुः । सन्देहस्य प्रवृत्तिप्रतिबन्धकत्वे प्रेक्षावत्प्रवृत्तिमात्रमुच्छिद्येतेत्यत्राह;—**अन्यथेति** । ननु नेहाभिक्रमनाशोऽस्तीति शास्त्रबलात् कृतस्यान्त्यमुक्तिकारणत्वनिश्चयात् प्रवृत्तिस्सम्भवतीति शङ्कते;—**स्वात्मनीति** ।

---

[1] कप्राप्तज्ञान—ख.

## तत्वमुक्ताकलापः

**सर्गस्थित्यादिसन्तत्यविरतिरत इत्येवमेकेऽन्यथाऽन्ये ॥ २७ ॥**

## सर्वार्थसिद्धिः

इत्यादिशास्त्रस्यार्थवत्त्वसिद्धिरित्याह ;—**सर्गेति** । अयमेव सिद्धान्त इति निश्चयव्युदासायाह ;—**इत्येवमेके** इति । पक्षान्तरमाह—**अन्यथाऽन्ये** इति । स्वरूपयोग्यानां शुकादिवत् कदाचित्सहकार्यागमान्मुक्तिस्स्यादेव;—

तदा संसारपान्थस्य याति मोहश्रमश्शमम् ॥

इत्यादेस्सङ्कोचकाभावादिति भावः ॥ २७ ॥

## आनन्ददायिनी

तर्हि कृतस्य फलव्याप्तत्वनिश्चयादेव प्रवर्तत इत्याह ;—**एवमिति** । फलव्याप्तसाधने प्रवृत्त्यौन्मुख्यमात्रेणात्मनि नित्यबद्धान्यत्वनिश्चयस्सं-भवतीति भावः । दृष्टः—निश्चित इत्यर्थः । एवमिति ;—सङ्कोचे माना-भावादिति भावः । **सङ्कोचकाभावादिति** ;—संसारपान्थशब्दस्य सर्वसाधारण्यादिति भावः । नन्वव्युच्छिन्नास्तत इत्यादि वचनबला-त्संकोचः किन्न स्यादिति चेत् ; न ; एतदनुसारात्तस्यान्त्यमुक्तिपर्यन्ता-विच्छेदपरतया सङ्कोचः किं न स्यादिति वैपरीत्यप्रसङ्गादिति भावः ॥२७॥

## भावप्रकाशः

* अयमेव सिद्धान्त इति ;—द्वैतवादिनापि बद्धमुक्तव्यवस्था दुरुपपादा । एकस्मिन्कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसम्भवादमुक्तानुपपत्तेः इति ब्रह्माज्ञान एकजीववादिन इष्टसिद्धिकृत आक्षेपस्य आत्मानन्त्येन परिहारपरारम्भणाधिकरणभाष्यात् ; लीलारसस्यापि तद्विलक्षणस्य त्रिगुण-पुरुषाद्युपकरणं नित्यमेव—इति वेदान्तसाराच्च—इति भावः । पक्षे चात्र महाप्रलयो नाभ्युपगम्यते बद्धमक्तव्यवस्था सार्वदिकीति न

### तत्वमुक्ताकलापः

**निश्शेषात्मापवर्गे विहतविहरणो विश्वकर्ता तदा स्यात् नित्यं चेत्कोऽपि दुःख्येत् निरुपधिकदयाहानिरस्येति चेन्न ; ।**

**पक्षः पूर्वो यदि स्यात् विहरणविरतिः स्वेच्छया नैव दोषः शिष्टे पक्षे निरुद्धा [1]निरुपधिकदया कुत्रचिन्नित्यमस्तु ॥ २८ ॥**

### सर्वार्थसिद्धिः

द्वयोरपि पक्षयोः दोषमाशङ्क्य प्रत्याह ;—निश्शेषेति । उत्तरार्धं पक्षद्वयदोषपरिहारार्थम् । पुरुषान्तरप्रतिरोधादिना लीला[2]विरतौ हि दोषः । न तु स्वेच्छया ; प्रवृत्तिवन्निवृत्तेरप्यैच्छत्वात् । क्वचि[3]न्नित्यं द[4]यारोधोऽपि तत्तज्जीवकर्मवशात् । अतः [5]प्रतिबन्धरहितेषु सावकाशा कृपा ; अल्पव्याजेनानन्तापराधसहनाच्च ॥ २८ ॥

### आनन्ददायिनी

ननु पक्षद्वयस्यापि दोषवत्त्वेन परित्याज्यत्वे मुक्त एव न स्यादित्याक्षेपसङ्गतिमाह ;—**पक्षद्वयेऽपीति** । निश्शेषं यथा भवति आत्मनां—जीवानां अपवर्गे सति—मुक्तौ सत्याम् । विश्वकर्ता—ईश्वरः ।

### भावप्रकाशः

अयमेव पक्ष आचार्याणामभिमतः ;—

त्वदुपसदनादद्य श्वो वा महाप्रलयेऽपि वा
वितरति निजं पादाम्भोजं वृषाचलशेखरः ।

---

[1] निरवधिक **क. ख.** [2] विहृतौ—**क.** [3] नित्यदया -**ख.** [4] दयानिरारोधोऽपि—**ग.** [5] प्रतिबन्धक- **क.**

## आनन्ददायिनी

विहृतं त्यक्तं विहरणं विहारो यस्य तथोक्तः। तथा लीलाविघातस्स्यादिति सर्वपक्षे दोष इत्यर्थः। यदि नित्यबद्धपक्षः तदा नित्यमेव कश्चिद्दुःखी स्यात् तथा तद्विषयदयाहीनतया वैषम्यदोषस्स्यादिति मूलस्यार्थः। क्वचिन्नित्यं दयारोधोऽपि नित्याया दयाया न प्रतिबन्ध इत्यर्थः। ननु दया नाम निरुपाधिकपरदुःखप्रहाणेच्छा। तस्याश्चे[1]त्कर्मणा प्रतिबन्धः तदा इच्छायाः फलाभावात् सत्यसङ्कल्पत्वं न स्यात्। यदि यस्याः कस्याश्चिदिच्छायास्सत्यत्वमात्रात्सत्यसङ्कल्पत्वम् तदा अस्मदादीनामपि तत्प्रसङ्गः। यदि तद्विषयकृपात्मिकेच्छैव नास्तीति ब्रूषे तदा क्वचित्कृपाविरहाद्वैषम्यतादवस्थ्यमिति चेत्; मैवम्; ईश्वरस्य यदीच्छा स्यात् तदा सा फलाव्यभिचारिणीति सत्यसङ्कल्पत्वम्। न च क्वचिन्नैर्घृण्यप्रसङ्गः! तद्विषये कृपारूपेच्छायोग्यतायास्सत्वात्। मोक्षयिष्यामीत्याकारा त्विच्छा कर्मणा प्रतिबन्धान्नास्त्येवेति न नैर्घृण्यप्रसक्तिः। यथा वदान्ये कस्मिंश्चित्कश्चिद्गर्वादिना न प्रतिगृह्णाति समीप वा नायाति तावताऽस्य वदान्यस्य का हानिरिति॥ २८॥

## भावप्रकाशः

तदिह करुणे! तत्तत्क्रीडातरङ्गपरम्परा-
तरतमतया जुष्टायास्ते दुरत्ययतां विदुः॥

इत्यादौ सिद्धान्तस्य व्यक्तत्वात्' इति (र. त्र. सा.) सुघाकृतः। पक्षे चात्र सृष्ट्यादेर्निर्हेतुककृपामूलकताप्रतिपादनपरपूर्वोदाहृतभाष्यस्य राजकुमारन्यायसम्प्रदायपरभाष्यस्य च स्वारस्यम्। आरम्भणाधिकरणभाष्यं पूर्वपक्षस्थं न सिद्धान्तः। एकजीववादे शुकादिमुक्तत्वव्यवहारासामञ्जस्येन इष्टसिद्धिकृन्मते बद्धमुक्तव्यवस्था कदाऽपि दुरुपपादा;

[1] त्कर्माणि—ग.

भावप्रकाशः

पक्षे चात्र प्रलयात्पूर्वं सूपपादा । बहुजीववादेऽपि तात्त्विकी नोपपद्यते इत्येव दूषणम् । समोऽहं सर्वभूतेषु ' इत्यतः परम् ।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
. . . . . . . . तेऽपि यान्ति परां गतिम् ॥

इत्यत्र आसुरयोनय एव पापयोनयः । एवं च ;--

मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥

इत्यनन्तरम् ;--

एतैर्विमुक्तः . . . . . . . .
आचरत्यात्मनश्श्रेयस्ततो याति परां गतिम् ॥

इत्यासुरयोनिविषयमेव । अत एव [illegible] आसुरयोनेरपि हिरण्यकशिपोः भगवदनुग्रहपात्रतोपपद्यते । ' मामप्राप्यैव ' इत्यत्राप्राप्तेस्सार्वदिकत्वानुक्त्या विलम्बेन प्राप्त्यभ्युपगमे बाधकाभावात् ' ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ' इति श्रुतिः महाप्रलयकाले सर्वेषां मुक्तिपरा । कार्याधिकरणवेदान्तदीपव्याख्या तु नित्यसंसारिपक्षाभिप्रायेणेति बोध्यम् । ' सर्वस्य शरणं सुहृत् ' (श्वे.) इत्यादयोऽप्येतत्पक्षेऽनुकूलाः ॥ २८ ॥

' धर्मस्य तत्त्वं निहितं गुहायाम्' इत्येतदुत्तरं ' महाजनो येन गतस्स पन्थाः ' इति वचनखण्डः । महाजनाश्च जैमिनि व्याससूत्रद्वयवृत्तिकारछान्दोग्यवाक्यकारद्रमिडभाष्यकारादयः पूर्वाचार्याः। तत्र वृत्तिकारमते उपासनं मोक्षसाधनमिति परेषामपि संमतम् । एवमेव वाक्यकारादीनां सिद्धान्त इति स्थापनेन ' अद्वैतमेव परिरक्षति वाक्यकारः ' (२-२ ? ० सं. शा.) इत्युक्तिः पर्यालोचिता वेदार्थसङ्ग्रह-श्रीभाष्ययोः (१-४-२७) । कल्पतरूदाहृतवाक्यकारवचांस्यपि ' आत्रेय-

**सर्वार्थसिद्धिः**

'धर्मस्य तत्वं निहितं गुहायाम्' । किं पुनर्निवृत्तिधर्मस्य? अतः

**आनन्ददायिनी**

नन्वेवमपि मोक्षसाधननिर्णयासम्भवान्न प्रवृत्तिरित्याक्षेपसङ्गति-माह;—**धर्मस्येति**। गुहायां निहितम्—अतिगूढम्; दुर्ज्ञेयमिति यावत्। भक्तिरष्टविधेत्यादिना कर्मरूपत्वं क्वचित्प्रतीयते। भक्ति-ज्ञानमिति लोकप्रसिद्धिः। 'यस्य देवे परा भक्तिः' 'भक्त्या माम-मभिजानाति' 'भक्त्या वेद्मि' इति ज्ञानं प्रत्येव भक्तेर्हेतुत्वं प्रतीयते।

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।

इति कर्मणां मोक्षहेतुत्वं क्वचित्। 'ब्रह्म वेद' इति ज्ञानमात्रस्य

**भावप्रकाशः**

वाक्यमपि संव्यवहारमात्रम्' इति (३-२१७) संक्षेपशारीरकाभिप्रेतानि परेषां नानुकूलानीति (३४८) पूर्वमुपपादितम्। संक्षेपशारीरक (३ अ. २२१ श्लो.) पर्यालोचनपूर्वकं सगुणपरतया (ब्र. स.) निर्णीते 'युक्तं तद्गुणकोपासनात्' इति वाक्यव्याख्याने 'यद्यपि सच्चित्तो न निर्भुग्न-दैवतं गुणगणं मनसानुधावेत्; तथाऽप्यन्तर्गुणामेव देवतां भजते' इति द्रमिडभाष्ये उपास्ते प्राप्नोतीत्यनभिधाय भजते इत्युक्त्या 'श्रद्धावान् भजते यो माम्' 'भजते मामनन्यभाक्' इत्यादिगीतावच-नानि प्रत्यभिज्ञाप्यन्ते; तेन उपासनं भक्तिरूपमेवेति विवक्षितमिति द्रमिडभाष्यकृन्निष्कर्षः प्रतीयते। एवं च 'एवमेतस्मादात्मनः—व्युच्च-रन्ति' (बृ. ४-१-२०) इति श्रुतिविवरणावसरे सेश्वरवादिमतं निरस्य यो राजकुमारन्यायः द्रमिडाचार्यसंमतः परैः (शं.) प्रदर्शितः; सः; सृष्टिश्रुतीनां जीवब्रह्मैक्यपरत्वमपाकुर्वन् पितरि पुत्रस्येव जगत्पितरि परब्रह्मणि नित्ये भक्तेर्मुक्तिसाधनतासिद्धान्त एव संगच्छते। योग-सूत्रोक्तसमाधिश्च भक्तावेव पर्यवस्यति। स्थापितश्चायमर्थः वेदार्थसङ्ग्रह-

## तत्त्वमुक्ताकलापः

# भक्तिः

### सर्वार्थसिद्धिः

कथं कश्चिदपि मोक्ष्यते ? इत्यत्र मोक्षोपायं निष्कर्षति—**भक्तिरिति** ।

### आनन्ददायिनी

'स्मृतिलम्भे' इत्यादौ ध्यानस्य 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति अविच्छिन्नज्ञानसन्ततेः ; इत्यादिविप्रतिपत्त्या निर्णयासम्भव इति भावः ॥

### भावप्रकाशः

श्रीभाष्यादिषु इति स एव श्रुतिसिद्धान्त इत्यभिप्रेत्याह ;—**मोक्षोपाय-स्वरूपं निष्कर्षतीति** । 'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तद-वस्थावधृतेः' (३-४-५१) इति सूत्रे मुक्तावनियमस्य विवक्षितत्वे फलशब्दोऽनर्थकः । अतोऽत्रापि 'विकल्पोऽविशिष्टफलत्वात्' (३-३-५७) इति सूत्रे अविशिष्टफलत्वात् इत्यत्रेव मुक्तिः फलं यस्य तत् इति बहुव्रीहिराश्रयणीयः ॥

एतेन अविशिष्टफलत्वात् इत्यत्र फलं मुक्तिरूपमेव विवक्षित-मिति बोधितम् । तेन 'नानाशब्दादिभेदात्' (३-३-५६) इति तत्पूर्वसूत्रेऽपि मुक्तिफलानामेव विद्यानां पूर्वमीमांसोक्तभेदकहेतुभि-र्भेदस्य विवक्षितत्वेन स्वर्गाद्यर्थक्रतुविधिवदेव मुक्तिफलत्वेनोक्तोपासन-विधिरपीति सिध्यति ॥

'पुरुषार्थोऽतः' इत्यत्र पादोपक्रमसूत्रे फलशब्दं त्यक्त्वा पुरु-षार्थशब्देन निर्दिष्टस्यैव 'एवं मुक्तिफलानियम' इति पादान्तसूत्रे मुक्तिशब्देन निर्देशात् पुरुषेणार्थ्यमानत्वं विवक्षितमित्यतोऽपि मुक्त्यर्थ-तयैवोपासनविधिस्सूत्रकृतो विवक्षित इति सिद्धम् ॥

## भावप्रकाशः

एवं च 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' (३-३-१) 'नानाशब्दादिभेदात्' इत्यत्र स्वर्गाद्यर्थत्वेन विहितक्रतुवत् मुक्त्यर्थतया विहितत्वेन विवक्षितस्य 'पुरुषार्थोऽतश्शब्दादिति बादरायणः' (३-४-१) इत्यत्र पुरुषार्थशब्देन मुक्तेरेव फलत्वं प्रदर्श्य तां प्रति हेतुत्वोक्तेः मुक्त्यर्थत्वेन साधनतया विहितं वेदनं विवक्षितम् इत्यभिप्रेत्य विद्यायाः 'ब्रह्मविदाप्नोति परम्' इत्यादिषु ब्रह्मावाप्तिरूपफलोपदेशात् 'विद्यात एव फलम्' इति (३-४-१) 'विद्या ब्रह्मप्राप्तिफलाय विधीयते' इति च (८) वेदान्तदीपे उक्तम् ॥

'आवृत्तिरसकृदुपदेशात्' इति तदनन्तरसूत्रेऽप्यावृत्तिसंबन्धिनिर्देशविरहेण मुक्तिफलशब्दस्यानुवृत्त्यैवार्थो वर्णनीय इत्यभिप्रेत्य श्रीभाष्ये 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादौ ब्रह्मप्राप्तिसाधनतया विहितस्य दृष्टोपायत्वाभावकथनेन अवघातादिवद्वेदनस्य ब्रह्मापरोक्षं प्रति दृष्टोपायतापक्षः (श.) पर्यालोचितः । श्रुतप्रकाशिकायां च ;—

'धातुः प्रसादाद्वीतशोकः'

मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यति ।

इत्यादिश्रुतिस्मृत्यविरोधात् अदृष्टोपायत्वं (४-१-१) स्थापितम् । मुक्तिफलशब्दस्यानुवृत्त्या मुक्तिफलस्यैवावृत्तिस्सूत्रकृतो विवक्षिता न तु परोक्तदिशा साक्षात्कारफलकस्य प्रत्ययस्य श्रवणमननयोश्च इत्यभिप्रेत्य 'तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते ; विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारयोर्दर्शनात्' इति तदर्थोऽभ्यधायि च (१-१-१) श्रीभाष्यकृद्भिः ॥

परैरपि (शं.) आवृत्त्यधिकरणे हेतुरयमुक्तः । 'एवं तैरेव विधिशेषत्वेन ब्रह्मसिद्धेः वृत्तिकारस्य नियोगवादिनस्संमतायाः दूषणार्थ-

**भावप्रकाशः**

मनुवादावसरे (१-१-४) 'यथा स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयते एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयते' इत्यभिहितम् ॥

श्रीभाष्ये (१-१-४) सदूषणं तन्मतं निरस्य विध्यशेषत्वेन ब्रह्मसिद्धिमन्यवृत्तिकृत्संमतां स्थापयित्वाऽपि 'ब्रह्मविदाप्नोति परम्' 'आत्मानमेव लोकमुपासीत' इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयत इत्येवार्थः' सिद्धान्तितः ॥

स च कर्त्रधिकरणे;—'शास्त्राणि हि यजेत स्वर्गकामः' 'मुमुक्षुर्ब्रह्मोपासीत' इत्येवमादीनि' (भा.) 'स्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामर्थवत्त्वाय' (वे. दी.) इत्युक्त्या; परायत्ताधिकरणे; 'जीवकृतयत्नापेक्षयैव विध्यवैयर्थ्यस्य शास्त्रार्थवत्त्व(फल)हेत्वनुग्रहस्य च निर्वाह्यत्वाभिधानेन च साधितः ॥

फलाधिकरणे च द्रमिडाचार्यपरिष्कृतदिशा विशदीकृतः । 'वेदनमुपासनं स्यात् तद्विषये स्मरणात्' इति वाक्यकारवचः 'सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनम्' इति च (१-१-१) विवृतम् ॥

एवं च मुक्त्यर्थत्वेन मुक्त्युपायतया वेदनविधिः सूत्रवृत्तिछान्दोग्यवाक्यतद्भाष्यकाराणामभिमतः न तु मुक्तिचरमवृत्त्योरैक्यम् न वा ध्यानस्य स्वयंप्रयोजनत्वेन अन्यार्थत्वे सति प्रसङ्गादुपकारकत्वम् मोक्षार्थतया अविधेयत्वे सति सर्वमुक्तिप्रसङ्गपरिहारार्थत्वम् इत्यादिरूपव्याजत्वमभिमतम् इति सिद्धम् । चतुर्थे विद्यास्वरूपनिरूपणं न स्वयं प्रयोजनत्वाद्यर्थं किंतु अन्यार्थम्—तथाहि—तृतीय एव साङ्गविद्यापरिशोधनं परिसमाप्य चतुर्थे विद्याफलमात्रनिरूपणे 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्यत्र विद्यापेक्षितत्वेनोक्तस्य कर्मणोऽपि फलं मुक्तिस्समुच्चय-

## भावप्रकाशः

वादिनाऽऽशङ्क्येत; तान्निवृत्तये विद्यायाः फलाध्यायनिरूपणेन अङ्गभूतकर्मफलतां प्रदर्श्य तदधिगमाधिकरणादौ अङ्गिभूतविद्याफलमप्यभिधाय 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' (४-१) इत्यत्र कर्मणः विद्याव्यतिरिक्तं फलं नास्तीति प्रतिपादनेन मुक्तिफलं व्युदस्तं भवति ॥

किंच चतुर्थे द्वितीयतृतीययोरुत्क्रान्तिगती निरूप्य गत्यनन्तरकालिकमेव विद्याफलं मुक्तिरूपमिति ज्ञापनाय चतुर्थे (पा.) तन्निरूपितम्। एवं सति 'अत्र ब्रह्म समश्नुते' इत्यादिश्रुतिविरोध इत्याक्षेपः चतुर्थे विद्यास्वरूपशोधनेन परिह्रियते। चतुर्थे (अ.) प्रथमे उपनिषत्सु ध्यानविधिरेवस्फुटः वर्तत इत्यभिप्रेत्य समाध्यनिरूपणेऽपि फलाध्याये विद्यास्वरूपशोधनेनैव विद्यायाः फलत्वबोधनात् तल्लाभो भवति इति 'अत्र ब्रह्म समश्नुते' इत्यस्य समाध्यवस्थैव विषयः न तु विदेहकैवल्यम्। समाध्यवस्थयैव च ध्यानस्य फलता; प्रीतिरूपध्यानस्यैव समाधित्वात् तस्यैव भक्तित्वाच्च। अष्टाङ्गयोगस्यैव मुक्तिसाधनतया ध्यानमात्रोक्तावपि तदनन्तरकालिकसमाधित्वभक्तित्वरूपावस्थालाभेन तदनिरूपणेऽपि क्षतिविरहात्। सूक्ष्मदेहवियोगानन्तरकैवल्यं तु गत्यनन्तरमेवेति अदृष्टद्वारा तत्साधनता योगस्याक्षता ॥

अपि च 'विनताः—न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठाः' इति 'प्रपदने तु लघुगुरुविकल्पानुपपत्तिरूपन्यायौ वचनबलप्रतिक्षिप्तः' इति 'उपासनरूपं न्यासरूपं चोपेयविरोधिनिरासकं ज्ञानमुत्तरपूर्वाघयोरुभयोरपि निरासकम्' इति (१-१-१) 'विद्याप्राप्तिशब्दस्साधारण्यात् प्रपदननिष्पत्तेरपि द्योतकः' (४-१-१३) इति श्रुतप्रकाशिकायाम्; 'एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोप-

## भावप्रकाशः

पद्यत (वे. सं) अथ उपायमाह ;—एतेषामिति । प्रपत्तिमन्तरेण नोपपद्यत इति भक्तियोगनिष्ठस्यापि तन्निष्पत्त्यर्थं तदङ्गतया प्रपत्तेरपेक्षितत्वात् प्रपत्तिनिष्ठस्य स्वतन्त्रतयोपायत्वाच्च प्रपत्तिमन्तरेण नोपपद्यत इत्युक्तम्' इति तात्पर्यदीपिकायां च प्रतिपादयन्तो व्यासार्याः 'नानाशब्दादिभेदात्' इत्यत्र अक्षरविद्यादिका इत्यादिशब्देन न्यासोऽपि विवक्षितः' इति 'विकल्पोऽविशिष्टफलत्वात्' इति अस्मिन्नधिकरणे 'न्यासविद्याऽभिप्रेता' इति चाभिदधति । भगवच्चरणारविन्दशरणागतिः आनुकूल्यादि शरीरवती । ताद्धि तस्या उपायान्तरेभ्यो व्यावृत्तं स्वरूपम्' इति । 'उत्तरोत्तरसाक्षात्काराभिनिवेशः परभक्तिः साक्षात्कारः परज्ञानं उत्तरोत्तरानुभवाभिनिवेशः परमभक्तिः' इति । परभक्तिस्थाने प्रपदनं परज्ञानपरमभक्ती देहसम्बन्धवेलायामुपासकस्योपायकोटिनिविष्टे । प्रपन्नस्य तु ते उपेयकोटिनिविष्टे इति । अतः भक्तिसाध्यं प्रपत्तेरेव लभ्यमिति निर्भरेण त्वया भवितव्यम् इति गद्यव्याख्यायां प्रतिपादयन्ति । अत्र उपासकस्याभिनिवेशरूपस्याप्युपायकोटिनिविष्टता प्रतिपादनेन स्वयंप्रयोजनत्वाभावः 'परभक्तिस्थाने प्रपदनम्'—इत्युक्त्या 'तेनतेनाप्यते तत्तन्न्यासेनैव' (अ.सं) इति वचनमभिप्रेत्य प्रयुक्तेन भक्तिसाध्यं प्रपत्तेरेव लभ्यमित्यत्रैवकारेणच प्रपन्नस्य नायमात्माभाष्याद्युक्तायाः अधिकारपौष्कल्यार्थमपि भक्त्यपेक्षायाः विरहश्च स्फुटः ।

एवं च स्वतन्त्रतयोपायभूताया उपासनभिन्नायाः सकृत्कर्तव्याया न्यासविद्याया अविशिष्टफलत्वस्य सूत्रकृत्तात्पर्यविषयता कथं घटते ? 'यद्येन कामकामेन' (अ. सं.) इत्यादिभिः तत्क्षणमेव मोक्षमिच्छतां निरपराधकैङ्कर्यपूर्वकमेतद्देहावसाने मुक्तिमभिलषमाणानां च शक्तानामपि न्यासविद्यायामधिकारेण न्यासविद्यायामेव सर्वेषां

## भावप्रकाशः

प्रवृत्त्या उपासाधिकारिविलयप्रसङ्गादिति शङ्कापरिहारार्थमपि चतुर्थे विद्यास्वरूपशोधनम् । तेन च समाध्यवस्थापन्नभक्तिसुखलाभेच्छया उपासने प्रवृत्तिरुपपद्यते इति सिद्धम् । यथोक्तम् ;—

प्रपन्नादन्येषां न दिशति मुकुन्दो निजपदम्
प्रपन्नश्च द्वेधा सुचरितपरीपाकभिदया ।
विलम्बेन प्राप्तिर्भजनसुखमेकस्य विपुलम्
परस्याशुप्राप्तिः परिमितरसा जीवितदशा ॥

(रह. सा. ८ अधि.)

श्लोकोऽयम् 'एतेषाम्' इत्यादि (वे. सं.) भाष्यकृत्सूक्तिविवरणरूपः । तदेतदभिप्रेत्योक्तं तदधिगमाधिकरणश्रीभाष्ये ;—'तदेवं विद्या वेदितु-र्वेद्यार्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती' इत्यादि ॥

एतच्च गीतासप्तमाध्यायभाष्यवेदार्थसङ्ग्रहतात्पर्यदीपिकापर्या-लोचनया समाधिरूपत्वेन भक्तिरूपत्वोपपादनपरमित्यनुपदमेव व्यक्ती-भविष्यति । अतो विद्यायाः स्वयं प्रयोजनत्वं न सूत्रकारादितात्पर्य-विषय इति मुक्तिफलाय वेदनविधिः श्रीभाष्योक्त एव युक्त इति सिद्धम् । मुक्तिपदस्य 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' (४-१) 'हानौ तु' इत्यादौ कर्ममोक्षपरत्वम् 'मुक्तोपसृप्यव्यपदेशाच्च' (१-३) इत्यादौ ब्रह्मप्राप्तेः कर्मक्षयानन्तरकालिकत्वम् ; 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (३-२-४) इत्यादौ अदृष्टद्वारकत्वं च व्यक्तम् ॥

'पुरुषार्थोऽत' इत्येतदर्थसाधके 'अधिकोपदेशात्' इति सूत्रे 'अधिकं तु भेदनिर्देशात्' इत्यत्र स्थापितमेवाधिकत्वं विवक्षितमिति न तिरोहितं विदुषाम् ॥

## भावप्रकाशः

तेन 'पुरुषार्थोऽत' इत्यत्र जीवभिन्नेशज्ञानं मुक्तिसाधनमित्येव विवक्षितम्। एवं च राजकुमारस्य व्याधवर्धितस्य प्रायश्चित्तेन शुद्धस्य राजप्राप्तिवत् प्रकृतिवर्धितस्य विद्यया शुद्धस्य जीवस्य ब्रह्मप्राप्तिरिति सिध्यति ॥

एतेन विद्याफलश्रुतेरर्थवादत्वं निरस्तम्। एवं च (४-१-२) 'य आत्मा अपहतपाप्मा' 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' 'संपद्याविर्भावस्स्वेन शब्दात्' 'मुक्तः प्रतिज्ञानात्' इति छान्दोग्यश्रुतिसूत्रोक्तः आविर्भावः पापक्षयानन्तरकालिकः। 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रानुसारेण परसङ्कल्पहेतुकश्चेति प्रतीयते। श्रुतौ च 'अस्माच्छरीरात्समुत्थाय' इत्यनेन उत्क्रान्त्यनन्तरकालिकत्वं परञ्ज्योतिरुपसंपत्तौ प्रतिपादितम्। तेन उपसंपद्येत्यत्रोपसर्गाच्चार्चिरादिगत्यनन्तरकालिकत्वमपि सिध्यतीत्यभिप्रेत्य उत्क्रान्तिगतिपादानन्तरपादोपक्रम एवैतच्छ्रुत्यर्थनिष्कर्ष उक्तः। 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति छान्दोग्यचतुर्थप्रपाठकश्रुतेः प्रकृतिमण्डलादूर्ध्वस्थानविशेषपरता वृत्तिकाराभिप्रेतेति (१-१-४) वृत्तिकारमतदूषणावसरे पञ्चपादिकाभामत्योर्व्यक्तम्। एवं ब्रह्मसिद्धावपि। तेन ज्योतिरुपसंपत्तिः तत्स्थान एव विवक्षिता वृत्तिकृतामिति सिद्धम् ॥

'अविभागेन दृष्टत्वात्' (४-४-४) इति सूत्रे ऐक्याभेदादिशब्दान् विहाय अविभागशब्दप्रयोगान्न जीवेशयोः स्वरूपैक्यम्; किंतु नीरन्ध्रसंश्लेषः जातिगुणाविभागवत् पारतन्त्र्यपर्यवसितः इति (३३०) पूर्वमेव निरूपितम्। द्रव्यगुणकर्मसामान्यविशेषशक्तिपारतन्त्र्यनियोगा इत्यष्टौ प्राभाकराः (८९४) इति (पं. पा.) विवरणं समवाया-

## भावप्रकाशः

नभ्युपगन्तृ जरत्प्राभाकरपरमिति निर्णीतं विवरणप्रमेयसङ्ग्रहे विद्यारण्ययतिभिः । परिनिष्पन्नपरिकल्पितपरतन्त्रस्वभावत्रयस्य शून्यवादिभिः निराकरणेऽपि तद्व्यतिरिक्तानां बौद्धानां कार्यकारणभावस्येव पारतन्त्र्यस्य संबन्धता सम्मतेत्येव प्रतिभाति । अत एव प्रभाचन्द्रेण जैनेन (प्र. क. मा. १४९) उक्तं च —

पारतन्त्र्यं हि सम्बन्धः सिद्धे का परतन्त्रता ।
तस्मात्सर्वस्य भावस्य सम्बन्धो नास्ति तत्त्वतः ॥ इति ।
पारतन्त्र्यसम्बन्धस्य दूषणार्थमनुवादस्संगच्छते ।

एवं च 'अनेन जीवेनात्मनाऽनुप्रविश्य' 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः' इत्यादिभिः जीवेशयोरपि पारतन्त्र्यपर्यवसित एवाविभागस्सिध्यतीति 'अविभागेन दृष्टत्वात्' इत्यत्र सएवविवक्षितः । एवं अविभागसंवलिततादर्थ्यं शरीरशब्दप्रवृत्तिनिमित्तम् शरीरवाचिशब्दाश्च शरीरिपर्यन्ताः इति 'अर्थैकत्वमविभागात्, इत्यादिसूत्रप्रणेतुर्जैमिनेर्हृदयमिति निर्धारणेन 'ब्राह्मणो यजेत' इत्यादौ ब्राह्मणादिशब्दा न लाक्षणिका'। 'सर्वात्मश्रुतयश्च सर्वस्यात्मार्थत्वात्तादर्थ्यनिमित्तोपचारात् (प्र. प. त. आ.) इति मण्डनदूषकशालिकानाथोक्तसरणिरपि नादर्तव्या तत्रापि भगवतस्सर्वशरीरकत्वेन मुख्यत्वसंभवात् 'अविभागेन दृष्टत्वात्' इति सूत्रेण तथा निर्णयात् इति निर्णीतं श्रीभाष्यकृद्भिः । परैरपि (शं.) अत्र सूत्रे 'तत्त्वमसि' 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' 'तादृगेव भवति' इति श्रुतीरुदाहृत्य 'नदीसमुद्रादिनिदर्शनानि च' इत्युक्तम् । तत्र 'न तु' इत्यादि श्रुतिद्वयं निदर्शनानि च परेषां नानुकूलानीति पूर्वमेव निरूपितम् । 'न तु' इत्यादौ विभक्तशब्दप्रयोगेण विभक्तस्यैव निषेधः नत्वविभक्तस्येति स्फुटम् । 'तादृगेव' इत्यतः

**भावप्रकाशः**

पूर्वं 'एवं धर्मान् पृथक्' इत्यत्र पृथक्शब्देनैकार्थः 'नेह नाना' (क. उ.) इत्यत्र नानाशब्दः। एवं च तत्रापि विभक्तस्यैव निषेधः इति सिद्धम्। 'क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति ;—

"यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"

(मुण्ड. ३-२-८) इति। यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्त्येवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैतीति हि तत्रार्थः प्रतीयते (१-४-२१) इति परोक्तार्थस्यैव युक्ततया ब्रह्मज्ञानेन नामरूपसामान्यविनिर्मोकस्यासंभवेन स्वरूपैक्यातिरिक्ताविभाग एव ततस्सिध्यति। एवं च (छा. ६-१०) नदीसमुद्रनिदर्शनोक्त्यनन्तरं 'तत्त्वमसि' इति वाक्येऽपि पूर्वोक्त एवाविभागः विवक्षितः नीलमुत्पलम् इति वाक्यवदेव सामानाधिकरण्यमिति निर्व्यूढम्।

अत एव 'यथा मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳरसान समवहारमेकताꣳ रसं गमयन्ति। ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमास्सर्वाः प्रजास्सति संपद्य न विदुस्सति संपद्यामह इति' इति (छां.) नवमखण्डोक्तदृष्टान्तोऽपि सङ्गच्छते। परैरप्यस्यास्सुषुप्तिमरणप्रलयपरतया (उ. भा.) विवरणस्य करणेन सुषुप्त्यादौ जीवपरयोस्स्वरूपैक्यस्य परासम्मततया पूर्वोक्ताविभागस्यैव तत्र विवक्षितत्वेन 'तत्त्वमसि' इत्यत्रापि तस्यैव विवक्षाया विदुषामकामेनाऽपि स्वीकारस्यावश्यकत्वात्॥ अत एव सद्विद्यायां 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते' इत्युत्क्रान्तिः—'यावन्न विमोक्ष्ये अथ संपत्स्ये' इति मोक्षः—तदनन्तरं संपत्तिरिति च सद्विद्यानिष्ठविषयतयैव स्वरसतस्संगच्छन्ते।

## भावप्रकाशः

परमात्माभ्युपगमपक्षे जीवपरयोरुक्ताविभाग एवोपनिषत्सु सामानाधिकरण्यनिर्वाहक इत्यभिप्रेत्य भट्टपादैरपूर्वाधिकरणे (२-१५) एकात्मवादानिराकरणावसरे; — 'चैतन्यात्मकत्वाद्यविभागाच्चोपनिषत्सु ऐकात्म्यव्यवहार इति। संमार्गाधिकरणे (२-१-१२);—

तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः॥

इति चोक्तम्। 'एकत्वश्रुतिः जातिदेशकालविभागाभावनिमित्तोपचारात् 'आत्मैवेदं सर्वम्' इति च तादर्थ्यनिमित्तोपचारात् इति वृत्तिकारानुयायिभट्टप्रभाकरमतमुपक्रम्य तत्र तत्र ब्रह्मसिद्धौ (६) मण्डनमिश्रदूषितोऽपि अयं वृत्तिकारसंमतः मुक्त्युपायविधिपक्षः परिष्कृतस्सिद्धान्तितश्च भगवता भाष्यकृता लघुसिद्धान्ते। आत्मसिद्धौ यामुनमुन्युक्तं निर्विशेषस्याप्रामाणिकत्वं च विशदीकृतं महासिद्धान्ते। 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इति सूत्रयन् व्यासः परविद्याविषयं सगुणं प्रधानजीवभिन्नमीशं निर्धारयतीति स्थापितमदृश्यत्वाधिकरणे। एतेन औपनिषदी विद्या सर्वाऽपि सगुणविद्यैवेति सिद्धम्॥

शङ्कराचार्यैरपि (४-१-१३) 'यत्पुनरेतदुक्तं न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति—अत्र ब्रूमः सगुणासु तावद्विद्यासु विद्यत एव विधानम्। तासु च वाक्यशेषे ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते तयोश्चाविवक्षाकारणं नास्तीत्यतः पापप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते' इत्युक्तम्। एवं च 'क्षीयन्ते चास्य कर्माणि' इति पूर्वं शङ्कराचार्यैस्तत्रोदाहृतश्रुतिरपि प्रायश्चित्तसगुणविद्यापरैवेति व्याससिद्धान्तः॥

### भावप्रकाशः

एतेन (ब्र. सि.) मण्डनमिश्रोक्तदूषणान्यलग्नकानि। तथाहि ;— ेन मुक्त्युपायज्ञानविधिपक्षे ध्वंसस्य कार्यस्य नित्यत्वाङ्गीकारेऽपि ावकार्यस्य स्वरूपाविर्भावस्य नित्यत्वमनुमानबाधितमित्यभिधाय पुनरावृत्तिश्रुत्या नित्यत्वसिद्धिं परिचोद्य 'वर्तमानापदेशात् कामोप- न्धाभावात् ज्ञाने ज्ञेयतत्वावभासदृष्टफलाकाङ्क्षाविरहाच्च आर्थवादिक- लकल्पना न संभवति' इति प्रथममभिहितम्। तदुत्तरम्;— विद्यया तदारोहन्ति' 'विद्ययाऽमृतमश्नुते' इत्यादिश्रुतीरुदाहृत्य; न व साध्यत्वेऽप्यन्तवत्त्वम्! 'न च पुनरावर्तते' इति शब्दगम्यत्वाद- ावृत्तेः तर्कगम्यत्वाभावात् इत्याशङ्क्य ;

न च मोक्षः फलं तस्य साध्यो मोक्षो न चापरः।
अविद्यास्तमयो मोक्षः सा संसार उदाहृतः॥
विद्यैव चाद्वया शान्ता तदस्तमय उच्यते॥

ार्गश्रुतयस्सोपाधिब्रह्मविषयाः। 'मधुनदीनिदर्शनाविभागश्रुति- वेकज्ञानाभावपरा। 'स्वप्नेऽपि सृष्टिश्रवणात् सर्गश्रुतिरेकत्वोपायपरा। ऐश्वर्यश्रुतिस्सगुणब्रह्मविषया। ब्रह्मात्मनस्तद्रूपाविर्भावस्तत्प्राप्तिः। सा च वेद्यैव तस्मान्न साध्यो मोक्षः। न च विद्याया अन्य इति पुष्कलम्। अपुनरावृत्तिश्रुतिस्तु क्रममुक्त्याश्रयणात् निर्गुणविद्यापरा। यद्वा 'इमं ानवमावर्तं नावर्तन्ते' इत्यादौ इममित्यादिश्रवणात् तत्कल्पमात्र- स्थायिता परा' इति समाहितम्। ततः मा भून्मोक्षस्साध्यः; बन्धहेतु- कर्मक्षयस्तु साध्यते प्रायश्चित्तदिशा तत्साधनमात्मदर्शनं स्यात्? इत्याक्षिप्य; कर्मफलभोगविभागश्चाविद्योपादानः। तत्रानवयवे-

**भावप्रकाशः**

नोन्मूलितायामविद्यायां न च्छेत्तव्यमस्ति। यतश्चाविद्योच्छेदेनैव कर्मोच्छेदः; अतस्तुल्यवत्संशयविपर्यासाभ्यां प्रसङ्ख्यातानि कर्माणि ;—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

इति। तस्माद्बन्धहेतुच्छेदोऽपि विद्यैव। न तु साध्यः। एवं न विद्याया अनेकफलकल्पना भविष्यति। वर्तमानापदेशानां च फलविधित्वेन न विपरिणतिरिति, इति परिहृतम्॥

एतन्न जाघटीति तथाहि—'मुक्तः प्रतिज्ञानात्' इति सूत्रे शङ्कराचार्यैः 'य आत्मा अपहतपाप्मा' इति मुक्तात्मविषयमेव प्रतिज्ञानम्। फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा नापूर्वोपजननापेक्षा' इत्युक्तया निवृत्तव्यतिरिक्तस्वरूपाविर्भावस्य फलत्वं न संमतमिति स्पष्टम्। 'य आत्मा अपहतपाप्मा' 'अथ यो वेदेदं [illegible] स आत्मा' 'मनसैतान् कामान् पश्यन् रमते' इति तत्रत्यश्रुत्यनुसारेण आत्मस्वरूपस्य प्रागेव सिद्धत्वेऽपि कर्मबन्धविनिर्मुक्तापरिच्छिन्नज्ञानादिस्वरूपस्याविर्भावः (वे. सा.) श्रीभाष्यकृद्भिः सिद्धान्तितः। अत एव ब्रह्मप्राप्तिस्वरूपावि र्भावश्रुत्योरैकार्थ्यमुपपद्यते।

मैवं ब्रह्मानुभूतिः परभजनवता प्रागसिद्धेव साध्या
धीसङ्कोचप्रणाशस्त्वयमिति च भवत्युत्तरावध्यतीता॥ (अधि.सा)

इत्यत्र आविर्भावस्य नाशरूपत्वं स्फुटमुक्तम्। श्रुतिभिः पापक्षयद्वारकत्वं ब्रह्मानुभूतेः (जी. स. ४१२) पूर्वमेव निरूपितम्।

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि॥

इति हि गीता! अतो ज्ञानानन्दादिगुणानां कर्मणा आत्मनि सङ्कुचितानां

## भावप्रकाशः

परं ज्योतिरुपसंपद्य कर्मरूपबन्धक्षये विकासरूप एवाविर्भावः श्रीभाष्योक्तः युक्तः। तत्र गतेः पूर्वं स्थूलदेहवियोगकाल एव सर्वकर्मक्षयः। गतिमध्ये सूक्ष्मशरीरवियोगः; तत्काल एव कर्मवासनाक्षयः तदुत्तरमेव धीसङ्कोचविनाशः; 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छां) इति विशेषवाचिपञ्चम्यन्ताघटितश्रुतेः। सद्विद्यायामुत्क्रान्तिश्रवणाच्च सूक्ष्मशरीरवासनयोः क्षयानन्तरं संपत्तिनिर्णयात्। 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादिश्रुतेश्च स्वारस्यात्। गतिपादानन्तरमेव सूत्रेष्वाविर्भावस्य निर्णयाच्च। 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.१) इत्यत्र अन्ते इत्यस्य प्राकृतदेशान्ते इत्यर्थः। पूर्वं स्थूलदेहनिवृत्तावपि सूक्ष्मदेहस्य अत्रैव निवृत्तिः।

'ते तरन्त्यखिलामेतां मायामात्मविमुक्तये' (वि. पु.५-३०-१६)।

इत्यत्र आत्मशब्दस्य धर्मभूतज्ञानघटितव्यापकताश्रयार्थकत्वेन विमुक्तिः धीसङ्कोचनिवृत्तिरेव इत्याशयेन ;—

स्याद्धीसङ्कोचमात्रस्थितिकृदनुगतस्सूक्ष्मसंस्कारयोगः

कृत्स्नाऽविद्यानिवृत्तिः परमपदगमनापेक्षिणीत्यादि वाच्यम्।

(अधि. सा.) इत्युक्तम्। एवं च आविर्भावप्राप्त्योर्नाशरूपत्वेन स्वरूपाविर्भावस्य विद्यासाध्यत्वे अनित्यत्वापादनमनुचितम् 'स्वेनेत्यागन्तुकत्वं व्युदस्तम्। रूपेणेत्यनेन धर्मी व्युदस्तः। परमते रूपेणेत्यस्य वैयर्थ्यम्। 'ज्योतिरुपसंपद्य' इत्यत्र ऐक्यविवक्षणमस्वरसम्। 'विद्ययाऽमृतमश्नुते' इत्यत्रेव 'तमेव विदित्वाऽतिमृत्युमेति' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यत्रापि सिद्धसाध्यसमभिव्याहारनयेन साध्यसाधनभावप्रतीतेरनुभवसिद्धत्वेऽपि (ब्र. सि) मुखं व्यादाय स्वपितीतिवत् क्त्वाश्रुतिनिर्वहणमप्यनुचि-

भावप्रकाशः

तम् । अविद्यानिवृत्तेर्वृत्तिरूपत्वे वृत्तेरस्थिरत्वेन कृतकत्वेन च मुक्तेरस्थिरत्वम्; यत्कृतकं तदनित्यमिति व्याप्त्यवतरणं च कथं निरस्यते? (ल. चं. ८८८) अज्ञानसामान्यविरोध्युपहितात्मनः मुक्तिफलत्वमिति ब्रह्मानन्दपरिष्करणेऽप्युपहितस्यानित्यत्वेन मुक्तेरनित्यत्वमभ्युगतमेव तैः । अतो मुक्त्युपायज्ञानविधिवादिमते यत्कृतकं तदनित्यमिति व्याप्तिमवलम्ब्य परैर्दोषोक्तिरनवकाशा ॥

यश्चास्मिन् वृत्तिकारपक्ष पञ्चपादिकायाम्;—(१-१-४) 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते (छां. ८-१-६) इति श्रुतिविरोध उदभावि; सः; दहराधिकरणे (तद्यथेह—क्षीयते) इति च कर्मणामन्तवत्फलत्वमुक्त्वा 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' इति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्व वदत्' इति व्याकुर्वद्भिश्शङ्कराचार्यैः पर्यहारि । 'तद्यथेह' इति श्रुतौ पुण्यशब्दो मुक्तिहेतुज्ञानव्यतिरिक्तकर्मपरः । 'तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्च' 'तं विद्याकर्मणी समन्वारभेते' इत्यादौ पृथङ्निर्देशात् । तद्यथेह इति श्रुत्यनन्तरमेवात्मवेदनस्य सर्वलोककामचारफलमुपक्रम्य अर्चिरादिगतिद्वारकस्य तत्फलस्य कथनावसरे 'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य' 'अथ यत्रैतदस्माच्छरीरादुत्क्रामति—आदित्यं गच्छत्येतद्वै खलु लोकद्वार् विदुषां प्रपदनं निरोधोऽविदुषाम्' इति दहरविद्यानिष्ठस्य तत्फलम् अविदुषां तदभावं चाभिधाय; 'शतं चैकाच—तयोर्ध्वमायन्नमृतत्वमेति' इति विदुषो मूर्धन्यनाड्या गच्छतः अमृतत्वप्राप्तेः अविदुषः तया गत्यभावस्य च प्रतिपादनेन ब्रह्मवेदनस्य 'तद्यथेह कर्मचितः' इति श्रुतौ पुण्यशब्दे

## भावप्रकाशः

विवक्षाया असंभवात् । अदृष्टद्वारकत्वेन फलस्यानित्यत्वम् इत्येतदर्थबोधकस्य पदस्य कस्याप्यभावेन अदृष्टद्वारकफलसामान्यानित्यतापरेयं श्रुतिरित्युत्प्रेक्षणस्याभिनिवेशमूलकत्वात् । अत एव छान्दोग्यान्ते 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते । इति श्रुतिस्संगच्छते । अत्र 'संपद्यते' इति संपूर्वकपदिधातुप्रयोगेण 'अथ संपत्स्ये' 'परं ज्योतिरुपसंपद्य' इत्याद्यैकार्थ्यं बोधितम् । 'ब्रह्मलोकम्' 'अभि' इत्युभाभ्याम् अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' इति पूर्वश्रुत्यैकार्थ्यं ख्यापितम् । राहुणाऽऽच्छादितचन्द्रप्रभासङ्कोचवत् 'अथ यो वेदेदम्' इति पूर्वोक्तजीवधर्मज्ञानस्य कर्मवासनादशायां सङ्कोचः तदपगमे विकासः द्वितीयपादे 'धूत्वा शरीरम्' इत्यत्र सूक्ष्मशरीरस्यापि विश्लेषः अर्चिरादिना सत्यलोकादुपरिगमनानन्तरकालिकः विवक्षितः । 'अकृतम्' इति ब्रह्मलोकविशेषणेन सत्यलोकविवक्षा व्युदस्ता । तेन 'ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इत्यत्रापि न चतुर्मुखो ब्रह्मशब्दार्थः । अत एव 'स एनान् ब्रह्म गमयति (छां. ४) इति नपुंसकलिङ्गब्रह्मशब्दनिर्देश उपपद्यते । यद्यपि 'अकृतम्' इत्यस्य शरीरविशेषणत्वं न संभवतीत्यभिप्रेत्य 'अकृतम्' नित्यं ब्रह्मलोकम् इति विवृण्वन्तोऽपि शङ्कराचार्याः अत्र शरीरग्रहणाय प्राप्तायाः पुनरावृत्तेः प्रतिषेधात् अर्चिरादिमार्गेण कार्यं ब्रह्म अभिसंपद्य यावद्ब्रह्मलोकस्थितिः तावत्तत्रैव तिष्ठति प्राक्ततो नावर्तत इत्यर्थः इति व्याचख्युः ॥

एवं धूमादिमार्गेण चन्द्रलोकं गतस्य चन्द्रलोके स्थिते एव यथा पुनरावृत्तिः तथा ब्रह्मलोके स्थिते एव तत आवृत्तिर्नेत्यर्थः ब्रह्मसिद्धौ

**भावप्रकाशः**

(१२३) भामत्यां च (४-४-२२) उक्तः । आनन्दगिरिणा (उ. भा.) विवरणेऽप्युक्तः । तथापि 'धूमादिमार्गे चन्द्रात्पुनरावृत्तिश्श्रूयते अर्चिरादिमार्गे 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयतिइत्यादि (छां. ४-१५-५६) (५-१०-२) श्रूयते। अष्टमस्थापुनरावृत्ति' श्रुतावपि चतुर्थस्थतदैकार्थ्याच्चन्द्रलोकात्पुनरावृत्तिवत् प्राप्तिः । सा च ब्रह्मलोकस्याकृतत्वश्रवणात् लयासंभवात् स्थितिसमय एवेति तथाविधपुनरावृत्तिविरह एव अपुनरावृत्तिश्रुतौ विवक्षित इतिवृत्तिकारानुयायिनः प्राहुः ।

एतेन 'तद्यथेह कर्मचितः' यत् कृतकं तदनित्यम् इति श्रुत्यनुमानयोस्सामान्यविषययोः विशेषविषयिण्या अनावृत्तिश्रुत्या बाधमाशङ्क्य वर्तमानापदेशित्वेनानावृत्तिश्रुतेरप्रामाण्येन पीरहारस्य पञ्चपादिकोक्तस्य साधनदशायां विवरणे (१०९२) ; 'यस्य पर्णमयी जुहूः इत्यादीनाम् वर्तमानापदेशित्वेन योग्यानुपलब्धिविरोधात् फलश्रुतेरर्थवादत्वम् न प्रामाण्यम् ; अनावृत्तिश्रुतौ तु प्रमाणान्तराविरोधात्प्रामाण्यमित्याक्षिप्य अप्राप्तप्रतिषेधादनावृत्तिश्रुतेरर्थवादत्वमेव न प्रामाण्यम् । 'ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इत्यभिसंपत्तिसमये पुनरावृत्तिरप्राप्ता प्रतिषिध्यते' इत्युक्तिरनवकाशा । अत एव 'अनावृत्तिश्शब्दात्' इति सूत्रं संगच्छते । अत्र कल्पविशेषाविशेषितावृत्तिसामान्यविरहपरा 'न च पुनरावर्तते' इति श्रुतिर्विवक्षितेति श्रीभाष्यकृतः । एवं विदुषः कल्पान्तरेऽप्यनावृत्तिरेव 'न च पुनरावर्तते' इति सामान्यमुखाच्छब्दात्–श्रुतेरित्यर्थः । 'तेषामिह न पुनरावृत्तिः' इत्यत्र इहेत्यस्य संसारमात्रार्थत्वे बाधकाभावात् । एवम् ;– 'इमं मानवमावर्तं नावर्तन्ते' इत्यत्र इममित्यस्यापीदञ्जातीयमात्रार्थत्वात् वर्तमानकल्पार्थकत्वेऽपि प्रतिकल्पवर्तिपुरुषान् प्रति वर्तमानकल्पबोधकत्वेन कल्पमात्रे अनावृत्तिलाभात ॥

**भावप्रकाशः**

'ब्रह्मणा सह ते सर्वे+प्रविशन्ति परं पदम् ॥

इत्यादिस्मृत्या वर्तमानकल्पान्ते विदुषां कैवल्यबोधनेन तेषामावृत्तया-वश्यकत्वाच्च' इति (वे. सू. मु.) व्याचख्युः ब्रह्मानन्दसरस्वतीयतयः ॥

एतेन ;—ब्रह्मसिद्धौ (१२४) 'इमम्' 'इह' इति विशेषणात् 'अमृतत्वमेति' इत्यत्र अमृतत्वमापेक्षिकम्' इत्युक्तिः ; पञ्चपादिकायाम् ;—'किंच श्रुतिः' 'इह' 'इमम्' विशेषणादस्मिन् कल्पे नावृत्तिं दर्शयति' इत्युक्तिः ; तद्विवरणे ; 'अस्मिन् कल्पे प्रतिपन्नानां कल्पान्तरे पुनरावृत्तिः कल्पान्तरे प्रतिपन्नानां तत्रावृत्तिः ; अन्यथा विशेषणवैयर्थ्यात्' इत्युक्तिश्च निरवकाशा । आवर्तमित्यस्य 'आवर्तन्ते अस्मिन् जननमरणप्रबन्धचक्रारूढा घटीयन्त्रवत्पुनःपुनरित्यावर्तः' (शं. उ. भा.) इति विवरणकरणेन ;—

पितृपथघटीयन्त्रारोहावरोहपरिभ्रमैः
निरयपदवीयातायातक्रमैश्च निरन्तरैः ॥ (र-त्र-सा)

इत्युक्तदिशा यः संसारसंबन्धः तस्य विरह एवात्र विवक्षितः ; अन्यथा सर्वलोककामचारश्रुतिविरोधात् । 'तस्माज्जुगुप्सेत' (छां. ५-१०-८) इति पञ्चाग्निविद्यायां वक्ष्यमाणायास्संसारगतेर्बुद्ध्या विषयीकरणात् 'इमम्' इत्युक्तम् ; 'तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति' 'इमं मानवमावर्तं नावर्तन्ते' इत्यमानवशब्दप्रतिकोटिमानवशब्दप्रयोगेण अमानवकरस्य स्पर्शानन्तरम् न कदापि मानवावर्तसंबन्ध इति ख्याप्यते । 'इमं मानवमावर्तं नावर्तन्ते' इत्यत्र आवृत्तिः तत्कल्पीयैव निषेध्यतया न विवक्षिता ; अपि तु पूर्वोक्तप्रकारैवेति पञ्चाग्निविद्याक्रमात्प्रतीयते । तत्र चात्र च 'अर्चिषमेवाभिसंविशन्ति' इत्यादि 'चन्द्रमसो विद्युतम् तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति' इत्यन्तवाक्यं तुल्यम् । 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इत्यस्य

**भावप्रकाशः**

स्थाने तत्र ' अथ य इमे+ते धूममभिसंविशन्ति–अथैतमेवाध्वानं पुनर्निवर्तन्ते ' इत्यादिकम् ' अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति ' इत्यादिकं च आवृत्तिवाक्यं वर्तते ॥

एकया यात्यनावृत्तिमन्ययाऽवर्तते पुनः ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥

इति गीतावाक्यं श्रुत्यर्थनिर्णायकम् । श्रुतौ अर्चिरादिगतौ धूमादिगतौ च चन्द्रप्राप्तिरुक्ता; तेन यथा धूमादिगतौ चन्द्रप्राप्त्यनन्तरं पुनरावृत्तिः तथैवार्चिरादिगतावपि प्राप्ता पुनरावृत्तिः चन्द्रप्राप्त्यनन्तरममानवप्राप्त्युक्त्या ' इमं मानवमावर्तं नावर्तन्ते ' इत्यत्र पञ्चाग्निविद्यायामुक्तमानवावर्तावृत्तिरूपैव प्रतिषिध्यते इति श्रुतितात्पर्यं कृष्णेन निर्णीतं भवति ॥

एतेन 'तेषां न पुनरावृत्तिः' इति बृहदारण्यकपञ्चाग्निविद्यावाक्यम् 'तेषामिह न पुनरावृत्तिः' इति शाखान्तरवाक्यं च उक्तार्थमेव । याज्ञवल्क्यश्च 'अस्य महतो भूतस्य निश्वसितम्' 'तमेतं वेदानुवचनेन' "आत्मा वा अरे द्रष्टव्यः' इति श्रुत्यर्थमभिधायानन्तरमेव पञ्चाग्निविद्यावाक्यार्थं कथयन् 'तेषामिह न पुनरावृत्तिः' इत्युक्तगत्यनन्तरकालिकापुनरावृत्तिः मैत्रेयीब्राह्मणविद्यानिष्ठस्यापीति बोधयति । वचनानि (१६६) हयशिरोरत्नभूषणदीधितावुदाहृतानि । 'तयोर्ध्वमायन्नमृतत्वमेति' इत्यत्र 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य' इति पूर्वश्रुत्युक्तामृतत्वस्यैव विवक्षितत्वेन पुण्यकर्मसाध्यफलस्यैव (वि. पु.) आपेक्षिकामृतत्वोक्त्या च विद्यासाध्यकर्मक्षयानन्तरकालिकामृतत्वस्यापेक्षिकत्वोक्तिर्न घटते । अतः 'भिद्यते—परावरे' इत्यत्रापि विद्यायाः प्रायश्चित्तत्वेन कर्मक्षयसाधनत्वं विवक्षितम् ।

**भावप्रकाशः**

'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'

इत्यत्रैव साधनभूतदर्शनोक्तेः।

अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्।

इति प्रथममभिधाय—

क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता।

इति प्रायश्चित्तकाण्डे ईश्वरज्ञानस्य प्रायश्चित्तरूपतां प्रतिपादयन् याज्ञवल्क्योऽपीत्थमेव श्रुतेरर्थमभिप्रैति। यदि (मं. मि.) पराभिमताऽविद्यानिवृत्तिं प्रधानभूतामभिप्रैष्यद्भगवती श्रुतिः तर्हि—

'भिद्यते हृदयग्रन्थिः तस्मिन् दृष्टे परावरे'

इति पूर्वार्धे प्रावर्तिष्यत; न च तथा प्रावर्तिष्ट। 'यदा पश्यः पश्यते रुक्मवर्णं—तदा विद्वान् पुण्यपापे विधूय' (मुं. ३-१-३) इत्युत्तरत्र दर्शनसाध्यपुण्यपापक्षयानन्तरप्राप्त्यभिधानाच्च कर्मक्षयस्यैव प्राधान्यमवसीयते। किंच—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।'

इति पूर्वार्ध एव उभयोः उक्त्या ऐकरूप्यप्रतीत्या ग्रन्थिभेदसंशयक्षययोरेवाप्राधान्यं सिध्यति॥

अपि च ग्रन्थिशब्दस्साधारणः 'तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति' (मुं.) इत्युपनिषदन्ते बहुवचननिर्देशात् 'क्षीयन्ते चास्य कर्माणि' 'तरति पाप्मानम्' इत्युभयोरैकार्थ्येन 'गुहाग्रन्थिभ्यो विमुक्त' इति संशयक्षयमपि संगृह्णातीति व्यक्तं निरभिनिवेशानाम्॥

एवं च 'भिद्यते हृदयग्रन्थिः' इति श्रुतिः पराभिमताविद्याक्षयप्राधान्यं साधयितुमक्षमा ब्रह्मविद्यायाः प्रायश्चित्तरूपतां

**भावप्रकाशः**

प्रतिपादयत्येव ; बद्धस्य कारागृहवासिन इव शुद्धिं विना पितृप्राप्ते-रसंभवात्। पाथसि पीते तृष्णा शाम्यतीत्यत्रेवात्रापि दर्शनकर्मक्षययोर्हेतु-हेतुमद्भाव एव प्रतीयते ॥

पूर्वं 'स्वस्ति वः पाराय तमसः परस्तात्' इत्यत्र परस्तादित्यत्र अस्तातिप्रत्ययस्य देशवाचितया ;—

यस्सर्वज्ञस्सर्वविद्यस्यैष महिमा भुवि ।
दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः ॥

इति तदुत्तरमन्त्रे परमात्मनस्तत्र प्रतिष्ठितत्वोक्तया च प्रकृतिमण्डला-दूर्ध्वस्थानवर्तिस्वजनकविभूतिद्वयमहाराजब्रह्मप्राप्तिरेव 'अथ परा यया तदक्षरमधिगम्यते —यद्भूतयोनिं परिपश्यन्ति' इत्युपक्रमोक्तपरविद्या-सामान्यफलमिति निर्धारणात् ॥

उत्तरत्र 'ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' (३-२-६) इति परसंमतपाठेऽपि 'परान्तकाले' इति न क्रममुक्तिपरम् ; किंतु परस्य स्थूलदेहादुत्क्रष्टस्य सूक्ष्मदेहस्यान्तकाले इत्यर्थात् अर्चिरादिगत्यनन्तरसूक्ष्मशरीरवियोगकालपरम् । तदनन्तरं 'गताः कला' इति कलालयस्य वक्ष्यमाणत्वात्। 'ब्रह्म लोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः' (बृ. ८-२-१५) इति पञ्चाग्निविद्यैकार्थ्यात्। परावतः—परवन्तः । परामृताः —परममृतं ब्रह्म येषां ते । पराः—सङ्कुचित-ज्ञानेभ्य उत्क्रुष्टाः वसन्ति परिमुच्यन्ति, 'सर्वमेवाभिसंविशन्ति' इति पूर्वोक्तसर्वानुकूलसाक्षात्काररूपभोगविरोधिनस्सर्वस्मान्मुच्यन्ते इत्यु-भयोरैकार्थ्यम् । एवञ्च पूर्वं परत्र च उक्तस्य विद्याफलस्य दृष्टद्वारा असम्भवेन अदृष्टद्वारकत्वं सिद्धम् । 'परामृतात्परिमुच्यन्ति' इति पाठे (वे. दी.) अदृष्टद्वारकत्वं स्पष्टम् । अतः 'भिद्यते हृदयग्रन्थिः'

### भावप्रकाशः

इतीयं श्रुतिः विद्याफलस्यादृष्टद्वारकतां न रुन्धे । इदं च (४१०) पूर्वमेव निरूपितम् ॥

परावरे इत्यत्र कर्मधारयस्यैव शङ्कराचार्यैः (उ. भा.) उक्तेस्स एव युक्तः । तथाऽभ्युपगमे जीवब्रह्माभेद एव ततो लभ्यत इति तु न शङ्कयम्; जीववाचिपदाभावेन शब्दतो जीवब्रह्माभेदलाभासंभवात् । 'स्वस्ति वः पाराय तमसः परस्तात्' 'यस्सर्वज्ञः—प्रतिष्ठितः' इति प्रकृतिमण्डलादूर्ध्वदेशवर्तितया परत्वेनोक्तस्य साक्षात्कारः प्राप्तिश्च नास्माकं घटत इति शङ्कावारणाय अवरशब्दः । 'यद्भूतयोनिं परिपश्यन्ति धीराः' इत्युपक्रमे—

तद्विज्ञानेन परिपश्यन्ति धीराः
आनन्दरूपममृतं यद्विभाति ।

इत्येतत्पूर्वमन्त्रे च धीराः इत्यत्र—

अजायमानो बहुधा विजायते ।
तस्य धीराः परिजानन्ति योनिम् ॥

इति श्रुत्यर्थनिर्णयविद्या रममाणा विवक्षिताः । 'यस्यैष महिमा भुवि' 'दिव्ये ब्रह्मपुरे ह्येषः' इति तत्पूर्वश्रुतितात्पर्यपर्यालोचनायाम् परमपदवर्तिनः परस्यापि महाराजस्य आश्रितजनसजातीयरामकृष्णादिरूपेणावतीर्य गुहगोपादिसंश्लेषणादिना लोकबुद्धया अवरत्वम् । अत एव ह्यानन्दरूपत्वमपि निर्व्यूढम् । तथा च श्रुत्यन्तरम्;—'पिता पुत्रेण पितृमान् योनियोनौ । नावेदविन्मनुत तं बृहन्तम्' (तै. ब्रा. ३-१२-९-५५) इत्यादि सर्वेषां पुरुषाणां नोक्तधीरता किंतु कस्यचिदेवेति प्रतिपादयति । अतः परावरे इत्यत्र कर्मधारयाश्रयणेऽपि रामकृष्णाद्यवतारमुखेन लोकाननुगृह्णतो भगवतो दर्शनविषयस्यानु-

### भावप्रकाशः

ग्रहेण मुक्तिरिति सिध्यति । एवं च तच्छब्दपरावरशब्दपर्यालोचनावतामदृष्टद्वारकत्वप्रतिपत्तिस्संभवति न तु जीवब्रह्माभेदप्रतिपत्तिः । उपक्रमे 'यद्भूतयोनिं परिपश्यन्ति धीराः' 'तथाक्षरात्संभवतीह विश्वम्' इति परविद्याविषयः जगत्कारणत्वेनोक्तः 'यथा सुदीप्तात्पावकाद्विष्फुलिङ्गाः तथाक्षराद्विविधास्सोम्य भावाः प्रजायन्ते, दिव्यो ह्यमूर्तः पुरुषः' इति जीवजनकत्वेन तमसः परस्तात् इत्यादौ प्रकृतिमण्डलादूर्ध्वस्थानवर्तित्वेन चोक्त एव 'परात्परं पुरुषमुपैति दिव्यम्' इत्युपसंहारे प्राप्यत्वेन प्रतिपाद्यते । अतश्च 'निरञ्जनः' इत्यत्रेव 'नामरूपाद्विमुक्तः' इत्यत्रापि अर्चिरादिगत्यनन्तरकालिकसूक्ष्मशरीरनिर्मोकस्यापि विवक्षितत्वेन 'परात्परं पुरुषमुपैति दिव्यम्' इति श्रुतिः 'दिव्ये ब्रह्मपुरे ह्येषः' इति पूर्वश्रुतौ प्रकृतिमण्डलादूर्ध्वस्थानवर्तित्वेनोक्तस्य प्राप्यत्वं निर्धारयति ॥

एतेन राजपुत्रस्य व्याधेन वर्धितस्य उपदेशादिना राजपुत्रोऽहमिति ज्ञानानन्तरम् व्याधगृहवासादिनिमित्तकदोषप्रायश्चित्तानन्तरमेव यथा राजप्राप्त्या समानभोगता तथा आगमोक्तज्ञानेन सर्वजगन्महाराजपुत्रोऽहमिति ज्ञानानन्तरं समाधिपर्यन्ततद्ध्यानात्मकप्रायश्चित्तपूर्त्यनन्तरमेव देशविशेषे तत्प्राप्तिस्तत्समानभोगता चोपपद्यते इति द्रमिडभाष्यकृदुक्तराजकुमारन्यायसामञ्जस्यम् 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुत्युपपत्तिश्च ॥

'ब्रह्म वेद ब्रह्मैव भवति' इत्यत्र भूधातुः प्राप्तिवचनः । बाहुलकः पदव्यत्ययः । यद्वा (१-१-४) वृत्तिकारमतदूषणावसरे 'ब्रह्मात्मैकत्वविज्ञानं विशिष्टक्रियायोगनिमित्तम्' इति (शं.) भाष्यभामत्युदाहृतम् 'संहरणात्संवरणाद्वा सात्मीभावाद्वा वायुस्संवर्गः' इति 'अध्यात्मं च प्राणस्संवर्गः' इति द्रमिडभाष्यमनुसृत्य बृहतिधात्वर्थक्रियायोगनिमित्तो ब्रह्मैव भवतीति व्यपदेशः इत्यादिकं श्रीभाष्यादौ व्यक्तम् ॥

**भावप्रकाशः**

एतेन 'भिद्यते–परावरे' इति श्रुतिमुदाहृत्य—

इत्यादिनाऽपि विज्ञानं नादृष्टार्थमितीरितम् ।

तथा स ब्राह्मणः केन स्याद्येनेति प्रदर्शितम् ॥ २९७ ॥

इति (बृ.) संबन्धवार्तिकमपि समाहितम् । 'स ब्राह्मणः केन स्याद्येने- दृशः' इति (बृ.) श्रुतिः बाल्यपाण्डित्यमौनैरेव विद्याकाष्ठालाभो नान्येन हेतुनेत्यार्थिकेति सहकार्यन्तरविध्याधिकरणश्रीभाष्यादौ स्थापितमिति न सा श्रुतिर्मुक्तेरदृष्टद्वारकतां प्रतिरोद्धुमीष्टे; 'तमेव विदित्वा' इति श्रुतिरपि अदृष्टद्वारं (ल. च.) न प्रतिषेधति किन्तु प्रतिपादयति इति निरूपयिष्यते । स्वप्ने सृष्टेः परमात्मकर्तृकत्वं स्वप्नस्य पारमार्थ्यं सृष्टिश्रुतिभिः चिदचितोः पारतन्त्र्यसिद्धिः निर्विशेषस्याप्रामाणिकत्वं सर्वान्तर्यामिपुरुषस्य उपनिषत्परमतात्पर्यविषयत्वमित्यादिकं श्रीभाष्ये स्थापितम् । तेन मण्डनमिश्रकल्पना निरवकाशा । 'दुःखजन्मप्रवृत्तिदोष- मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इत्यक्षपादसूत्रं (१-१-४) वृत्तिकारमतदूषणावसरे (शं.) परैरुदाहृतम् 'पराभि- ध्यानात्तु तिरोहितं ततो ह्यस्य बन्धाविपर्ययौ इति सूत्रयता व्यासेन पराभिध्यानसापेक्षापायतात्पर्यकमेव वाच्यम् । अन्यथा श्रुतिव्याकोप- प्रसङ्गादिति निरणायीति व्यक्त विदुषाम् । उक्त च व्यासार्यैः ;— (वे. सं. ता. दि.) भवभयाविध्वंसनायेति ;–एवं निवर्त्यमुक्तम् अत्र जन्यजनकभावोपपादनेन प्रतीतिमात्रासिद्धत्वाभावात् अदृष्टद्वारा निवर्त्य- मिति सिद्धम्' इति । फलमत उपपत्तेरिति फलस्यादृष्टद्वारकतां प्रति- पादयतीति पूर्वमेव निरूपितम् ॥

नन्वेवमपि मुक्तिं प्रति भगवानेक एवोपायः मुक्तिरपि दृष्टद्वारि- कैव (र. त्र. मी. भा.) 'दुःखजन्म' इत्यादिसूत्रात् ॥

'नास्त्यकृतः कृतेन'

**भावप्रकाशः**

'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्'

'नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन'

'नान्यः पन्था अयनाय विद्यते'

इति श्रुतिभिः भगवद्व्यतिरिक्तस्य मुक्त्युपायतानिषेधाच्च मुक्त्यर्थतया अविधेयं भक्त्यादिज्ञानं सिद्धोपायफलभूतम् । विधिप्रत्ययस्य कृतिसाध्यत्वमेवार्थः श्रीभाष्य उक्तः नेष्टसाधनत्वमिति स्वयंप्रयोजनवेदनस्य विधिरपि व्याजविधि । व्याजत्वं च अहेतुत्वे सत्यतिप्रसङ्गवारकत्वम्, अन्यार्थत्वे सति प्रसङ्गादुपकारकत्वमित्यादिरूपम् । दृष्टं च राज्यार्थम् उपहारं जम्बीरफलं दद्यादित्यत्र । अतः भक्तिरधिकारिविशेषणमेव न साधनमिति कैश्चित् (प. भू. मी. भा.) (ना. आ. भा. च. श्लो.) स्थापितमिति न मुक्त्युपायविधिपक्षो वृत्तिकारसमतो युक्त इति चेत्; न; भगवद्भिश्श्रीभाष्यकारैरेवास्याश्शङ्कायाः प्रतिक्षेपपूर्वकं केषांचिदपि औपनिषदपरमपुरुषवरणीयताहेतुगुणविरहस्योक्तेः; तथा हि:—'अथातो ब्रह्मजिज्ञासा' इत्यत्र ब्रह्मण इति कर्मणि षष्ठ्या ब्रह्मणः प्राप्यत्वविषयत्वयोर्लाभेन ब्रह्मप्राप्तिफलकत्वं ब्रह्मविषयकज्ञाने अतः इत्यत्र कर्मणां क्षयिफलकत्वनिर्णयद्वारा तत्र कर्मविचारस्य हेतुत्वं च प्रतीयते इत्यभिप्रेत्य तत्र मूलभूतश्रुत्युदाहरणावसरे 'नायमात्मा' इत्येतद्व्यतिरिक्तश्रुतीनां केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्याक्षयफलत्वं च दर्शयन्ति इत्यर्थः श्रीभाष्ये उक्तः 'कर्मचितान्—कर्मणा संपादितान् कर्ममीमांसया परीक्ष्य अकृतः—नित्यः कृतेन कर्मणा न संपाद्यत इति यो निर्वेदमायात् सः तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्' इति (वे.) सारे—उपक्रम-

**भावप्रकाशः**

प्रभृति (मु.) श्रुत्यर्थमभिधाय केवलकर्मफलेषु विरक्तस्य यथोदित-कर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञान जिज्ञासमानस्य चाचार्योपसदनं विधाय' इति श्रीभाष्ये (१-२-४५) 'परीक्ष्य लोकानित्यादेरर्थ उक्त'। वाक्यं चैतत् निर्विण्णस्य ब्रह्मविद्यासंपादनार्थं गुरूपसत्तिविधि-परम्। तत्र 'नास्त्यकृतः कृतेन' इति निर्वेदकारणप्रदर्शनपरम् न तु कृतिसाध्यस्य नित्यप्राप्तिसाधनताप्रतिषेधपरम् 'परीक्ष्य लोकान् कर्म-चितान्' इत्यत्र कर्मशब्दो न ज्ञानसाधारणः प्रसिद्धत्यागे बीजाभावात्।

प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म'

इति तत्पूर्वमन्त्रे प्रसिद्धिसमभिव्याहारानुरोधेन फलाभिसंधि-पूर्वकत्वेन ज्ञानविधुरतया च अवराणां पूर्वकाण्डोक्तानां कर्मणामेव भाष्ये उक्तेश्च। अतः कर्मचितानित्यत्र कर्मशब्दः अवरपूर्वकाण्डोक्त-कर्मपरः। परीक्ष्य इत्यत्र परीक्षणं कर्ममीमांसयेति विवक्षितम्। एवं च कृतशब्दोऽपि उक्तकर्मपरः भावप्रत्ययान्तः। कर्मप्रत्ययान्तत्वा-भ्युपगमेऽपि 'प्लवा ह्येते' इत्यादिश्रुत्युक्तकर्मपर एव 'प्लवा ह्येते अदृढा यज्ञरूपाः' 'अविद्यायामन्तरे' 'अविद्यायां बहुधा' 'यत्कर्मिणो न प्रवेदयन्ति' 'इष्टापूर्तं मन्यमानाः' इति श्रुतीनां फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिः इत्यर्थस्य 'तपश्श्रद्धे ये ह्युपवसन्ति' इति पूर्वश्रुतेः ज्ञानिनाऽनुष्ठितं कर्म ब्रह्मप्राप्तये भवतीत्यर्थस्य च भाष्य एवोक्तेः। 'तद्विज्ञानार्थम्' इत्याद्युत्तरवाक्यानुसाराच्च। तत्र हि तच्छब्दः ब्रह्मविद्यामभिधत्ते; 'द्वे विद्ये वेदितव्ये' इत्याद्युपक्रमात्। एतदुत्तरम् 'प्रोवाच तां तत्वतो ब्रह्मविद्याम्' इत्युक्तिः निर्वेदहेतुज्ञानविषयस्य कृतशब्दार्थस्य

### भावप्रकाशः

ब्रह्मविद्याभिन्नत्वनिश्चयात् । उत्तरत्र 'ओमित्येव' इति श्रुतौ मुक्त्यर्थतयोपासनविधिः—इतरश्रुतिषु 'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरति' 'ओमित्येवात्मानं ध्यायथ स्वस्ति वः पाराय तमसः परस्तात्' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे' 'यथा नद्यः—तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इत्यत्र विहितवेदनस्य मुक्तिहेतुतायाः विदुषां व्यक्तत्वाच्च ॥

ननु पुरुषार्थाधिकरणे भगवता भाष्यकृता 'विद्ययाऽमृतमश्नुते' इत्यादिश्रुत्यनुपादानेन 'ब्रह्मविदाप्नोति परम्' 'वेदाहमेतं पुरुषं महान्तम्' 'तमेवं विद्वानमृत इह भवति' 'तथा विद्वान्' इति श्रुत्युपादानेन च वेदनस्याधिकारिविशेषणत्वमेव न तु हेतुतेति प्रतीयत इति चेन्न ; 'अधिकोपदेशात्तु' इति तदधिकरणसिद्धान्तसूत्रे अधिकशब्दोपादानेन तदर्थकशब्दघटितश्रुतय एवोपात्ताः ॥

(वे. सं.) 'नायमात्मा' इति श्रुतौ—भक्तिरूपापन्नस्य लाभहेतुता न निषिध्यते किं तु केवलस्येति व्यवस्थापनात्पूर्वं 'विद्ययाऽमृतमश्नुते, इत्येतद्विवरणावसरे 'तमेवं विद्वान्' 'ब्रह्मविदाप्नोति' 'ब्रह्मवेद ब्रह्मैव भवति' इति श्रुतीनामुदाहरणेन 'विद्ययाऽमृतमश्नुते' इति श्रुत्यैकार्थ्यं ख्यापितम् । तथा च तात्पर्यदीपिका 'उपायविधायकवाक्यान्यैककण्ठ्येन योजयति;—'तमेवेति' इति । 'ब्रह्मविदाप्नोति परम्' इत्यस्य मुक्त्युपायविधित्वं वृत्तिकृत्संमतामिति पूर्वमेवोक्तम् । तच्च तत्तुल्यश्रुतीनामपि समम् ॥

आवृत्त्यधिकरणे 'तमेव विदित्वा' 'ब्रह्म वेद' इत्यादेः ब्रह्मप्राप्तिसाधनवेदनविधायकत्वस्य 'नान्यः पन्थाः' इत्यत्र परमपुरुषस्यैवान्यत्वप्रतियोगित्वं विवक्षितमिति संकल्पद्वारलाभेन वेदनस्य दृष्टो-

**भावप्रकाशः**

पायत्वाभावस्य च; वाक्यान्वयाधिकरणे 'तमेव विदित्वा' 'तमेवं विद्वान्' इत्यनयोरमृतत्वस्य परमपुरुषवेदनैकोपायताप्रतिपादकत्वस्य च भाषितत्वात् ॥

पुरुषार्थाधिकरणे भगवता भाष्यकृता 'परादिशब्दघटितश्रुत्युदाहरणेन सगुणब्रह्मविद्याया धर्मत्वेनापरामुक्तिहेतुत्वसंभवेऽपि परविद्यासामान्यस्य तद्विशेषस्य वा मण्डनमिश्रेण कैश्चिच्चोपदर्शितादिशा परमुक्तिहेतुत्व न संभवतीति पक्षोऽयुक्त इति बोधितम्; परविद्यासामान्यस्य पुरुषार्थोऽत इत्यत्र विवक्षितत्वात् ॥

एतेन;—'द्वे विद्ये वेदितव्ये परा चैवापरा च।' 'अथ परा यया तदक्षरमधिगम्यते' इत्यत्र 'परात्परं पुरुषमुपैति दिव्यम्' इत्युपसंहारानुरोधात् 'विज्ञानं प्रापकं' 'क्षेत्रज्ञः करणी ज्ञानं करणम्' इत्युपसंहारानुगृहीतस्य 'परया त्वक्षरप्राप्तिः' (वि. पु. ६ अं.) इति उपक्रमवचनस्यानुसाराच्च अधिपूर्वकगमिधातुः प्राप्त्यर्थकः। अधीत्युपसर्गः अपराविद्यावद्व्यवधानं वारयति। तृतीया च करणार्थिका इति उपक्रमे परविद्यासामान्यस्यापि ब्रह्मप्राप्तिकरणत्वं श्रुत्या प्रतिपादितं भवति ॥

परमते केषांचिन्मते च मुण्डके उपक्रमविरोधः 'पुरुषार्थोऽत' इति सूत्रविरोधश्च। पुरुषेणार्थ्यमानं परविद्यातिरिक्तं फलं विद्यात इति ततः प्रतीत्या ब्रह्मविद्यायाः फलतामात्रं न प्राप्तिं प्रति करणत्वमिति वदतां मते तद्विरोधस्य व्यक्तत्वात्। अत उपक्रमादिविरोधात् 'नास्त्यकृतः कृतेन' इति श्रुतिः न केषांचिदभिमतमर्थं प्रतिपादयितुमीष्टे इति श्रीभाष्यकृद्भिर्निर्धारितं भवति। 'कृतेन' इत्यस्य पूर्वश्रुत्युक्तकर्मपरत्वमनङ्गीकृत्य असङ्कोचेन कृतिसाध्यसामान्यपरत्वाभ्युपगमेऽपि

### भावप्रकाशः

'नास्ति' इत्यस्यापि कृतिसाध्याधीनसत्तानिषेधपरत्वं युक्तमिति कृतिसाध्यसामान्यस्यापि परमात्मलाभकरणतानिषेधो नानया श्रुत्या सिद्ध्यतीति भगवत आशयः ॥

एतेन 'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' इत्यादिकमपि व्याख्यातम् । तत्र अध्रुवैरित्यस्य नित्यभिन्नैरित्यर्थः नोत्प्रेक्षितुं क्षमः; ध्रुवशब्दस्य नानार्थकत्वेन तथा निर्णयसाधकविरहात् ॥ .

जानाम्यहगं शेवधिरित्यनित्यम्
न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत ।
ततो मया नाचिकेतश्चितोऽग्निः
अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥

इति तन्मन्त्रे उत्तरार्धार्थाननुकूलात्वात् । अनित्यैर्द्रव्यैः नाचिकेतोऽग्निश्चितः ततः नित्यं प्राप्तवानस्मीति योजनेऽपि न विरोधपरिहारः; तच्छब्दार्थस्याग्निचयनस्य नित्यभिन्नत्वात्;—

त्रिणाचिकेतस्त्रिभिरेत्य सन्धिम्
त्रिकर्मकृत्तरति जन्ममृत्यू ।
ब्रह्मजज्ञं देवमीड्यं विदित्वा
निचाय्येमां शान्तिमत्यन्तमेति ॥

इत्यत्र उपासनस्यैव नित्यफलसाधनत्वोक्तेश्च 'ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति (१) अध्यायान्तेऽप्युक्तेः । 'अध्रुवैः' इत्यत्र ध्रुवशब्दस्य निश्चितार्थकत्वेन नित्यफलसाधनत्वेन निश्चितभिन्नैरित्यर्थः अध्रुवैरित्यस्य एतेन आपातप्रतीतिरपि व्युदस्ता । एवं च (त. टी.) अध्रुवफलसाधनतया चोदितैरित्यर्थः पर्यवसित एव । पूर्वम्;—श्रेयःप्रेयोरूपमर्थद्वयमुपक्षिप्य;—

तयोश्श्रेय आददानस्य साधु भवति ।

**भावप्रकाशः**

हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥
श्रेयो हि धीरोऽभिप्रेयसो वृणीते ।

इति आदौ तयोः नित्यानित्यफलसाधनत्वे धीरस्य नित्यफलसाधनस्यैव वरणीयत्वं मन्दवरणीयस्य प्रेयसः फलस्य नचिकेतसा त्याज्यत्वं चाभिधाय साधनतया विद्यायामिच्छा न फलतया इत्यभिप्रेत्य ;—

दूरमेते विपरीते विषूची
अविद्या या च विद्येति ज्ञाता ।

इत्यत्र नित्यानित्यफलसाधनत्वेन विद्याविद्या (कर्म) शब्दितयोः तयोरेव वैषम्यमभिधाय ;—

विद्याभीप्सिनं नचिकेतसं मन्ये ।

इत्युक्त्या ;—मन्त्रोपक्रमे 'जानाम्यहं शेवधिरित्यनित्यम्' इत्यत्र कर्मफलस्यैवानित्यतायाः '[illegible]—अत्यस्राक्षीः' इति तदुत्तर मन्त्रे कर्मफलत्यागस्यैव चोक्तेः 'तं दुर्दर्शम्' इति तदुत्तरमन्त्रे 'मत्वा धीरो हर्षशोकौ जहाति, इत्यत्र विद्याया मुक्तिसाधनत्वोक्तेश्च नित्यफलसाधकत्वेन निश्चितत्वस्य विद्यायां तद्भिन्नत्वस्याविद्यायां लाभात् ।

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा
विद्यामेताम् – ब्रह्मप्राप्त

इत्युपसंहारेण च ;— तत्प्रतिष्ठापनात् । एवं च ;—

ततो मया—नित्यम् ।

इत्यत्र नित्यमित्यस्य अर्श आद्यजन्तस्य नित्यफलसाधनभूतां विद्यामित्यर्थः । यद्वा नित्यशब्दस्य ब्रह्मपरत्वेऽपि प्राप्तिरुपासनकालिकी विवक्षिता । वस्तुतस्तु केवलकर्मणामनित्यफलसाधनत्वेन निश्चयेऽपि

भावप्रकाशः

स त्वमग्निं स्वर्ग्यम्' इत्याद्युक्तदिशा अग्निचयनस्याप्यग्निविद्याफलमेव 'नित्यम्' इत्यत्र विवक्षितम्। उत्तरत्र ;—

देवं मत्वा धीरो हर्षशोकौ जहाति।

महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥

इति मन्त्रयोः भुक्त्वा तृप्तिमाप्नोतीत्यत्रेव परोपासनस्य साधनता प्रतीयते इति मुक्तिसाधनपरविद्याविधिरिति गीताभाष्ये (३. अ.) उक्तम्। अत्र 'मत्वा धीरः' इत्यत्र धीरशब्दप्रयोगेण वल्ल्युपक्रमे 'श्रेयो हि धीरोऽभिप्रेयसो वृणीते' इति वाक्यप्रत्यभिज्ञापनेन धीरवराणयश्रेयो-रूपविद्याया 'मत्वा' इत्यत्र विवक्षिताया नित्यं फलं मुक्तिरूपमिति दर्शितम्' मन्त्रयोरनयोश्शोकनिवृत्तेः फलत्वोक्त्या मध्यगते ;—

अणोरणीयान् महतो महीयान्

आत्माऽस्य जन्तोर्निहितो गुहायाम्।

तमक्रतुः पश्यति वीतशोको

धातुः प्रसादान्महिमानमात्मनः॥

इति मन्त्रे आवृत्त्यधिकरणश्रुतप्रकाशिकोक्तरीत्या धातुः प्रसादाद्वीत-शोक इति योजनया दर्शनफलमेव शोकनिवृत्तिरूपं विवक्षितम्। तेन च दर्शनस्य प्रसादरूपादृष्टद्वारकमुक्तिफलहेतुता सिध्यति इति पूर्व-मेवोक्तम्॥

'श्रेयो हि धीरोऽभिप्रेयसो वृणीते' इत्यत्र विद्याया अभिवरणीय-त्वोक्त्या भक्तिरूपता भगवतो विद्याविषयस्य वरणीयता च लभ्यते 'मत्वा धीरः' इत्यत्रापि अभिवृतविद्यावानेव धीरः एष एव अनन्तरम्--

नायमात्मा प्रवचनेन लभ्यः—यमेवैष वृणुते तेन लभ्यः

इत्यत्र यच्छब्दार्थ इति 'तमक्रतुः पश्यति' इत्यत्रोक्तदर्शनस्य अस्यां श्रुतौ भक्तिरूपता प्रतिपाद्यते। यच्छब्दस्य वरणीयताहेतुभक्तिरूप-

## भावप्रकाशः

समाधिमत्परत्वात् । एतेन चेतनवरणीयविद्यायाः भगवत्कर्तृकवरणद्वारकं लाभहेतुत्वमिति सिद्धम् । अत एव तदनन्तरम् ;—

नाविरतो दुश्चरितात्—प्रज्ञानेनैनमाप्नुयात् ।

इति श्रुतिस्सङ्गच्छते । तत्र 'नासमाहितः' इत्यनेन यच्छब्दाभिप्रेतव्यक्तीकरणात् । पूर्वं प्रज्ञानस्य मुक्तिकरणताया अविवक्षितत्वे मुक्तिकरणप्रज्ञानानुवादासङ्गतेः । प्राप्तिहेतुप्रज्ञानानुवादेन दुश्चरितविरत्यङ्गविधानस्य तदधिगमाधिकरणश्रीभाष्ये निष्कर्षणात् । तदेतदभिप्रेत्योक्तम् 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति सूत्रे श्रीभाष्ये 'उपेयस्वरूपम् उपेतृस्वरूपं उपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्' इति 'नायमात्मा' इत्यादिना उपायभूतस्योपासनस्य भक्तिरूपतामप्याह' इति च ॥

श्रुतप्रकाशिकायां च ;—'नायमात्मा प्रवचनेन लभ्यः' 'नाविरतो दुश्चरितात्' इत्यादिना केवलश्रवणादिविलक्षणः परमात्मवरणीयताहेतुभूतः प्रकृष्टज्ञानविशेषो हि उपायतयाऽभिधीयते' इति ॥

अत्र प्रज्ञानं प्राप्नुयान्नरः इति प्रजानन्नेनमाप्नुयात् इति वा क्रमपरित्यागपूर्वकमुक्तक्रमः प्रज्ञानस्योपायत्वविवक्षामुत्तम्भयतीत्याशयः ॥

गीतातृतीयसप्तमावतरणभाष्येऽपि 'नायमात्मा' इति श्रुतौ 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र वरणीयताहेतुभक्तिर्विवक्षितेति स्फुटम् ॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वाऽपि . . . . ॥

इत्यत्र नासमाहितः—समाधिनिष्ठ इत्यर्थः । नाशान्तमानस इत्यत्र

'योगश्चित्तवृत्तिनिरोधः'

## भावप्रकाशः

आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।

तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥ (वि. पु. ६-७-३९)

इति योगसूत्रविष्णुपुराणोक्तदिशा योगनिष्ठो विवक्षितः । निक्षेपरक्षोक्तदिशा 'नासमाहितः' इत्यादौ चित्तसमाधानाद्यर्थाभ्युपगमेऽपि ;—

तां योगमिति मन्यन्ते—योगो हि प्रभवाप्ययौ ।

लब्ध्वा । विद्यामेतां योगविधिं च कृत्स्नम् ।

ब्रह्मप्राप्तः . . . . ॥

इति उत्तरश्रुत्यनुसारात् 'प्रज्ञानेनैनमाप्नुयात्' इत्यादौ योग एव विवक्षित ।

नास्त्यकृतः कृतेन ।

न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।

इति मुण्डककठश्रुत्योर्नित्यभिन्नस्य करणतानिषेधपरत्वकल्पकेन ;

'नायमात्मा'

इति श्रुतौ असङ्कोचेन प्रीतिरूपतापन्नानामपि श्रवणादीनामुपायतानिषेधेन स्वातन्त्र्यमूलकनिर्हेतुकरणं कथम् उत्प्रेक्ष्यते? पूर्वश्रुतिद्वयेन श्रवणादीनामुपायतानिषेधसिद्धौ पुनश्श्रवणादीनामुपायतानिषेधवैयर्थ्यात्। लाभहेतुतानिषेधेन वरणनिर्हेतुकत्वस्य शब्दादप्रतीतस्य उपपाददनायोगात्। कठश्रुतौ चेतनकर्तृकवरणानन्तरमेव भगवत्कर्तृकवरणस्योक्तेः । वृञ्धात्वर्थपर्यालोचनायां भक्तेर्हेतुताया दृढीकरणाच्च निषेधानुवादोक्तेरप्यसंभवात् । अतः ;—

प्रज्ञानेनैनमाप्नुयात् (कठ)

अथ परा यया तदक्षरमधिगम्यते ॥ (मुं.)

इति करणत्वोक्तिविरोधात् ;

एतैरुपायैर्यतते यस्तु विद्वान्

## भावप्रकाशः

इति मुण्डकश्रुतिविरोधाच्च भवदुत्प्रेक्षितसरण्या असङ्कोचेनार्थवर्णनासंभवेन उक्तश्रुतिषु नित्याभिन्नकरणतानिषेधपरत्वोत्प्रेक्षणम् (व. मी. भा.) अयुक्तमित्यभिप्रेत्य भगवता भाष्यकृता (१-२-५) (१-४-१ अ.) 'नायमात्मा' इति श्रुतेरपवर्गोपायवेदनस्य भक्तिरूपतापरता प्रतिपादिता ॥

'विजिज्ञासितव्यः' 'निदिध्यासितव्यः' इत्यत्र सन्प्रत्ययस्स्वयंप्रयोजनत्वेन ध्यानस्य रागप्राप्ततां निरतिशयप्रीतिरूपतां वा न प्रतिपादयितुमलम् ; किंतु सुकरोपायेनैव फललाभे दुष्करध्याने कः प्रवर्तेत इति जिज्ञासानिवृत्तये ;—

धर्म्यं सुसुखं कर्तुमव्ययम् ।

इति गीतोक्तदिशा मधुरभेषजनयेन दुष्करे प्रवृत्तेरुपपादनार्थं ध्यानपरिणामसमाधिसङ्ग्रहाय समाधिपर्यन्तध्यानलाभार्थं च इच्छाविषयतामित्यभिप्रेत्य श्रवणमननयो रागप्राप्तत्वेन न विधिः किंतु ध्यानस्यैवेति श्रीभाष्ये स्थापितम् । 'निदिध्यासितव्य' इत्यत्र सन्प्रत्ययेनैव अनवधिकातिशयप्रीतिलाभ (व. मी. भा.) चोद्यस्य तु नावकाशः । इच्छाविषयत्वेन प्रीतिमात्रलाभेऽप्यनवधिकातिशयप्रीतेस्ततोऽलाभात् । 'यमित्यत्रैव प्रीतिविषयीकृतत्वे सिद्धे वृणुते इति पदानर्थक्यम् । (व. मी. भा.) इत्युक्तिः' 'अनन्यचेता' इति गीताभाष्ये 'मत्प्राप्त्यनुगुणोपासनविपाकतद्विरोधिनिरसनमत्यर्थमत्प्रियत्वादिकं च अहमेव ददामीति स्मृतिहेतुकतदुत्तरविपाकविरोधिनिरसनपरमभक्तिदातृत्वं वरणपदार्थमुक्त्वा तत्प्रमाणतया ;—

ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।

इत्यादिगीतोदाहरणात् ;

**भावप्रकाशः**

एष एव साधुकर्म कारयति तं यम् . . . . ।
यमेवैष वृणुते . . . . . . . . ।

इति यत्तच्छब्दघटितश्रुतिद्वयस्य गीतैकार्थ्यस्य तत्र तत्र भाषणाच्च चेतनव्यापारहेतुकं स्वप्राप्तिहेतुदातृत्वं श्रीमुखसूक्तपञ्चमशतकाभिप्रेतं वरणमिति निर्णयेन समाहिता ॥

गीतायां ' येन ' इति तृतीया करणार्थिकेति ' भक्त्या—लभ्यः ' इत्युक्तविपाकरूपोक्तार्थः स्फुटः ॥

गीतायाम् ;—

यो मां स्मरति
तस्याहं सुलभः

इत्यत्र धनवत इदं फलं सुलभमित्यत्र लाभे धनहेतुकत्ववत् परमात्मलाभे तत्स्मृतिहेतुत्वं प्रतीयते । सुशब्देन वरणद्वारकत्वं विवक्षितम् । देयतया विवक्षितमपि न ' अनन्यचेताः ' इति पूर्वोक्तम् ; तथा अत्र बोधकशब्दाभावादुक्तदिशा तद्धेतुकत्वस्यैव दातृत्वे लाभाच्च । किंतु पूर्वोक्तार्थोक्तरीपायपरम्परैव अत्रत्यतात्पर्यचान्द्रिकानुरोधेन वरणम् ' मामयं प्राप्नुयादित्यमोघस्संकल्पः ' इति तत्वटीकासूक्तौ अयमित्यस्य निरतिशयप्रीतिहेतुकताद्विपाकादिमानर्थ इति बोध्यम् । ' एष एव साधुकर्म कारयति ' इति श्रुतेः पूर्वं उपक्रमे ;—

स होवाच प्रतर्दनस्त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे इति । तमुहेन्द्र उवाच । इत्यारभ्य ;—

मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात् ॥

इति श्रूयते । अत्र कठश्रुतिवत् अमृतत्वप्राप्त्युपायान्वितार्थकवृञ्धातु-

भावप्रकाशः

प्रयोगेण उपक्रमैकार्थ्येन ‘ यमेवैष वृणुते ’(क) इत्यत्र वृञ्धात्वर्थविशदीकरणरूपतापि ‘ एष एव साधुकर्म कारयति तं यम् ’ इत्यादेस्सिध्यति। कठश्रुतिसमानानुपूर्वीकत्वान्मुण्डकश्रुतिरपि तदेकार्था इत्याशयः ‘ एष एव ’ ‘ यमेवैष ’ इति श्रुत्योरुपक्रमोपसंहारयोर्वेदार्थसंग्रहे उपादानेन भगवता व्यञ्जितः। युक्तं चैतत्; तथाहि;—‘ त्वमेव वरं वृणीष्व ’ इत्यत्र वरशब्दः देयाभीप्सितवाची। हितशब्दस्य सुखतत्साधनोभयार्थे प्रयोगेण परैः पुरुषार्थपरत्वेन व्याख्यातस्याप्यत्रत्यहितशब्दस्य ‘ मामेव विजानीहि ’ ‘ मामायुरमृतमित्युपास्व ’ इति पूर्वोत्तरश्रुत्यनुरोधेन ‘ विद्युपास्योः व्यतिकरेणोपक्रमोपसंहारदर्शनात् ’ इति वाक्यकृदुक्त्या ‘ मामेव विजानीहि ’ ‘ स म आत्मेति विद्यात् ’ इत्यत्रोपासनात्मकज्ञानस्य विधेर्विवक्षितत्वेन ‘ यन्मां विजानीयान्नास्य केनचन कर्मणा लोको मीयते ’ इत्यादौ प्रतिबन्धककर्मरूपभगवन्निग्रहानिवृत्त्यादिफलश्रवणेन मोक्षसाधनोपासनविधिरेवायमिति निर्णयेन पुरुषार्थसाधनार्थकत्वमेवोचितम्। तमपा च साक्षात्साधनता अङ्ग्यद्वारिका कर्मव्यावृत्ता विवक्षिता इत्यभिप्रेत्य भगवता ‘ मामुपास्व ’ इति उपासनं हिततममुपदिदेश ‘ हिततमश्चामृतत्वप्राप्त्युपाय एव ’ इति (१-१-२५) भाषितम्। एवं च उपसंहारे ;—

‘ स एष प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् एष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति ’ ‘ एष लोकपाल एष लोकाधिपतिरेष सर्वेशः स म आत्मेति विद्यात् ’ इत्यत्र साधुशब्दोऽपि हिततम (मेषुरम्यमाभिधत्ते) शब्दार्थमुपासनमपेक्ष्य साधुताविशिष्टमभिधत्ते। लोकपालः—लोकाधि-

## भावप्रकाशः

पतिः इत्यत्र प्राकृताप्राकृतौ लोकौ विवक्षितौ। प्राकृतलोकेभ्यस्सर्वेभ्य ऊर्ध्वनयनेच्छा च ;—

'यन्मां विजानीयात् नास्य केनचन कर्मणा लोको मीयते प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व' प्राणेन ह्यमुष्मिन् लोकेऽमृतत्वमाप्नोति' स यो मामायुरमृतमित्युपास्ते सर्वमायुरस्मिन् लोक एति आप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके' इत्युपक्रमोक्तोर्ध्ववैकुण्ठ-लोकनयनेच्छैव। तत्रोक्तमुपासनस्य कर्मक्षयामृतत्वप्राप्तिहेतुत्वं उपासन-विपाकरूपतदुत्तरोत्तरोपायकारयितृत्वद्वारकमित्यत्रोच्यते। एतेन उपक्रमो-क्तमुपासनस्या हिततमत्वं विशदीकृतम्। एतेन परमुक्तिं प्रति उपासनानु-पायतावादौ द्वावपि प्रतिक्षिप्तौ॥

पूर्वमुपासकस्य नित्यामृतत्वप्राप्तिरुक्ता। तत्र स्वर्गलोकः 'यमेभ्यो लोकेभ्य उन्निनीषति' इत्यत्र सर्वलोकेभ्य उर्ध्वनयनोक्तया प्राकृतलोकेभ्य ऊर्ध्वं अप्राकृतलोक इति निश्चीयते॥

'एष एव साधुकर्म कारयति' इत्यत्र कर्मशब्दो ज्ञानमात्रपरः ज्ञानतदितरसाधारणो वेत्यन्यदेतत्। ज्ञानमात्रपरत्वे उपासनविपाक-रूपज्ञानस्य मुख्यमेव साधुत्वं हिततमेषु रम्यत्वं संभवति। एवं वेदार्थ-सङ्ग्रहोक्तार्चनप्रणामाद्यङ्गिकोटिनिविष्टकर्ममात्रसाधारण्येऽपि व्यासार्यैः 'ज्ञानेतरसाधारणत्वेऽपि उपासनविपाकरूपोपासननिष्पादनद्वारकोपाय-साधारणः कर्मशब्दः। तत्र उपासनविपाकस्य (४-१-१) भाष्योक्त-दिशा परसङ्कल्पातिरिक्ताङ्गद्वारकतया अव्यवहितोपायता उपासन-विपाकप्रतिबन्धकनिवर्तकत्वेन 'सर्वापेक्षा' 'अग्निहोत्रादि—(३-४-२६) (४-१-१६) इति सूत्रनिर्णीतरीत्या ज्ञानेतरकर्मणामङ्गद्वारको-पायत्वम्' इत्युक्तं श्रुतप्रकाशिकायाम् (१-१-१)॥

## भावप्रकाशः

एतेन अत्राव्यवहितकारणत्वोक्त्या उपासनस्य व्यापारवत्कारणस्वरूपं करणत्वं नास्तीति उपासानुपायतावादमन्यथापरिष्कुर्वतां केषांचित् (श्रु. प्र. ता. दी.) उत्प्रेक्षणं निरवकाशम् ॥

यद्यपि कर्मशब्दस्य पुण्यपापरूपकर्मसामान्यपरत्वमाश्रित्य सर्वास्वेव प्रवृत्तिष्वीश्वरो हेतुकर्तेति श्रुतेरवसीयते इति इयं श्रुतिः (२-३-४१) (शं. भा.) उदाहृता; तथाऽपि 'यमेभ्यो लोकेभ्य उन्निनीषति' इत्याद्युपसंहारस्य 'यं त्वं मनुष्याय हिततमं मन्यसे' इत्याद्युपक्रमस्य च पर्यालोचनायां हिततममेव साधुकर्म तद्विरोधि चासाधुकर्म विवक्षितमिति प्रतीयते। अत एव पुण्यपापशब्दपरित्यागपूर्वकं साधुकर्मासाधुकर्मशब्दप्रयोगोऽप्युपपद्यते। यद्यपि 'तयोश्श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते'(क. उ.) इत्यत्र नित्यफलपरस्साधुशब्दः; तथाऽप्यत्र 'यं त्वं मनुष्याय हिततमं मन्यसे' इत्याद्युपक्रमानुरोधात् उन्निनीषति इति फलस्य पृथगुक्तेश्च रम्याहिततमपर एव साधुशब्दः ॥

ध्यानपर्यन्तातिमात्रपरमपुरुषानुकूल्यं यच्छब्दे विवक्षितम्। 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व' इत्युपक्रमोक्तोपासनविषयस्य 'एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमरः' इत्युपसंहारे आनन्दत्वकथनानन्तरं 'एष एव साधुकर्म कारयति तं यम्' इति श्रुतौ एतच्छब्दस्य उपासनविषय आनन्दोऽर्थः। यच्छब्दस्य चोपासनकर्ता अर्थः इति निश्चयात्। स्वरूपानन्दाविषयकोपासनस्य भक्तिरूपस्य एतच्छब्देयच्छब्दे च विवक्षितत्वेन तदुत्तरकालिकमेव साधुकर्मशब्दे विवक्षितम् तच्च परज्ञानानुभवान्तिमस्मृतिरूपम् ॥

## भावप्रकाशः

परज्ञानपरमभक्ती उपायकोटिनिविष्टे इति (ग. व्या.) व्यासार्योक्तेः । 'निरूढभक्तिपरकोटिभिः विहायसं पदम्' इत्यादि (स.ना.भा.) भट्टार्योक्तेश्च तत्कारयितृत्वं विशेषोपकारसंपादनेन दिदृक्षानुबुभूषादिरूपतदिच्छाजनकत्वम् ॥

साधुत्वं चापवर्गोपायेषु रम्यत्वमेव विवक्षितम् इत्यभिप्रेत्य 'यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते तमनुगृह्णन् भगवान् स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेषु रुचिं जनयति' इति (२-३-४१) भाष्यम् 'अतीवानुकूल्यप्रातिकूल्यप्रवृत्तयोरुत्तरोत्तरहिताहितकर्मसु प्रयोजयिता च भवति' इति (२-२-३) श्रुतप्रकाशिका च ॥

अत्र उत्तरोत्तरशब्देन पूर्वं यत्र यत्र पूर्वकालिकः अतिमात्रानुकूलचेतनव्यापारो यो यः प्रतिपाद्यते तद्धेतुकमुत्तरोत्तरहितकर्मकारयितृत्वं तत्र तत्र विवक्षितम् ॥

न तु पूर्वातिमात्रानुकूल्यं प्रत्यपि भगवतः प्रयोजयितृत्वं कैश्चिदुत्प्रेक्षितमिति । यच्छब्दोऽपि पूर्वप्रतिपन्नातिमात्रानुकूल्यवत्परः । न तु प्रातिकूल्यव्यवसायनिवृत्तिमन्मात्रपर इति च स्फुटं प्रतीयते ॥

एतेन निरतिशयानुकूलवस्तुध्यानवान् मत्कारितसाधुकर्मकर्ता नित्यविभूतौ मामाप्नुयादिति वरणम् 'नायमात्मा' इति श्रुतौ वृञ्धात्वर्थः उक्तध्यानवान् यच्छब्दार्थ इति निर्णीतं भवति ॥

तथा च उपासनाकारनिर्णयावसरे श्रुतिमिमामुपादाय भाष्यम् ;— 'यथाऽयं प्रियतम आत्मानं प्राप्नोति तथा भगवान् स्वयमेव प्रयतते' इति भगवतैवोक्तम् 'तेषां सततयुक्तानाम्—येन मामुपयान्ति ते इति' इति । 'अयं भगवति निरतिशयप्रीतिमान् प्रियतमः निरतिशयप्रीतिविषयो भवन्नित्यर्थः । 'ददामि बुद्धियोगं तम्' इत्यस्यार्थविवक्षया

### भावप्रकाशः

स्वयमेव भगवान् प्रयतते इत्युक्तम्। अनेन वरणप्रकारो दर्शितः' इति श्रुतप्रकाशिका च। भाष्ये अयं प्रियतमः इति 'तेषाम्' इति पूर्वार्धस्य प्रियो हि इत्यर्धस्य च विवरणम्। 'यथा आत्मानं प्राप्नोति' इत्यादिः अवशिष्टभागः 'ददामि इत्युत्तरार्धविवरणम्। तत्र येन इत्यस्य यथेति विवरणम्। एवं च 'ददामि' इत्युत्तरार्धं वरणप्रकारपरम् तदुत्तरश्लोकानुपादानेन—आत्मभावस्थ इति न तत्परमिति स्फुटम्॥

एतेन (ना. भा.) 'आत्मभावस्थः' इत्ययं वरणप्रकारः। तस्यानुषिङ्गकव्यापारो बुद्धियोगदानम् अज्ञानतमोनाशनं च। तदुभयं न वरणप्रकारान्तर्गतम्' इत्युक्तिश्शिक्षिता। 'प्रियो हि' इत्यत्र चेतन-कर्तृकप्रीतेः भगवत्कर्तृकप्रीतिं प्रति हेतुत्वं विवक्षितम्। 'तेषाम्' इत्यत्र भगवत्कर्तृकप्रीतेः द्वारत्वं विवक्षितमित्यभिप्रेत्य 'निरतिशयप्रीति-विषयो भवन्नित्यर्थः' इति (श्रु. प्र.) उक्तम्। एतेन चेतनकर्तृक-प्रीत्यनन्तरम् भगवता प्रीतिपूर्वकं देयो बुद्धियोगः न पूर्वार्धेन 'भज-ताम्' इत्यनेनोक्तभक्तिरूपः। किं तु (वे. सं.) उदाहृतभक्त्यामाम्' इति श्लोकोक्तपरज्ञानपरमभक्तिरूप इति निर्णितम्। अत्र चेतनस्य भगवति निरतिशयप्रीतिः वरणीयताहेतुगुणपरभक्तिशब्दव्यपदेश्या यच्छब्दाभिप्रेता। तस्याः पूर्वकालिक्याः तदुत्तरभावि भगवन्निरति-शयप्रीतिपूर्वकहिततमबुद्धिदातृत्वरूपं वरणं प्रति हेतुता स्फुटा। एतेन परभक्तेः प्राप्तिहेतुत्वं प्रीतिपूर्वकवरणद्वारकम्। वरणं च स्वप्राप्त्युपायेष्वतिकल्याणेषु रुचिं जनयतीत्युक्तसाधुकर्मकारयितृत्व-रूपमिति सिद्धम्॥

एवम् 'उपपत्तेश्च' (३-२-२४) इत्यत्र प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः 'नायमात्मा—तनूं स्वाम्'

**भावप्रकाशः**

इत्यनन्योपायत्वश्रवणात् इति भाष्यादौ 'वृणुते' इत्याद्युक्तं पूर्वोक्त-बुद्धिदातृत्वमेवोपायत्वम् इति सिद्धम्; अतः;—

न देवा यष्टिमादाय रक्षन्ति पशुपालवत्।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्॥

इति (१-१-१) व्यासार्योदाहृतवचनानुसाराच्च स्वस्यैव अनन्योपायत्वेत्युभयत्र चेतनव्यापारस्योपायताव्यवच्छेदो नाभिप्रेतः। 'वाक्यान्वयात्' 'पत्युरसामञ्जस्यात्' इत्यादिसूत्रभाष्यविरोधात्। सूत्रे श्रुतौ वा एवमर्थस्य क्वापि भगवताऽनुक्तेः। 'तथाऽन्यप्रतिषेधात्' (३-२-३५) इत्यनन्तरसूत्रे—'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. ३-८) इति परस्य ब्रह्मणो वेदनमेवा मृतत्वसाधनं नान्योऽमृतत्वस्य पन्थाः इत्युपदिश्य, इति भाष्याविरोधाच्च अत्रापि कैश्चिदुत्प्रेक्षितार्थस्य विवक्षाया असम्भवात्। किं तु पूर्वपक्षि-संमतप्राप्यप्रापकचेतनभेदव्यवच्छेदः। तथा च श्रुतप्रकाशिका;—

'अनन्योपायत्वश्रवणात्प्राप्यस्यैव प्रापकत्वश्रवणात्। 'विवृणुते तनूं स्वाम्' इत्यनेन प्रापकत्व प्राप्यत्वं च गम्यते' इति। 'स्वप्राप्तौ' इत्यादिपूर्ववाक्यानुसारेण अनन्येत्यत्र प्राप्यमेव प्रतियोगितया विवक्षितम् सिद्धशब्दाप्रयोगेण साध्यस्यानुपायत्वं न विवक्षितमिति भावः॥

एतेन 'यमेव—परमात्मानमेष विद्वान् वृणुते प्राप्तुमिच्छति तेन वरणेनैष परमात्मा लभ्यः नान्येन साधनान्तरेण' इति (मुं.) (शं.) भाष्यम्; 'यमेव परमात्मानं वृणुते तेन परमात्मना मुमुक्षुरूपव्यवस्थितेन वरणेन अभेदानुसन्धानलक्षणेन प्रार्थनेन कृत्वा लभ्यः' इति

## भावप्रकाशः

(आ. गि) विवरणमपि न घटते । 'महान्तं विभुमात्मानम्' (क.) 'स वेदैतत्परमं ब्रह्म' (मुं.) इति श्रुत्युक्तस्यैव 'नायमात्मा' इत्यत्र परामर्शस्य न्याय्यतया 'यमेवैषः' 'तस्यैष आत्मा' इत्यत्रापि तत्परामर्शेन प्रतीतार्थस्य बाधकमन्तरा परित्यागस्य 'मुमुक्षुरूपऽव्यवस्थितेन' इत्यर्थस्य अभेदानुसन्धानरूपवरणस्य शब्दादप्रतीतस्य स्वीकारस्य स्वयोजनानुसारेण परमात्मनः जीवस्य प्राप्यत्वमात्रस्य लब्धस्य परित्यागस्य चानुचितत्वात् । अन्यत्यागेन आत्मलाभप्रार्थनैवात्मलाभसाधनम्' (मुं. शं.) इत्युपसंहारोऽपि प्रार्थनामात्रेणात्मलाभायोगान्न घटते ॥

अतः 'उपासते पुरुषं ये ह्यकामास्ते' इति पूर्वश्रुतिवत् 'यमेवैष वृणुते तेन' इत्यत्र यत्तच्छब्दौ जीवपरावेव यदेव साक्षादपरोक्षाद्ब्रह्म' (बृ.) इत्यत्रेव 'यमेव इत्यत्र एवकारेण पूर्वश्रुत्युक्तार्थपरत्व-निश्चयात् । एतच्छब्दः परमात्मपरः । 'तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यत्र एतच्छब्दोऽपि—स्वामिति प्राधान्यादपेक्षितत्वाच्च परमात्मानमेव परामृशतीति स्वशब्दघटितवाक्ये प्राप्यप्रापकाभेद एव न तु जीवब्रह्माभेदो विवक्षित इत्याशयो व्यासार्यैर्दर्शितो भवति ।

एवं च 'स्वप्राप्तौ स्वस्यैवोपायत्वश्रुतेः' इति श्रीभाष्ये एवकारेण प्राप्यान्यस्य परज्ञानदातृत्वरूपस्वतनुविवरणकर्तृत्वरूपोपायत्वं चेतनासाधारणं व्यवच्छिद्यते ; न तु चेतनव्यापाररूपभक्तेर्व्यापारवत्कारणत्वरूपं करणत्वम् ; श्रुतावेतदर्थबोधकैवकारविरहात् । पराधिकरणपूर्वपक्षनिरसनार्थत्वस्याप्यभावात् 'नायमात्मा' इति पूर्वार्धे भक्तिरूपतापन्नस्य लाभकरणतानिषेधासम्भवस्य सर्वत्र केवलमेव निषेध्यमभिदधता भगवता स्फुटमभिधानाच्च । तदुक्तं व्यासार्यैः—"यथा न पृथि-

## भावप्रकाशः

व्यामग्निश्चेतव्य, (तै. सं. कां. ५) इत्यत्र हिरण्योपधानरहितपृथिव्यां चयनं निषिध्यते न तु पृथिवीमात्रे; तद्वत्' इति ॥

एवं च 'नायमात्मा न मेधया' इत्यत्र केवलस्य निषेध्येतया विवक्षितत्वेन पूर्वार्धपरता 'स्वस्यैवोपायत्वश्रुतेः' इति भाष्यस्य न घटते। श्रुतौ पूर्वार्धे भक्तिरूपतापन्नस्य लाभहेतुतानिषेधकल्पनेऽपि वरणद्वारकलाभहेतुताया उत्तरार्धेन सिद्ध्या पूर्वार्धे वरणाद्वारकलाभ-हेतुत्वमेव निषेध्यं स्यात्। अतो वरणद्वारकलाभहेतुतापरैवेयं श्रुतिः भगवतो वरयितृत्वपरैवेति; वेदान्तसारे 'प्रप्यस्यैव प्रापकत्वोपपत्तेः' यथाऽऽह;—'यमेवैष वृणुते तेन लभ्यः' इतीत्युक्तम्। अत्र प्रापकत्वं वृणुते इत्युक्तं वरयितृत्वरूपमेव विवक्षितमिति स्फुटं प्रतीयते। श्रुतावे-तच्छब्दार्थस्य वरयितुः तेन लभ्य इत्यनेन प्राप्याभेदः प्रतिपाद्यते एवकारः पूर्वश्रुत्यर्थैक्यपरः। प्राप्यस्यैवेति विवरणं सर्वं वाक्यं सावधारणमिति उत्सर्गमनुसृत्य। एवकारस्यावधारणपरत्वाभिनिवेशेऽपि तेन लभ्य एवैष यं वृणुते तस्यैष आत्मा स्वां तनुं विवृणुते इति योजनायां प्राप्य एव प्रापक इत्यर्थः शब्दतो लभ्यते। एवकारेण प्राप्यान्यस्य वरयितृत्वरूपं प्रापकत्वं व्यवच्छिद्यते; न तु परभक्तेः वरण द्वारकलाभहेतुत्वम्। 'प्राप्यस्यैव' इत्यत्रैवकारः 'नायं+लभ्यः इति पूर्वार्धोक्तव्यवच्छेदपर इति कल्पनं न संभवति; 'यमेवैष वृणुते तेन लभ्यः' इत्येतावन्मात्रोपादानात्: 'अमृतस्यैष सेतुः' इति श्रुत्यर्थसाधिकायां 'तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति श्रुतौ स्वाशब्दे तच्छब्दार्थजीवात्मीया न विवक्षिता तस्य स्वामित्यादि-क्रमविरहात्; किं तु एतदात्मीयैव विवक्षिता ॥

## भावप्रकाशः

स्वशब्दार्थश्च एष आत्मैव । 'यमेवैष' इत्यत्रैष इत्यपि तदेकार्थकम्' एष आत्मेति नायमात्मेत्यत्र 'अयमात्मा' एतत्समार्थकम् । एवं च पूर्वापरवाक्यार्थनिर्णयमन्तरा 'यमेवैष वृणुते' इति मध्यवाक्यस्य परोक्तार्थविघटनपूर्वकमर्थनिर्णयो न संभवतीति अतो न प्राप्यप्रापकाभेदस्सिध्यति इति श्रीभाष्ये दीपे च पूर्णश्रुत्युदाहरणं स्वाशब्दघटितवाक्येनार्थवर्णनं च । 'महान्तं विभुमात्मानं (क.) 'स वेदैतत्परमं ब्रह्म' (मुं.) इति पूर्वप्रस्तुतः परमात्मैव 'नायमात्मा' 'तस्यैष आत्मा' इत्यत्र विवक्षितः । एवं च मध्यवाक्ये 'यमेवैष' इत्यत्र एषः—साधकः (क.) विद्वान् (मुं.) इति जीवपरतया परविवरणं न घटते । आनन्दगिरिणाऽप्यनङ्गीकारात् ॥

एवं 'यमेव स्वमात्मानमेव वृणुते—प्रार्थयते तेनात्मना वरित्रा स्वयमात्मा लभ्यः ज्ञायते (क. उ.)' इति विवरणमपि अस्मिन् वाक्ये उत्तरवाक्य इव स्वशब्दाभावात् । एवमपि स्वशब्दार्थान्तर्भावे यत्तच्छब्दादिवैयर्थ्याच्च । तच्छब्दस्य वारणपरत्वे यत्तच्छब्दयोरैकार्थ्यभङ्गात् जीवपराभेदानुसन्धानवान् तेनेत्यत्र विवक्षितः इति (आ. गि.) तु न संभवति ; तदर्थबोधकशब्दाभावात् आत्मशब्दश्च परस्मिन्नेव मुख्यः अतः परसंमतः स्वात्मा स्वेनैव लभ्य इत्यर्थो नात्र विवक्षितः इति सिद्धम् । (श्री. भा. वे. दी.) 'नायमात्मा' इति पूर्णश्रुत्युपादानेन 'द्युभ्वाद्यायतनं स्वशब्दात्' (१-३-१) 'मुक्तोपसृप्यव्यपदेशाच्च' (२) इति सूत्रद्वयोक्तार्थस्थापनं सूचितम् । (३-२-३४) तत्र प्रथमे 'अमृतस्यैष सेतुः' इति परस्य ब्रह्मणोऽसाधारणशब्दः । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुश्श्रूयते । सिनोतेश्च बन्धनार्थत्वात् सेतुः—

## भावप्रकाशः

अमृतस्य प्रापक इत्यर्थः। सेतुरिव वा सेतुः—संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः' आत्मशब्दश्च निरुपाधिकः परब्रह्माणि मुख्यवृत्तिः' इति (भाष्ये) उक्त्या 'अमृतस्यैष सेतुः' इति अमृतस्य स्वस्य स्वयमेव प्रापकः (वे. दी.३-२-४३) इत्युक्त्या च अमृतशब्दः प्राप्यपरः एतच्छब्दः ज्ञानविषयताविशिष्टपरः। धनवान् सुखीत्यत्र सुखे धनहेतुकत्ववत् सेतुत्वे ज्ञानहेतुकत्वं विवक्षितम्। 'अमृतस्यैष सेतुः' इत्यनन्तरम् 'तमेवैकं जानथान्या वाचो विमुञ्चथ' इति वा 'तमेव धीरो विज्ञाय' इतिवत् 'तमेवैकं जानथात्मानममृतस्य सेतुमन्या वाचो विमुञ्चथ' इति वा क्रमस्यापि परित्यागेन उक्तक्रमेण श्रुतिप्रवृत्तेः। 'तमेवैकं जानथात्मानम्' इत्यत्र एवकारेणैवान्ययोगव्यवच्छेदलाभादेकशब्दः प्रधानपरः। 'अथ परा यया तदक्षरमधिगम्यते' इत्युपक्रमोक्तमुक्तिकरणपरविद्यैव 'जानथ' इत्यत्र विवक्षिता ॥

एवं च उपक्रमोक्तपरविद्याविषयः प्रधान एतच्छब्दविवक्षितः। सेतुत्वमपि प्रतिलम्भकः—प्रापकः इति सेतुशब्दार्थकथनेन 'सेतुः' 'वृणुते' इति पदद्वयघटितश्रुत्योरेकार्थकत्वप्रदर्शनेन वरण एव पर्यवस्यति। एतेन—एकशब्दोक्तं प्राधान्यं विशदीकृतम्। 'वेदाहमेतं पुरुषं महान्तम्' इत्यत्र प्राधान्यस्याप्युक्त्या 'तमेव विदित्वातिमृत्युमेति' 'तमेवैकं जानथात्मानम्' इत्युभयोरवधारणघटितवाक्ययोरैकार्थ्यं प्रतीयते इति 'नान्यः पन्था विद्यते... अयनाय' इत्युत्तरवाक्यमपि 'अमृतस्यैष सेतुः' इति वाक्यार्थं व्यतिरेकमुखेन प्रदर्शयति। श्वेताश्वतरोपनिषदि तृतीये षष्ठे च 'तमेव विदित्वा' इति श्रूयते 'तत्र तृतीये वेदाहमेतं पुरुषं महान्तम्' इति पूर्वार्धोक्तमहापुरुष एव

भावप्रकाशः

तच्छब्देन परामृश्यते। स एव एवकारार्थान्ययोगव्यवच्छेदघटकान्यत्व-प्रतियोगित्वेन पूर्वं विवक्षित इति तस्यैव 'नान्यः पन्थाः' इत्यत्राप्य-न्यत्वप्रतियोगित्वेन विवक्षणं युक्तम् ॥

न च 'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र ज्ञानस्य मुक्ति-हेतुत्वं विधीयते। 'नान्यः पन्था विद्यतेऽयनाय' इति ज्ञानातिरिक्त-कर्मणस्साक्षात्साधनत्वनिषेध' 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशति-रित्येव ब्रूयात्' इतिवत् इति भाट्टचिन्तामण्युक्तमिति वाच्यम्; पथिन् शब्दस्य साक्षात्साधनवाचित्वाभावेन 'अमृतस्यैष सेतुः' इत्यत्र सेतु-शब्दसमानार्थत्वस्यैव न्याय्यत्वात्। न चतुस्त्रिंशदिति ब्रूयात् इति स्फुटप्रतियोगिकवाक्यवत् नान्यः पन्था इत्यादि वाक्यं न स्फुट प्रति-योगिकम्। येन तत्समशीलता स्यात्; अतोऽन्यत्वप्रतियोगिता तच्छब्दा-र्थस्य 'न चतुस्त्रिंशदिति ब्रूयात्' इति दृष्टान्तबलेन न विवक्षितेति वक्तुं न शक्यते। एवकारघटितश्वेताश्वतरमुण्डकश्रुतिवाक्ययोरैकार्थ्येन अन्यत्व-प्रतियोगितायास्तच्छब्दार्थे निर्णयसंभवाच्च। 'अमृतस्यैष सेतुः' (मुं.) इत्यत्र एतच्छब्दः न परसंमतरीत्या ज्ञानपरामर्शी किंतु परमात्मपरामर्शी इति पूर्वमेव (जी. स. ४११) निरूपितम्। एवं 'तं त्वौपनिषदं पुरुषम्' (बृ.) इत्यत्र पुरुषशब्दः सर्वपापदाहकबहुप्रदाद्यर्थकः परस्य मुक्तिहेतुता-विवक्षां द्रढयति इति च। तेन 'तमेवंविदित्वा इत्यत्र महापुरुषपरामर्शी तच्छब्दः मुक्तिहेतुपर इति सिध्यति। किं च 'तमेव विदित्वा' इत्युत्तरं 'तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यत्र पुरुषशब्दस्य सर्वव्यापकार्थकत्वं प्रदर्श्य 'पुरुष एवेदं सर्वम्' इत्यत्र व्याप्तिनिबन्धनसामानाधिकरण्य-कथनमुखेन सर्वस्य पुरुषपारतन्त्र्यम्;

महान् प्रभुर्वै पुरुषः सत्वस्यैष प्रवर्तकः ॥

भावप्रकाशः

इत्यत्र मोक्षहेतुज्ञानसंपादकसत्त्वप्रवर्तकत्वम् ‘ उतामृतत्वस्येशानः ’ इत्यत्र अमृतत्वहेतुत्वं च प्रतिपाद्यत इति ‘ नान्यः पन्था विद्यतेऽयनाय ’ इत्यत्रान्यत्वप्रतियोगित्वं महापुरुषस्यैव विवक्षितमिति निश्चीयते ॥

एतेन ‘ वेदाहमेतं पुरुषं महान्तम्

आदित्यवर्णं तमसः परस्तात् ।

इति पूर्वार्धे विग्रहवत्त्वेन प्रकृतिमण्डलादूर्ध्वदेशस्थत्वेन च प्रमितस्य महापुरुषस्य वेदनसाध्या प्राप्तिर्दृष्टद्वारा न संभवति अपि त्वदृष्टद्वारा इति निर्धारितं भवति ।(श्वे.) षष्ठे च ‘ तमेव विदित्वा ’ इत्यतः पूर्वं निर्गुणश्रुत्युत्तरं ‘ एको बहूनां विदधाति कामान् ’ इति उत्तरं च ;–संसारमोक्षस्थिति-बन्धहेतुः इति ; अन्ते ;—

अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ।

इति निर्गुणवासुदेवस्य मुक्तिहेतुसंकल्पवत्त्वमभिधाय ‘ यस्य देवे परा भक्तिः—तस्यैते कथिता ह्यर्थाः प्रकाशन्ते ’ इत्यत्र प्राप्तिपर्यन्तार्थ-प्रकाशस्य भक्तिसाध्यत्वोपसंहारेण ‘ नान्यः पन्थाः ’ इत्यत्र संकल्प-विशिष्टनिर्गुणवासुदेवान्यस्य मुक्तिहेतुत्वानिषेधेन वेदनस्य वासुदेव-संकल्परूपादृष्टद्वारकमेव मोक्षरूपं फलमिति सिद्धम् ॥

आवृत्त्यधिकरणश्रीभाष्ये ‘ तमेव विदित्वाऽतिमृत्युमेति ’ इति श्रुतेः मोक्षसाधनतया विहितवेदनपरत्वमभिधाय वेदनस्य दृष्टोपायता-पक्षनिराकरणेन श्रुतावस्यामुक्तार्थविवक्षा स्फुटा ॥

पराधिकरणेऽपि ‘ स्वप्राप्तौ स्वस्यैवोपायत्वश्रुतेः ’ इत्यभिधाय ‘ तथाऽन्यप्रतिषेधात् ’ इति सूत्रे ‘ तमेव विदित्वा ’ इति श्रुतिमुपादाय परस्य ब्रह्मणो वेदनमेवामृतत्वस्य साधनं नान्योऽमृतत्वस्य पन्थाः ’ इति भाष्योक्तौ साधनमित्यन्तम् ‘ तमेव विदित्वाऽतिमृत्युमेति ’

## भावप्रकाशः

इत्यन्तार्थः। अत्र एवकारस्य महापुरुषव्यतिरिक्ताल्पपुरुषवेदनस्य भक्तिरूपस्य अमृतत्वसाधनताव्यवच्छेदपरता स्फुटा। नान्योऽमृतत्वस्य पन्थाः इत्यत्र परमपुरुषव्यतिरिक्तोपायनिषेधविवक्षणेन परस्यामृतत्वसेतुत्वं स्थापितं भवति। एवं च 'उपपत्तेश्च' इति पूर्वसूत्रभाष्यैकरस्यमुपपद्यते॥

'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र वेद्यपुरुषव्यतिरिक्तस्योपायत्वनिषेधक एवकारः 'नान्यःपन्था.' इत्यादि तु तद्विवरणपरमेव। एतेन वेद्यपरमपुरुषव्यतिरिक्तस्य तज्ज्ञानस्य व्यापारवत्कारणत्वरूपं करणत्वं प्रतिक्षिप्तम्। (श्रु.प्र.ता दी.) इति कैश्चिदुत्प्रेक्षितोर्थस्तु नात्र विवाक्षितः पथिन्शब्दस्य व्यापारवत्कारणत्वरूपकरणताविशिष्टावाचकत्वात्। 'एष पन्थाः एतत्कर्म एतद्ब्रह्म' (ऐ. उ.) इत्यत्रोभयोः पथित्वोक्तेः। एवकारस्य 'तमेव' इत्यत्र पुरुषान्यहेतुताव्यवच्छेदबोधकतायास्सर्वसम्मतव्युत्पत्तितो लाभायोगाच्च। 'तमेव विदित्वा' इत्यत्र तच्छब्दोत्तरद्वितीयार्थान्वायिनि विदिधात्वर्थे एव द्वितीयान्ततच्छब्दसमभिव्याहृतैवकारार्थान्वयस्य व्युत्पत्तिसिद्धतायास्सर्वतान्त्रिकसंमतत्वेन 'विदित्वाऽतिमृत्युमेति' इत्यत्र मृत्योरत्ययं प्रति हेतुत्वेन प्रमिते वेदने महापुरुषान्याल्पपुरुषाविषयकत्वस्यैवकारेण शब्दतो लाभे अल्पपुरुषवेदनस्य भक्तिरूपस्य मृत्योरत्ययं प्रति हेतुताऽर्थतो व्यवच्छिद्यते। 'तमेव विदित्वा' इति वाक्ये महापुरुषवेदनस्य मुक्तिहेतुताप्रतीतावपि दृष्टादृष्टद्वारयोरप्रतीत्या द्वारं विशेषनिर्णयमुखेन महापुरुषस्य प्राधान्यं स्थापयति 'नान्यः पन्था' इत्यादि वाक्यम्। अन्यत्वप्रतियोगी च वेदनविषयताविशिष्टो महापुरुषः। पथिन्शब्देन वेदनोत्तरप्राप्तिपर्यन्तपरम्परासंपादको विवक्षितः। महापुरुषान्यस्य पथित्वनिरसनेन महापूरुषस्योक्तपथित्वस्थापनेन 'अमृतस्यैष सेतुः' इति श्रुत्यर्थोऽपि दृढीकृतः। सङ्कल्प-

भावप्रकाशः

विशिष्टस्य महापुरुषस्य कारणत्वकथनेन सङ्कल्पद्वारकं वेदनस्य मुक्तिहेतुत्वं परस्य अव्यवहितकारणत्वरूपं प्राधान्यं च सिध्यति । जगत्कारणार्थकपूरुषशब्दपर्यालोचनया मूलतारूपं प्राधान्यं सिध्यतीत्यादिकं पूर्वमेव निरूपितम् ॥

अतश्च 'तमेव विदित्वा' इत्यत्रैवकारार्थघटकान्यत्वप्रतियोगितया पूर्वमुपस्थितस्य महापुरुषस्यैव 'नान्यः पन्थाः' इत्यत्राप्यन्यत्वप्रतियोगित्वेन विवक्षणम् न तज्ज्ञानस्येति सिद्धम्। इत्थं च 'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्रार्थतो वेदनेतरहेतुतानिषेधः 'नान्यः पन्थाः' इत्यादौ वेदनविषयमहापूरुषातिरिक्तस्य शाब्दो हेतुतानिषेध । निषेध्यं हेतुत्वमपि नैकरूपमित्यभिप्रेत्य (१-४-१९) 'तमेव विदित्वा' 'तमेवं विद्वान्' इति श्रुतिद्वयमुपादाय 'अमृतत्वस्य परमवेदनैकोपायताप्रतिपादनात्' इत्यनेन परमात्मैवामृतत्वोपायतया द्रष्टव्यतयोपदिश्यते इत्ययमर्थः भगवतोपपादितः ॥

एतदेवाभिप्रेत्य श्वेताश्वतरास्तु ;—

महान् प्रभुर्वै पुरुषः सत्वस्यैष प्रवर्तकः ।

इति तमेव महापुरुषमधीयानास्तस्यैवान्यत्वप्रतियोगित्वमवधारणानिर्देशेन स्पष्टमामनन्ति ;—वेदाहमित्यारभ्य 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । 'तस्मात् 'अमृतस्यैष सेतुः' इति न्यायेन परमपुरुषस्यैवामृतत्वोपायत्वमिह प्रतीयते । 'वेदनेतरानिषेधभाष्यं तु फलिताभिप्रायेण' इति निक्षेपरक्षोक्तिः । 'परमपुरुषव्यतिरिक्तोपायनिषेधमुखेन तज्ज्ञानव्यतिरिक्तोपायनिषेधः श्रुतौ सिद्ध' इति (७) तात्पर्यचन्द्रिकोक्तिरपि । अत्र 'नान्यः पन्थाः' इत्युक्तनिषेध एव स्फुटीकृत इति व्यक्तं विदुषाम् ॥

### भावप्रकाशः

एवं च 'तमेवं विद्वान्' इत्यादिपुरुषसूक्तवाक्येऽपि 'नान्यः पन्था अयनाय विद्यते' इत्यत्र 'तमेव विदित्वा' इत्यादिश्रुतौ नान्यः पन्था विद्यतेऽयनाय' इत्युक्तार्थ एव विवक्षित इत्यभिप्रायकमेव द्युभ्वाद्यधिकरणश्रीभाष्यम् ॥

'तमेव विदित्वा' इति वाक्यं विहाय पुरुषसूक्तवाक्योपादानं तु पुरुषसूक्तस्य सर्ववेदपठितत्वेन अस्यार्थस्य सर्वोपनिषत्तात्पर्यविषयत्वोपपादनार्थम्;—'तमेवं विद्वान्—विद्यते' इत्यादिनैकतां गतास्सर्वे वेदान्ताः' इति (२-२-३५) भाष्य एवोक्तेः ॥

द्युभ्वाद्यधिकरणभाष्ये स एवेत्यत्र तच्छब्दः 'तमेवं विद्वान्' इति वेदनविषयत्वेनोक्तपरः। धनवान् सुखी इत्यत्रेव 'तमेवं विद्वानमृत इह भवति' इत्यत्र वेदनस्योत्तरपूर्वाघाश्लेषविनाशहेतुता भुक्त्वा तृप्तिमाप्नोतीत्यत्रेव 'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र मृत्योरत्ययं प्रति हेतुता प्रतीयते 'नान्यः पन्था अयनाय विद्यते' इत्यत्र अयनशब्दः प्राप्तिवाची। प्राप्तिपथित्वं गीतोक्तादिशा प्राप्तिहेतुदातृत्वम्। अन्यत्वप्रतियोगी च ज्ञानविषयताविशिष्टः। एवञ्च ज्ञानविषयताविशिष्टान्यस्य प्राप्तिहेतुदातृत्वनिषेधोक्त्या 'अमृतस्यैष सेतुः' इत्यत्रोक्तं ज्ञानविषयताविशिष्टस्य प्राप्तिहेतुदातृत्वं व्यतिरेकमुखेन दृढीकृतमिति द्युभ्वाद्यधिकरणभाष्याशयः। तत्रात्मन्शब्दस्य परे मुख्यत्वोक्त्या 'नायमात्मा' इति श्रुतेर्जीवपरत्वं च व्युदस्तम् ॥

'तमेवैकं जानथ' इत्यत्र जीवस्य 'अमृतस्यैष सेतुः' इत्यत्र परस्य च यत्न उक्तः। विधिवाक्यानि सर्वाणि फलोपाये जीवयत्नपराणि। एतेन 'अमृतस्यैष सेतुः' 'संसार—हेतुः' इत्युभयत्र परस्य जीवयत्नसापेक्षहेतुता विवक्षितेति सिद्धम्। मुण्डकोपनिषदि 'अथ परा यया तद-

### भावप्रकाशः

क्षरमधिगम्यते'। 'येनाक्षरं पूरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' 'तमेवैकं जानथात्मानम्' 'ओमित्यात्मानं ध्यायथ स्वस्ति वः पाराय तमसः परस्तात्' 'उपासते पुरुषं ये ह्यकामाः' 'नायमात्मा प्रवचनेन लभ्यः' 'नायमात्मा बलहीनेन लभ्यः' 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इत्यत्र अक्षरपुरुषात्मशब्दाः एकार्थकाः। परविद्यासामान्यस्यापि ब्रह्मानुभवफलमेकरूपमेव विवक्षितम्। अत्र 'नायमात्मा—यमेवैष वृणुते' इत्यत्र यच्छब्दः 'उपासते पुरुषं ये' इति पूर्वमन्त्रोक्तोपासकार्थकः इत्यभिप्रेत्य श्रीभाष्ये 'उपासनं स्याद्ध्रुवा स्मृतिः' इति वाक्यविवरणानन्तरम्' 'ओमित्येवात्मानं ध्यायथ' इत्येतदुत्तरं 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यत्र भावलक्षणसप्तम्या ध्रुवानुस्मृतेरेव प्रत्यक्षतापन्नाया अपवर्गोपायतां प्रसाध्य 'अपवर्गोपायभूतां स्मृतिं विशिनष्टि' इति 'नायमात्मा' इति श्रुतिमवतार्य 'प्रियतम एव हि वरणीयो भवति। यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति' इति अर्थापत्त्या उपासनस्य भक्तिरूपतां साधयित्वा उपासनहेतुभूतविवेकादिसाधनसप्तकान्तर्गतानवसादनिर्वचनम् 'नायमात्मा बलहीनेन लभ्यः' इति द्रमिडभाष्यस्थमुपन्यस्यतो भगवतः 'तथा विद्वान् नामरूपाद्विमुक्तः' इत्यत्र विद्वच्छब्देनोक्तः 'नायमात्मा बलहीनेन—एतैरुपायैर्यतते यस्तु विद्वान्' 'यमेवैष वृणुते' इति यच्छब्दद्वयेनोक्तः एक एवेत्याशयः स्फुटः॥

एतेन 'एतैरुपायैर्यतते यस्तु' इति स्वयत्नपराधिकारिणं 'यमेवैष वृणुते' इत्युक्ताधिकारिणः पृथक्कृत्य तस्य भगवति निरतिशयप्रीतेः अनन्यप्रयोजनत्वस्य च विरहकल्पनम्; यमेव स्वप्राप्यत्वेन प्रार्थयेत् तेनैवायं यथावस्थिताकारविशिष्टः प्राप्यः। परगतस्वीकारविषयी-

भावप्रकाशः

कृते दिव्यविग्रहं 'दृष्ट श्रीरङ्गधामनि' इत्याद्युक्तरीत्या प्रकटीकुर्यात्। स्वयत्ननिष्ठस्य तु सालोक्यस्वार्थभगवदनुभवादिफलान्तरमेव। तस्य भगवान् हंसहयग्रीवादिमुखान्तरेणैव स्वात्मानं दर्शयेदिति कल्पनं च (व. भू. मी. भा.) स्वोत्प्रेक्षामात्रमूलकम् अनादरणीयमिति बोधितम्।

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। (शां. मो. प.)
सात्विकस्स तु विज्ञेयः स वै मोक्षार्थचिन्तकः॥

इत्याद्युक्तदिशा जननकालिकहयवदनकटाक्षवतां नाथयामुनश्रीभाष्यकारादीनामेव श्रुतितात्पर्यनिष्कर्षः अतथाविधानां तु नेति हयशिरोरत्नभूषणे तद्दीधितौ च निरूपितम्। वृणुत इत्यत्र भगवदाशयः पूर्वमेव दर्शितः॥

तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः।
तत्प्राप्तिहेतुर्ज्ञानं च कर्म च—आगमोत्थं विवेकाच्च द्विधा ज्ञानम्॥
(वि. पु. ६)

इत्यादिमुण्डकोपनिषदुपबृंहणवचनेषु परविद्यासामान्यस्याप्येकरूपं फलं तदर्थं परविद्यायत्नकर्तव्यता च स्फुटा। 'नायमात्मा—लभ्य' इत्युभयत्रैकरूप्यमुभयोर्विभिन्नाधिकारिपरतां विघटयति। विवेकादौ ध्यानान्ते चेतनयत्नः 'एतैरुपायैर्यतते' इत्यत्र एतत्सापेक्षः परमात्मयत्नः 'यमेवैष वृणुते' इत्यत्र प्रतिपादितः॥

राजकुमारनये च परस्परसंश्लेषाकाङ्क्षया राजकुमारयत्नद्वयं नापलपितुमर्हति। यत्नद्वयप्रतिपादकभगवद्भाष्यकृत्सूक्तयः पूर्वमेवोदाहृताः। अनावृत्तिसूत्रभाष्ये उपासनजन्यप्रीतिविशिष्टस्याविद्यानिवर्तकत्वानवधिकातिशयानन्दप्रापकत्वे प्रतिपाद्य तेन उपासनस्य अदृष्टद्वारकलाभहेतुत्वं प्रकाश्य ज्ञानिनः परब्रह्मानुभवस्य परस्य

### भावप्रकाशः

ज्ञानिलाभस्य च प्रतिपादनपूर्वकं प्रियो हीत्यादिना हेतुहेतुमद्भावापन्नोभयप्रीतिप्रतिपादकगीतोदाहरणेन परविद्यासामान्येऽप्युभयं वर्तते । न तु क्वचिद्भगवतश्चेतनलाभः क्वचिच्च चेतनस्य भगवल्लाभमात्रमिति बोधितम् । चेतनस्य (परप्राप्तेः) भगवल्लाभस्य सर्वश्रुतिसिद्धत्वात् । परस्य शेषित्वेन चेतनलाभसिद्धेरपि सार्वत्रिकत्वात् । 'तथा विद्वान्' 'तदा विद्वान्' इति पूर्वपरश्रुत्योरिव 'एतैरुपायैर्यतते यस्तु विद्वान्' इति श्रुतावपि 'विद्वान्' इत्यत्र पारार्थ्यपारतन्त्र्यज्ञानवतो विवक्षितत्वेन परप्रयोजनस्य प्राधान्यस्य 'एतैरुपायैर्यतते' इत्युक्तयत्नस्य सामान्यविशेषोपकारद्वयमूलकत्वेन पराधीनतायाश्च प्रतिपत्तिसम्भवात् । शेषत्वपारतन्त्र्यलाभद्वैविध्यस्य (च. श्लो.टि.) श्रुतिस्मृतिसूत्रभाष्यादितोऽसिद्ध्या अप्रामाणिकत्वात् । 'यस्तु' इत्यत्र तुशब्दो बलहानप्रमादालिङ्गतपोवद्वैलक्षण्यं बोधयति । 'तस्यैष आत्मा विशते ब्रह्मधाम' इत्येतदुत्तरवाक्ये 'ब्रह्मधाम' इत्यनेन 'स वेदैतत्परमं ब्रह्मधाम' इत्युपक्रमैकार्थ्यबोधनेन मन्त्रचतुष्टयस्यैकाधिकारिपरत्वनिर्णयेन तद्घटकस्य 'नायमात्मा' इति मन्त्रद्वयस्य विभिन्नाधिकारपरत्वोत्प्रेक्षणस्यानुचितत्वाच्च । अतः 'नायमात्मा बलहीनेन लभ्यः' इत्यादिद्रमिडभाष्योदाहृतानवसादनिर्वचनश्रुतौ 'एतैरुपायैर्यतते यस्तु विद्वान्' इत्यत्र मुमुक्षुचेतनस्य भगवच्छासनानुवृत्तिरूपमोक्षोपाययत्नः 'शासनानुवर्तिनं ज्ञात्वा कारुण्यात्स भगवान् वर्धयेत विद्वान् कर्मदक्षः' इति द्रमिडभाष्याभिप्रेतायां 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतौ परमपुरुषयत्नश्च विवक्षित इति सिद्धम् ॥

(वि. पु.) उपबृंहणानुसारेण 'एतैरुपायैः' इत्यत्र साक्षात्परम्परासाधारणा उपायाः मन्त्रद्वयविवक्षिताः श्रवणमनननिदिध्यासन-

**भावप्रकाशः**

बलाप्रमादसलिङ्गतपोरूपाः । तत्र तपः 'तपो विद्या च' इति मनुव्याख्योदाहृतभारतवचनाद्वर्णाश्रमविहितं कर्म । बलम् अनवसादः । अनवसादे विवेकादिपञ्चकमन्तर्भावनीयम् । 'नायमात्मा प्रवचनेन' इत्यत्र इदशब्दः 'उपासते पुरुषं ये' इत्युक्तसन्निकृष्टोपासनकर्मवचनः । एवं 'यमेवैष वृणुते' इत्यत्र एतच्छब्दोऽपि । एतेन उपासनकर्मत्वेन पूर्वप्रस्तुतस्य वरणकर्तृत्वोक्त्या वरणमुपासनानन्तरकालिकमिति सिध्यति । यच्छब्दश्चोपासकवचनः स्वेन वृतेन लभ्यः इत्यादिक्रमं विहाय 'यमेव' इत्यादिनिर्देशात् 'यदेव साक्षादपरोक्षाद्ब्रह्म' (बृ.) इत्यत्रेव एवकारघटनेन यच्छब्दस्य प्रक्रान्तपरामर्शित्वे संभवति तस्यागम्यानुचितत्वात् । उपासनकर्मवाच्ये तच्छब्दसमभिव्याहारेण यच्छब्दस्य तत्कर्त्रुपस्थापकताया युक्तत्वात् । पूर्वमन्त्र 'उपासते पुरुषं ये' इत्यत्र उत्तरमन्त्रे 'यस्तु विद्वान्' इत्यत्र च यच्छब्देनैकार्थ्याच्च 'प्रियो हि + स च मम प्रियः' इत्युक्तस्यैव, 'स महात्मा सुदुर्लभः' इत्यत्र दौर्लभ्योक्त्या 'यम्' 'यस्तु' इत्यत्र एकवचनेन तस्यैव वरणीयस्य दौर्लभ्यं द्योत्यते । वरणीयत्वान्यथानुपपत्त्या गीतानुसाराच्च उपासकस्य निरतिशयप्रीतिमत्त्व लभ्यते । अर्थद्वयस्य निरतिशयप्रीतिरूपोपासने पर्यवसानेन उपासनस्य पूर्ववाक्यसिद्धतया 'यमेवैष वृणुते' इति वाक्ये वरणीयताहेतुभूतोपासनगतनिरतिशयप्रीतिरूपत्वस्य विधिः । 'तेन लभ्यः' इत्यत्र तच्छब्दः वरणीयवचनः । तृतीया कर्तरि ; न करणे 'अथ परा यया तदक्षरमधिगम्यते' इत्युपक्रमे करणत्वेनोक्तपरविद्याया यच्छब्देनैवोपस्थितेः 'यो वेद—सोऽविद्याग्रन्थिं विकरति' 'तदा विद्वान्—परमं साम्यमुपैति' 'उपासते पुरुषं ये' 'ते शुक्रमेतदतिवर्तन्ति' इति पूर्वम् 'तथा विद्वान्—परात्परं पुरुषमुपैति

भावप्रकाशः

इत्युत्तरत्र च विदुषोऽनिष्टनिवृत्तिप्राप्तिकर्तृत्वयोः प्रतिपादनेन 'तेन लभ्यः' इत्यत्र तृतीयायाः लाभकर्त्रुपस्थापकत्वस्यैव न्याय्यत्वात् 'नायमात्मा प्रवचनेन लभ्यः' इत्येतत्पूर्वार्धे पूर्वोक्तस्य विदुषः कर्तुः निरतिशयप्रीतिरूपतानापन्नपरविद्यायाः करणत्वनिषेधेन ;—

'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे'

इत्येतदुत्तरं 'तदा विद्वान् पुण्यपापे विधूय' इत्यत्र पूर्वं परविद्यायाः भगवन्निग्रहनिवृत्तिद्वारकत्वेन करणत्वोपपादनेन दृष्टद्वारकप्राप्तिहेतुतापक्षनिरसनवत् अत्रापि यच्छब्दविवक्षिताया निरतिशयभक्तिरूपायाः परविद्यायाः दृष्टद्वारकपरज्ञानादिहेतुतापक्षस्य (श्रु. प्र. ता. दी.) केषांचित्सम्मतस्य निरसनपूर्वकं वरणात्मकसङ्कल्पद्वारकलाभहेतुत्वोपपादनेनापि उपक्रमोक्तं परविद्यायाः प्राप्तिं प्रति व्यापारवत्कारणत्वरूपकरणत्वं स्थापितं भवति। तदेतदभिप्रेत्य 'यथाऽयं प्रियतम आत्मानं प्राप्नोति—प्रयतते' इति भाष्यम् 'येन मामुपयान्ति ते' इति 'तेन लभ्यः' इत्यस्य विवरणमिति तत्पूर्वगीतावाक्यस्य तत्पूर्वश्रुति विवरणपरत्वं व्यक्तं विदुषाम्। एतेन 'यमेवैष वृणुते' इत्यत्र जीवस्य प्राप्यत्वेन वरणविवक्षोत्प्रेक्षणं शिक्षितम्। परमात्मनः प्रापकत्वस्य उपासनकर्मणो वरयितुर्लभ्यत्वस्य चोक्त्या प्राप्यप्रापकयोरभेदस्य प्रतिपादनात् भगवत्प्राप्त्यर्थोपासने चेतनस्य स्वयंप्रवृत्तत्वेऽपि प्राप्यप्रापकयोरभेदेन भगवद्व्यतिरिक्तस्य प्राप्यत्वाभावेन चेतनस्य भगवति निरतिशयप्रीतिरेव न तु (ना. आ. भा.) कैश्चिदुत्प्रेक्षतादिशा सातिशयप्रीतिरिति 'उपपत्तेश्च' इति सूत्रतदभिप्रेतश्रुतिभ्यां निर्णीतं भवति तथा हि ;—

समन्वयाधिकरणे ब्रह्मणो निरतिशयानन्दरूपत्वेन परमपुरुषार्थ-

भावप्रकाशः

त्वेन तज्ज्ञानस्य परोक्षस्यापि फलत्वप्रतिपादनात् (वे. सं.) ब्रह्मप्राप्त्यु-पायज्ञानस्य परशेषतैकरसात्मकर्तृकप्रीतिविशेषात्मकभक्तिरूपत्वोपपाद-नावसरे 'आनन्दो ब्रह्म' 'रसो वै सः' 'कं ब्रह्म खं ब्रह्म' इति श्रुतीरुदाहृत्य निरतिशयानन्दरूपब्रह्मविषयकत्वान्निरतिशयप्रीतिरूपत्व-साधनात् एतैरुपायैर्यतते यस्तु विद्वान्' इत्यत्र विद्वच्छब्देन प्रति-पादितस्य परशेषतैकरसत्वज्ञानवत एव—

तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ।

इत्यत्र पण्डितशब्देन प्रतिपादितस्य 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य (बृ. ५–५) इति श्रुत्याभिप्रेतपाण्डित्यवत एव स्वस्वामित्वेनानु-संहितानवधिकातिशयानन्दरूपब्रह्मलाभार्थयत्नोक्त्या तस्य भगवति निरतिशयप्रीतेः प्रत्याख्यानासम्भवाच्च । गीतायामपि ;—'चतुर्विधा भजन्ते माम्' इत्यादौ ज्ञानी स्वयंप्रयोजनभक्तिनिष्ठो न विवक्षितः किन्तु मोक्षार्थसाधनभक्तिनिष्ठ एव । तथा हि उपक्रमे—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।

यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः ॥ ७ ॥ ३ ॥

इत्यत्र फलार्थं यतमानानामेव मध्ये कस्यचिदेव तत्त्वतो ज्ञानमिति विवक्षितम् 'तत्वतो वेत्ति' इति वाक्येऽपि विदुषां मनुष्याणामित्य-स्येव यततामित्यस्याप्यनुषङ्गस्य पूर्वपूर्वापेक्षया उत्तरोत्तरोत्कर्षप्रतिपादने तात्पर्यानुसारेण आवश्यकत्वात् । तदुत्तरं प्रकृतिजीवभगवद्रूपतत्त्वत्रयं तत्र भगवतः परत्वं च निरूप्य प्रकृतिजीवभगवद्रूपफलार्थभगवद्भक्ति-निरूपणपरे—

चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन ॥ ७ ॥ १६ ॥

इति श्लोके सुकृतहेतुकभक्तिनिष्ठानां उपक्रमोक्तानामेव भगवतः

### भावप्रकाशः

फललाभार्थं यतमानानां चातुर्विध्यं प्रदर्श्य तत्र 'तेषां ज्ञानी नित्ययुक्तः' इति श्लोके सुकृतिज्ञानिन एव भगवन्तं प्रेप्सोः फलान्तरार्थ्यपेक्षया नित्ययुक्तत्वैकभक्तित्वाभ्यां श्रैष्ठ्यं भगवति निरतिशयप्रीतिं तद्धेतुकां भगवतो भक्ते निरतिशयप्रीतिं चोक्त्वा ; तस्यैव—

आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ ७ ॥ १८ ॥

इत्यत्र भगवत एव प्राप्यत्वेन तस्मिन् निरतिशयप्रीतिर्ज्ञानिनः भगवद्व्यतिरिक्तफलार्थिनस्सातिशयप्रीतिश्च उपपादिता। अत्र भगवतः प्राप्यत्वेन फलत्वोक्त्या तत्फलार्थिसाधनभक्तिनिष्ठ एव ज्ञानी विवक्षितः। केषांचित्सम्मतः स्वयंप्रयोजनभक्तिनिष्ठस्य साधनभक्तिनिष्ठाद्विशेषः नात्रविवक्षामर्हति सद्विद्यादिसाधनभक्तिनिष्ठस्य पूर्वमनुक्तेः। अत एव अन्ते—

'येषां त्वन्तगतं पापम् - भजन्ते मां दृढव्रताः।'

इत्यत्र चतुर्विधभक्तानां फलार्थदृढसङ्कल्पवत्त्वोक्तिस्सङ्गच्छते। तदुत्तरश्लोके 'स महात्मा सुदुर्लभः' इत्यत्र उपक्रमोक्तफलसिद्ध्यर्थयत्नवतस्सुकृतहेतुकभक्तिनिष्ठस्य दौर्लभ्यमुक्तम्। 'तस्याहं सुलभः (८–१४)' 'भक्त्या लभ्यः' (२२) इत्यादावपि भगवतः प्राप्यत्वमुक्तम्। अत्र 'अनन्यचेता इति श्लोके नित्ययोगाशंसाविषयान्तर्गतं उपासन (भक्ति) विपाकादिलाभपर्यन्तं विवक्षितम्। लाभश्च गतिद्वारा पुनरावृत्तिशून्य इति 'भक्त्या लभ्य' इत्यनन्तरं 'यत्र काले त्वनावृत्तिम्' इत्यादिग्रन्थेन सिध्यति। एतेन 'तेन लभ्यः' इति श्रुतौ लाभः गत्यनन्तरकालिकः इति निर्णीतम्। 'भक्त्या लभ्य इत्यत्र तृतीयार्थः करणत्वम्। तत्र लाभे व्यापारो भगवत्सङ्कल्पः 'अनन्याश्चिन्तयन्तो माम्' (९–२२) इति श्लोके—'प्रियो हि' इति श्लोको-

**भावप्रकाशः**

विपाके व्यापारः 'तेषां सततयुक्तानाम्' (१०–१०) (इति श्लोके प्रतिपादितः ॥

तेषां सततयुक्तानाम्–येन मामुपयान्ति ते ।

इत्यत्र तृतीयया भक्तिविपाकस्य लाभकरणत्वस्य 'अनन्याश्चिन्तयन्तो माम्' इति श्लोकोक्तव्यापारवत्कारणत्वरूपस्य प्रतिपादनेन 'भक्त्या लभ्यः' इत्यत्रोक्तं भक्तेः लाभकरणत्वं विपाकद्वारकमिति सिद्धम् । 'नित्याभियुक्तानाम्' 'नित्ययुक्तस्य' सततयुक्तानाम्' इत्यादौ उपासनातिरिक्तफले इच्छोक्त्या उपासनस्य भक्तिरूपस्य स्वयंप्रयोजनत्वाभावः फलेच्छया साधनभक्त्यनुष्ठानं चेत्युभयं सिद्ध्यति । 'भक्त्या त्वनन्यया शक्यः–ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च' इत्यत्र दर्शनलाभयोर्भक्तेः करणत्वोक्त्या 'बुद्धियोगम्' इत्यत्र बुद्धिर्दर्शनपरमभक्तिरूपा इति निर्णयेन भक्त्या मामभिजानाति' इत्यत्र परज्ञानपरमभक्त्योः क्रमिकत्वोक्त्या 'मत्प्रसादात्–पदमव्ययम्' 'तत्प्रसादात्–प्राप्स्यसि शाश्वतम्' इत्यत्र तत्फलोक्त्या च पूर्वोक्तार्थो दृढीकृतः । अतः मुण्डकश्रुतिविष्णुपुराणगीतावाक्यैः 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिसूत्रैश्च ज्ञानिना अनुसन्धेयं अप्रधान कर्तृत्वं अप्रधानभोक्तृत्वं च नाज्ञतावहमिति प्रतिष्ठापितं भवति । एवं च—

भक्तिस्थः परमो विष्णुः तयैवैनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥ (३–३–५४)

इति आनन्दतीर्थोदाहृतवचनमपि उक्तकरणतापरं निर्व्यूढम् । गीतायाम् अष्टादशे सत्त्वादिगुणभेदेन ज्ञानकर्मकर्तृबुद्धिधृतिसुखानां त्रिविधानां निरूपणेन सत्त्वस्योपादेयतां प्रकाश्य—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः ॥ ४० ॥

भावप्रकाशः

इति गुणत्रयविनिर्मुक्तप्राणिनः प्रकृतिमण्डलेऽसत्त्वमाभिधाय ;—

स्वे स्वे कर्मण्यभिरतः—मद्भक्तिं लभते पराम् ॥

भक्त्या मामभिजानाति—विशते तदनन्तरम् ।

तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यति शाश्वतम् ॥ ६२ ॥

इति कर्मविपाकभक्त्यादीनां परमफलोक्त्या ; अष्टमान्ते अर्चिरादि-गत्या ब्रह्मप्राप्तवतोऽपुनरावृत्त्यभिधानेन च चतुर्दशे ;—

सत्वं रजस्तम इति देहे देहिनमव्ययम् ॥ ५ ॥

इत्यादिना सत्वादीनां देहे वर्तमानताप्रयुक्तबन्धकताविधानिरूपणावसरे-

कर्मणस्सुकृतस्याहुस्सात्त्विकं निर्मलं फलम् ॥ १६ ॥

इति अधिकसत्वजनितस्यापि सुकृतफलत्वस्य 'ऊर्ध्वं गच्छन्ति सत्वस्थाः' (१८) इति परमफलस्य च प्रतिपादनानन्तरम्—

नान्यं गुणेभ्यः कर्तारं—मद्भावं सोऽधिगच्छति ॥ १९ ॥

इत्यादेः—

सर्वारम्भपरित्यागी गुणातीतस्स उच्यते ॥ २५ ॥

मां च योऽव्यभिचारेण—ब्रह्मभूयाय कल्पते ॥ २६ ॥

ब्रह्मणो हि प्रतिष्ठाहं—सुखस्यैकान्तिकस्य च ॥ २७ ॥

इत्यन्तस्य प्रघट्टकस्य 'ऊर्ध्वं गच्छन्ति सत्वस्थाः' इति पूर्वोक्त-सत्त्वस्थान्तःपात्यधिकारिविशेषपरत्वमेव न तु तदनन्तःपात्यधिकारि-परत्वमिति निर्णीतम् ।

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।

सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ १८ ॥

इत्यष्टादशोक्त्या । द्वादशे—

सर्वारम्भपरित्यागी यो मद्भक्तस्स मे प्रियः ।

**भावप्रकाशः**

इत्यत्र मद्भक्त इत्युक्त्या च भक्त्यारम्भत्यागविवक्षा न संभवतीति यथा शास्त्रीयव्यतिरिक्तसर्वारम्भत्यागो विवक्षितः तद्वदत्रापि उत्तरश्लोकोक्त-साधनभक्तियोगारम्भत्यागविवक्षा न संभवतीति 'सत्वं रजस्तम' इति श्लोकोक्तबन्धकारम्भत्याग एव विवक्षितः ॥

किंच—अत्रारम्भशब्दप्रयोगेण अत्रैव पूर्वं 'लोभःप्रवृत्तिरारम्भः कर्मणाम्' (१४-१२) इत्युक्तरजोवृद्धिनिमित्तककर्मारम्भस्य त्याज्यत्वं विवक्षितम्। न तु पूर्वोक्तसत्वविवृद्धिनिमित्तककर्मारम्भस्येति निश्चीयते। अयमर्थः गीताभाष्ये स्फुट । द्वादशे—

मां ध्यायन्त उपासते ।

ये तु धर्म्यामृतमिदं—भक्तास्तेऽतीव मे प्रियाः ।

इत्यत्र साधनभक्तिनिष्ठानामतीव भगवत्प्रियत्वोक्त्या उत्तरश्लोके 'भक्ति-योगेन सेवते' इत्यत्र साधनतयोक्ता भक्तिः—योगः ध्यानम्, इत्यर्थ एव विवक्षितः इति निश्चीयते इत्यभिप्रेत्य (वे. स.) भगवता 'ब्रह्मप्राप्त्युपायश्च अनुध्यानरूपपरभक्तिरेवेति प्रतिज्ञाय सेवाया अदोषत्वं स्थापयित्वा एतद्वचनमुदाहृत्य इयमेव भक्तिरूपा सेवा 'ब्रह्मविदाप्नोति परम्' इत्यादिषु वेदनशब्देनाभिधीयते इत्युपक्रम्य 'तस्मात् परभक्तिरूपापन्नमेव वेदनं तत्वतो भगवत्प्राप्तिसाधनम्' इत्यभिधाय तत्र प्रमाणतया करणतृतीयान्तभक्तिशब्दघटितं 'भक्त्या च धृत्या च' इत्यादिमोक्षधर्मवचनं 'भक्त्या त्वनन्यया शक्यः' इति गीतावचनैकार्थमुदाहृत्योपसंहृतम् ॥

एतेन अत्र (र. त्र. मी. भा.) केषांचित् स्वाभिमताधिकारि-भेदोत्प्रेक्षणमपि परोक्तसरणिवत् न गीतातात्पर्यमनुसरतीति बोधितम्।

भावप्रकाशः

गीतामोक्षधर्मैकार्थ्यं (ई. उ. भा.) परैरुक्तं स्वयमभ्युपपादयितुं भगवता (वे. सं.) उदाहृत सर्वोपनिषद्व्याख्यानरूपम्—

न संदृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ।
भक्त्या च धृत्या च समाहितात्मा
ज्ञानस्वरूपं परिपश्यतीह ॥ (भार. मो. प.)

इति मोक्षधर्मवचनं धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति—साक्षात्करोति—प्राप्नोतीत्यर्थः । 'भक्त्या त्वनन्यया शक्यः' इत्यनेनैकार्थ्यात् इति (वे. सं.) विवृतं परप्रीतिसङ्कल्परूपव्यापारवत्कारणतापरमेव । (कठ. उ. ६-९) श्रुतावप्येतन्मूलभूतायां पूर्वार्धमेकरूपमेव ।

हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ।

इत्युत्तरार्धम् । 'अत्र स्थानप्रमाणात् हृदेति भक्तिरुच्यते' इति (वे. सं. १-२-१) व्यासार्यैरुक्तम् । 'न संदृशे' इति पूर्वार्धम् 'तदव्यक्तमाह हि' (३-२-२२) इति सूत्रविषयतयोपात्तं भाष्ये । 'हृदा' इत्यत्र तृतीययोक्तं करणत्वं प्रीतिरूपव्यापारवत्कारणत्वरूपमिति 'अपि संराधने प्रत्यक्षानुमानाभ्याम्' (३-२-२३) इति तदुत्तरसूत्रे प्रीतिजनकभक्तिरूपोपासन एव 'प्रकाशश्च कर्मण्यभ्यासात्' इति सूत्रसिद्धसाक्षात्कारोक्त्या निर्णितम् ॥

'अपि संराधने' इति सूत्रे प्रीतिजनकत्वेनोक्तज्ञानं भक्तिरूपम् । 'उपपत्तेश्च' इत्यत्र 'यमेवैष वृणुते' इति वक्ष्यमाणवरयितृत्वरूपप्रापकत्वोपपादनेन प्रीतिद्वारा वरणहेतुः इति व्यञ्जयित्वा फलाधिकरणे भक्तिजन्यप्रीतिविशिष्टस्य मुक्तिप्रदत्वस्थापनेन प्रीतिद्वारा मुक्तिहेतुरिति ख्यापयित्वा मुक्तेरेव फलत्वविवक्षया 'सर्ववेदान्तप्रत्ययं चोद-

## भावप्रकाशः

नाद्यविशेषात्' 'नानाशब्दादिभेदात्' इत्यत्र पूर्वमीमांसोक्तहेतुभिर्विचार्य 'पुरुषार्थोऽतश्शब्दादिति बादरायणः' (३-४-१) इति सूत्रे एतच्छब्देन भक्तिमेव परामृश्य पुरुषार्थहेतुत्वाभिधानेन मुक्तिं प्रति भक्तेः प्रीतिद्वारा कारणत्वं निर्धारितं भवति। 'अभिध्योपदेशात्' 'तदभिध्यानात्' इत्यत्र सृष्टेरिव ॥

'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (३-२-४) इति सूत्रे मुक्तेस्संकल्पहेतुकत्वोक्त्या 'फलं अतः' इत्यत्र चेतनशाचिपदोत्तरतसिला मुक्तौ सकल्पद्वारा भक्तेः कारणत्वं सिध्यति। श्रुतावपि 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे. उ. १) इत्यत्र भक्तेर्मुक्तिं प्रति प्रीतिद्वारा हेतुत्वोक्त्या 'स नो दद्याद्ब्रह्माप्यप्ययम्' 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतम्' 'एको बहूनां यो विदधाति कामान्' इत्यत्र इच्छाविषयमुक्त्यनुकूलसकल्पवत्तोक्त्या बन्धोपायत्वस्य चेतनव्यापारहेतुकसंकल्पवत्त्वेनैव भगवतो वक्तव्यतया 'संसारमोक्षस्थितिबन्धहेतुः' इत्यत्र विषमफलसमुदायपरिगणितमुक्तिं प्रत्यपि भगवतः 'तमेव विदित्वा' इति पूर्वश्रुत्युक्तवेदनहेतुकसंकल्पवत्त्वेनैव हेतुत्वं प्रतिपादितं भवति ॥

अतो 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र भक्तेः प्रीतिसंकल्पद्वारकलाभहेतुत्वं विवक्षितमिति प्राप्यप्रापकचेतनयोरभेदेन परज्ञानपरमभक्त्यादिदातृत्वात्मकवरयितृत्वरूपं सेतुत्वमुपपन्नमिति तात्पर्यकमेव 'उपपत्तेश्च' इति सूत्रम्। एवं च पराधिकरणफलाधिकरणाभ्यां चेतनयत्नमूलकमुक्तिहेतुमुक्तिदातृत्वे भगवत उपपादिते भवतः ॥

'यतो वा इमानि' इत्यादिश्रुतौ 'यत्प्रयन्त्यभिसंविशन्ति' इत्यत्र प्रतिपादितं मुक्तप्राप्यत्वं जन्माद्यधिकरणे विवक्षितमिति व्यासार्यैरुक्तम्। द्युभ्वाद्यधिकरणे प्राप्यत्वं प्रापकत्वं चोक्तम्। कर्त्रधिकरणे मुमुक्षु-

भावप्रकाशः

ब्रह्मोपासीत' इत्यादिशास्त्राणामर्थवत्त्वाय कर्तृत्वसाधनेन चेतनयत्न-मूलकत्वं मुक्तेस्सिद्धम् ॥

उभयलिङ्गाधिकरणे निरतिशयप्रीतिजनकभक्तावेवास्य साक्षात्कारः नान्यत्रेत्युक्त्या भक्तिजन्यप्रीतिमत्त्वेनाप्युभयलिङ्गत्वमुक्तं भवति ॥

पराधिकरणपूर्वपक्षयुक्तिभिः भक्तिजन्यप्रीतिविशिष्टात् प्रापकादुत्कृष्टस्य प्राप्यस्य सिद्धौ (१-१-२ ॥ १-३-१) अधिकरणद्वयसिद्धान्तासामञ्जस्यम् । भक्तिजन्यप्रीतिमतः कारणस्य उभयलिङ्गत्वासंभवः प्राप्यत्वाभावात् । जिज्ञासाधिकरणे कर्मणि षष्ठ्या विषयत्वप्रयोजनत्वयोर्ब्रह्मणि लाभेन उपासनाद्वारा ब्रह्मप्राप्तिफलकत्वस्य ब्रह्मविचारे अवगतस्याप्यसामञ्जस्यम् । ब्रह्मप्राप्तेस्तदन्यभक्तिफलत्वे चेतनप्रीतेः फलदशायामनुवृत्त्यभावेन निरतिशयत्वासंभवेन प्रापकप्रीतेरपि निरतिशयत्वासंभवात् संराधने उभयलिङ्गसाक्षात्कारायोगः शास्त्रस्य चेतनयत्नमूलकनिरतिशयपुरुषार्थपरत्वासंभवश्च इत्यादिदोषपरिहाराय जगत्कारणस्य प्रापकस्यैव भक्तिजन्यप्रीतिमतो वरयितृत्वरूपप्रापकत्वोपपादनेन जगत्कारणस्य प्राप्यत्वनिर्धारणे पूर्वोक्तदोषस्य कस्यापि नावकाशः । भक्तेर्नित्यभिन्नायाः नित्यफलविसदृशोपायत्वरूप व्याजत्वमपि सिध्यति ॥

प्राप्यप्रापकयोरभेदेन भगवति चेतनस्य निरतिशयप्रीतिसम्भवेन चेतनयत्नमूलकं फलं निरतिशयपुरुषार्थरूपं सम्भवतीति शास्त्रस्य तत्परत्वं प्रथमसूत्रोक्तं ब्रह्मज्ञानस्य निरतिशयपुरुषार्थरूपब्रह्मप्राप्तिफलकत्वं च स्थापितं भवति । एतेन दत्तप्रतिदानरूपत्वाद्भक्तेरुक्तव्याजत्वमपि नास्तीत्युक्तिः (व. भू. मी. भा) निरस्ता ॥

समन्वयाधिकरणे ब्रह्मणो निरतिशयानन्दस्वरूपत्वेन तज्ज्ञानस्य वाक्यजन्यस्य फलत्वोक्त्या भक्तेरपि फलत्वं पूर्वोक्तरीत्या साधनत्वं च

### भावप्रकाशः

अनौपचारिके तथा तज्ज्ञानस्यापि साधनत्वफलत्वे अनारोपिते अनौपचारिके। उक्तं च गीतायाम् ;—

यज्ज्ञात्वा मोक्ष्यसेऽशुभात् (गी. ९-१) इत्यनन्तरम्।

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।

प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

इति। अत्र भाष्यम्; 'भक्तिरूपेणोपासनेनोपास्यमानोऽहं तदानीमेव उपासितुः प्रत्यक्षतामुपगतो भवामीत्यर्थः। अथापि धर्म्यम् धर्मादनपेतम्। धर्मत्वं हि निश्श्रेयससाधनत्वम्! स्वरूपेणैवात्यर्थप्रियत्वेन तदानीमेव मद्दर्शनापादनतया च स्वयं निश्रेयसरूपमपि निरतिशयनिश्रेयसरूपात्यन्तिकमत्प्राप्तिसाधनमित्यर्थः। अत एव सुसुखं कर्तुम्—सुसुखोपादानम्—अत्यर्थप्रियत्वेनोपादेयम्। अव्ययम्—अक्षयम्—मत्प्राप्तिं साधयित्वाऽपि स्वयं न क्षीयते। इति 'अश्रद्दधानाः पुरुषा धर्मस्य' इत्यनन्तरश्लोकानुसारेण धर्म्यमित्यस्यायमेवार्थो युक्तः। मुक्तौ ज्ञानस्य श्रुतिसिद्धतया अव्ययमित्यस्यापि यथोक्त एवार्थः। अत्र 'अत्यर्थमत्प्रियत्वेनेत्यादिकं समाधित्वेन निश्रेयसत्वोपपादकम्। धर्मत्वं हि निश्श्रेयससाधनत्वम् इति अधिकारिविशेषणत्वं स्वयंप्रयोजनतामात्रमेव न साधनत्वं भक्तेरिति पक्षस्य निरासकम् इति स्फुटं विदुषाम्। एवं ये तु धर्म्यामृतमिदं—भक्तास्तेऽतीव मे प्रियाः, (१२-२०) इत्यत्र 'प्राप्यसमं प्रापकं भक्तियोगम्' इत्यादि भाष्येऽपि।

क्षेत्रज्ञः करणी ज्ञानं करणं तस्य तेन तत्।

निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्तते ॥

(वि. पु. ६-७ ९४)

इत्यत्र प्राचीनपाठमाश्रित्य; तेन—करणत्वेन इति विष्णुचित्तार्यैर्विवृतम्।

भावप्रकाशः

तेन मुक्तौ अष्टाङ्गसमाधिरूपज्ञानस्य करणत्वेन निवृत्तावपि फलत्वेन निवृत्तिर्नास्तीति सिद्धम् । एतेन-नित्यफलाविसदृशोपायत्वं ज्ञानस्य निर्व्यूढम् ॥

यदि च 'करण तस्य वै द्विज' इति पाठ इत्याग्रहः तदापि करणपदोक्तकरणताविशिष्टस्यैव निवृत्तिर्विवक्षिता । 'करणस्य परब्रह्म ध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्ति-वचनात्' इति श्रीभाष्यपर्यालोचनायां पूर्वम् (वि. पु.) अष्टाङ्गसमाधि-पर्यन्तध्यानात्मकरणावस्थाया उक्तया मुक्तौ सकलविभूतिगुणविशिष्ट-ब्रह्मणः साक्षात्कारानन्तरं करणावस्थानिवृत्तिर्विवक्षितेत्यैव प्रतीयते । तेन भक्तित्वाकारेणानिवृत्तिस्सिद्धा ॥

एतेन 'बोधाविकारयुक्तेषु' इत्यादिबद्धमुक्तवैलक्षण्यसन्दर्भस्य (७३) प्रागुक्त एवार्थ इति निर्धारितं भवति ॥

अत एव उपक्रमोक्तब्रह्मप्राप्त्यर्थयत्नवतः करणेन ब्रह्मध्यानेन मुक्तिमापन्नस्य भक्त्यनुवृत्तौ न कोऽपि विरोधः ॥

भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा ।
आविमुक्तेर्विधिर्नित्य स्वत एव ततः परम् ॥

इति आनन्दतीर्थोदाहृतं ब्रह्माण्डवचनं च संगच्छते । अतो भगवत इव भक्तेरपि फलत्वमुपायत्वं च अनौपचारिकमनारोपितमित्येव युक्तम् ॥

ननु ;—

मां हि पार्थ व्यपाश्रित्य येऽपि स्यु पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्राः तेऽपि यान्ति परां गतिम् ॥
किं पुनर्ब्राह्मणाः . . . . . . . . . ।

इति गीतानवमान्ते उक्तम् ॥

ब्राह्मणक्षत्रियविशां शूद्राणां च पर तप ।

भावप्रकाशः

इत्युपक्रम्य ;—स्वे स्वे कर्मण्यभिरतः—मद्भक्तिं लभते पराम् । इत्यन्त अष्टादशेऽप्युक्तम् । 'भक्तियोगाख्यं रत्नं सन्दर्शयाम्यहम्' (वै. ग.) 'स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व' (श. ग.) इति गद्येऽपि ॥

एवं च साधनभक्तेः त्रैवर्णिकमात्राधिकारिकायाः अपशूद्राधिकरणनयविरोधेन गीतातात्पर्यविषयत्वासम्भवेन प्रपन्नस्याधिकारपौष्कल्यार्था साध्यभक्तिर्गीतायां विवक्षिता। सा च फलरूपैव । साधनत्वं तु तस्याः वेदार्थसङ्ग्रहादिसूक्त्यनुसारेण प्राप्त्यव्यवहितपूर्ववर्तित्वमात्रेण' इति (ना. भा ) स्थापितमिति चेन्न ;

तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः । (२)
ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ॥
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा । १७-२३ ॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥
तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

इति गीतापर्यालोचनायां त्रैवर्णिकानामेव यज्ञाधिकारः प्रतीयते । अतो यज्ञाद्यङ्गकब्रह्मविद्यासु भक्तिरूपासु वेदान्तविहितासु मोक्षकाङ्क्षिभिरनुष्ठेयासु अपशूद्राधिकरणनयेन त्रैवर्णिकानामेवाधिकारः । उक्तविद्यैव भक्तिरूपा गीतायां विवक्षिता न तु शास्त्रविधिमुत्सृज्य क्रियमाणा इति स्पष्टं विदुषाम् । शूद्रदेहे मुक्तिसाधनवेदान्तविहितविद्यारम्भस्य गीतायामनुक्तेः शूद्रदेहे तद्वर्णोचितकर्मभिर्भक्त्या त्रैवर्णिकदेहपरिग्रहानन्तरं मुक्तिसाधनभक्तिरूपविद्यामारभ्य तत्समाप्त्यनन्तरं मुक्तावपि शूद्रवर्णोचितकर्मणां परम्परया उपयोग रः ' स्वे स्वे कर्मणि '

**भावप्रकाशः**

इत्यादिगीतासन्दर्भः । त्रैवर्णिकदेहे आरब्धोक्तब्रह्मविद्यानां प्रारब्धकर्मवशात् शूद्रदेहप्राप्तावपि तद्वर्णोचितकर्मभिर्वेदान्तविहितविद्यासंबन्धपरोऽपि 'मां हि पार्थ' इत्यादिगीतासन्दर्भः । 'भक्तियोगाख्यं रत्नम्' इत्यत्र वेदान्तविहितमुक्त्यर्थध्यानात्मको भक्तियोगो विवक्षित इत्यत्र न साधनमस्तीति प्रपन्नकर्तव्यः स्वयंप्रयोजनपाञ्चकालिककर्मान्तर्गतयोगकालिकभक्तियोग एवेति स्थापितं पाञ्चरात्ररक्षादौ । 'स्थानत्रयोदितपरभक्तियुक्त मां कुरुष्व' इत्यत्र परभक्तिः न वेदान्तविहितमुक्त्यर्थध्यानात्मिका ; प्रपन्नस्य अधिकारपौष्कल्यार्थतया तदभावस्य 'एवंभूतमत्कैङ्कर्यप्राप्त्युपायतयाऽवक्लृप्तसमस्तवस्तुविहीनोऽपि' इत्युत्तरत्र स्फुटमुक्तेः 'सर्वधर्मान् परित्यज्य' इत्यत्र 'ये तु धर्म्यामृतम्' 'अश्रद्दधानाः पुरुषा धर्मस्यास्य' इति पूर्वोक्तधर्मत्याग एव विवक्षित इति व्यक्तं विदुषाम् । अत्र व्यासार्याः ;—'वक्ष्यमाणचरमश्लोकप्रथमपादार्थमाह :—एवं भूतेति । अवक्लृप्तं—विहितम् । समस्तवस्तुशब्देन कर्मज्ञानभक्तियोगाः तदनुगुणाः अमानित्वादयो गुणाश्च विवक्षिताः' इति स्थानत्रयोदितेत्यत्र परभक्तिस्थाने प्रपदनम् । परज्ञानपरमभक्ती देहसम्बन्धवेलायामुपासकस्योपायकोटिनिविष्टे । प्रपन्नस्य तु ते उपेयकोटिघटिते । अतः परज्ञान प्रार्थितम् 'तेषाम्' इत्यादिना । अथ परमभक्तिप्रार्थनं 'पुरुषस्स परः' इत्यादिना, इति च व्याचख्युः । 'पुरुषस्स पर' इत्यत्र भक्त्येति तृतीयायाः परज्ञानपरमभक्तिदानसंकल्परूपव्यापारवत्कारणत्वार्थकतया परमभक्तिर्विवक्षिता इति व्यासार्याशयः । यद्वा 'भक्त्या लभ्यः' इत्यत्र भक्तिशब्द एव परमभक्तिपरः । तृतीयार्थे प्राप्तिसंकल्प एव विवक्षितः' अतः स्थानत्रयोदिता परभक्तिः फलभूता परमभक्तिरेव । परमभक्तिमभिप्रेत्य परभक्तिशब्दो वेदार्थ-

भावप्रकाशः

संग्रहेऽपि भगवता प्रयुक्तः 'एवंभूतपरभक्तिरूपज्ञानविशेषस्योत्पादकः पूर्वोक्ताहरहरुपचीयमानज्ञानपूर्वककर्मानुगृहीतभक्तियोग एव' इत्यत्र। अत्र तात्पर्यदीपिका ;—' परभक्तिरूपज्ञानविशेषस्येति ;—परज्ञाना-त्पूर्वभाविनी परभक्तिर्न विवक्षिता परमभक्तिरेवाभिप्रेता' इति 'भक्ति पर्वसु निरन्तरानुबुभूषारूपपरमभक्तिरेव परा काष्ठा' सैव परभक्त्यपेक्षया प्राप्तिसमयाव्यहितपूर्ववृत्तिः प्रीत्यादिद्वारा प्राप्तिं प्रति कारणम्—

'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।

इत्यत्र परभक्तेः परज्ञानादिदाने प्रीतेर्द्वारत्वोक्तिवत्। 'भक्त्या मामभि-जानाति' इत्यतः परम् ;—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥

इत्यत्र प्राप्तिं प्रत्यपि प्रीतेः द्वारत्वोक्तेः। तथा च भाष्यम् ;—'यस्य तु मय्यतिमात्रा प्रीतिर्वर्तते ममापि तस्मिन् अतिमात्रा प्रीतिर्भवति 'तद्वियोगमसहमानोऽहमेव तं मां प्रापयामि ; अतस्सत्यमेव प्रतिज्ञातम् 'मामेवैष्यसि' इति। एवं वर्तमानस्य स्वप्राप्तौ स्वप्रीतिलक्षणद्वारमु-पक्षिप्योपच्छन्दनशङ्काऽपाक्रियते 'प्रियोसि मे' इत्यनेन इत्याह ;—'यतस्त्वमित्यादिना' इति तात्पर्यचन्द्रिका च। एवं च 'मन्मना' इति नवमान्तिमश्लोके 'मत्परायण' इत्यत्र 'अहमेव परमयनं यस्यासौ मत्परायणः। मया विना आत्मधारणासंभावनया मदाश्रय इत्यर्थः। एवमात्मानं युक्त्वा मत्परायणस्त्वमेवमनवधिकातिशयप्रीत्या मदनुभवसमर्थं मनः प्राप्य मामेवैष्यसि' इति भाष्येऽपि प्रीतिद्वारिकैव प्राप्तिर्विवक्षिता। एषैव भक्तेः पराकाष्ठाप्राप्तेरव्यवहितपूर्वभाविनीति फलाभिलाषज्ञापनार्थो मत्परायणशब्द इत्यभिप्रायः' इति तात्पर्य-

भावप्रकाशः

चन्द्रिकायामपि भक्तेः परा काष्ठा इत्यनेन परज्ञानादिव्यवहिता परभक्तिर्नात्र विवक्षिता । किं तु स्वोत्तरभक्तिपर्वव्यवधानरहिता परमभक्तिरेव प्रीतिद्वारा प्राप्तिहेतुर्विवक्षिता इति बोधितम् ॥

'स्वे स्वे कर्मणि' इत्येतत्तात्पर्यचन्द्रिकायां 'समोऽहम्' 'मां हि पार्थ' इत्यादि तात्पर्यमपि व्यक्तीकृतम् । तेनानुपायभूता (ना. भा.) पूर्वपक्षिसम्मता भक्तिर्गीतायां न विवक्षितेति आचार्यपादैरेव निर्णीतं भवति ॥

अतः 'पुरुषस्स परः पार्थ भक्त्या लभ्यः' इत्यादौ तृतीया व्यापारवत्कारणत्वरूपकरणत्वार्थिकैवेतिभगवत्सम्मतमिति सिद्धम् ॥

एवं चोक्तकरणत्वफलत्वे 'प्रत्यक्षावगमं धर्म्यम्' इत्यादि गीतायां विवक्षिते । तत्र मुण्डकोपनिषदि—

पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ।

इति 'नायमात्मा' इति श्रुत्यव्यवहितपूर्वश्रुतिः भक्तिगतफलत्वाकारपरा । वेदार्थसङ्ग्रहान्ते भक्तिगतोक्तकरणत्वपरतया व्यवस्थापितायाः कठोपनिषदि 'न संदृशे तिष्ठति रूपमस्य—हृदा मनीषा' इत्यादि श्रुतेरनन्तरम् 'यदा सर्वे प्रमुच्यन्ते कामाः—अत्र ब्रह्म समश्नुते' इति श्रुतिरपि (श्री) भक्तिगतफलत्वाकारपरा । एतदेवाभिप्रेत्य (वे. सं.)

'नायमात्मा प्रवचनेन' इति श्रुतेरपि 'भक्तिरूपानुध्यानेनैव लभ्यते न केवलवेदनमात्रेण; न मेधया इति केवलस्य निषिद्धत्वात् । एतदुक्तं भवति ;—यो मुमुक्षुः वेदान्तविहितवेदनरूपध्यानादिनिष्ठः ; यदा तस्य तस्मिन्नेवानुध्याने अनवधिकातिशया प्रीतिर्जायते तदैव तेन लभ्यते परमपुरुष इति' इत्यादिविवरणे साधनत्वाकारवत् फलत्वाकारोऽपि प्रदर्शितः । अनुध्यानशब्दस्य समाधिरर्थः । 'तस्यैव उपेयविरोधिनिरासकत्वम्' इति पूर्वमेव व्यासार्यैरुक्तम् ॥

**भावप्रकाशः**

श्रुतौ 'यमेव' इति यच्छब्दार्थः यो मुमुक्षुः इत्यादिना दर्शितः। 'उपासते पुरुषं ये ह्यकामाः' इति मुण्डक पूर्वश्रुतौ अकामाः उपासते इति पदद्वयार्थः मुमुक्षुः ध्यानादिनिष्ठः इत्युक्तः। 'पर्याप्तकामस्य कृतात्मनः' इति पूर्व श्रुतिमभिप्रेत्य तस्मिन्नेव ध्याने अनवधिकातिशया प्रीतिर्जायते इत्युक्तम्। पर्याप्ते—'आनन्दरूपममृतं यद्विभाति' इति पूर्वोक्तनिरतिशयानन्दस्वरूपे कामो यस्येति पर्याप्तकामः। तत्रैव कृत आत्मा मनो यस्य सः कृतात्मा इत्यर्थः। स्मर्यमाणात्यर्थप्रियत्वेनैव ध्यानस्य प्रीतिविषयत्वात्। 'सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम्' (श. दी.) इति सबीजसमाधिप्रदर्शनेन 'पर्याप्तकामस्य' इत्यादिकं निर्बीजसमाधिविषयमिति दर्शितम्॥

एतेन यमेव इति श्रुतिघटकयच्छब्दस्य पूर्वश्रुत्युक्त एवार्थ इति निर्धारितं भवति। एतेन 'यमेव—साधनान्तरविरहितमेव' इति (नायमा—भाष्य) विवरणमयुक्तमिति सिद्धम्॥

'अनुध्यानेनैव लभ्यते' इत्यत्र समाधिपरानुध्यानशब्दोत्तरतृतीयया साधनत्वाकारः प्रदर्शितः। यो मुमुक्षुः वेदान्तविहितध्यानादिनिष्ठः इत्यनेन वेदान्तेषु मोक्षार्थतयैव ध्यानस्य विधानम् न तु स्वयंप्रयोजनतया; 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इत्यत्र आदिपदार्थफलस्य विद्याभिन्नस्यैवोक्तेः। 'विकल्पोऽविशिष्टफलत्वात्' 'पुरुषार्थोऽतः' 'एवं मुक्तिफलानियमः' 'इत्यत्रापि तथैवोक्तेः' 'ओमित्येवात्मानं ध्यायथ' इत्यादिश्रुतिषु विद्यायाः फलत्वानुक्तेः तद्भिन्नस्य फलतोक्तेश्चेति दर्शितम्॥

'यदा तस्य' इत्यादि परमपुरुष इत्यन्तम् अनुध्यानशब्दार्थसमाधिभक्तित्वाकारप्रदर्शनम्। तदैव तेनेत्यादि 'इहैव सर्वे प्रविली-

## भावप्रकाशः

यन्ति कामाः' इति श्रुतिविवरणं भक्तेः फलत्वाकारप्रदर्शनपरम् । भक्तेर्वरणीयताहेतुत्वेन वरणद्वारा लाभहेतुत्ववरणप्रकारयोः प्रदर्शनाय 'यथोक्तम्' इत्यादि 'पुरुषस्स परः' 'भक्त्या त्वनन्यया' 'भक्त्या मामभिजानाति' इति गीतावचनान्युदाहृत्य भक्तिरपि निरतिशयप्रियानन्यप्रयोजनस्वेतरवैतृष्ण्यावहज्ञानविशेष एवेति' इति फलत्वाकारमेवोक्त्वा 'इहैव सर्वे प्रविलीयन्ति कामाः' इति श्रुत्यर्थकथनेन 'यमेव' इत्यत्र यच्छब्दार्थं परिसमाप्य 'तद्युक्त एव तेन परेणात्मना वरणीयो भवतीति तेन लभ्य इति श्रुत्यर्थः' इत्युपसंहारेण 'एष वृणुते तेन लभ्यः' इति श्रुतिवाक्यस्य साधनत्वाकारपरत्वं प्रदर्शितम् ॥

अत्र तात्पर्यदीपिका— उपासनादिविधायकवाक्याविरोधाय केवलश्रवणादिनिषेध इत्यवगम्यते इत्यभिप्रायेण वेदान्तविहितेत्युक्तम् । 'यदा तस्येति' ध्येयस्य निरतिशयत्वात् ध्याने प्रीतिः ध्यानदशायां प्रीतिः ध्यानस्य प्रीतिरूपत्वमुक्तं भवति इति ॥

अत्र 'नायमात्मा' इति पूर्वार्धे भक्तिरूपतापन्नस्यापि लाभहेतुत्वं निषिध्यते इतिवदतां मतं उपासनादिविधायिवाक्यविरोधादयुक्तमिति व्यक्तमुक्तम् । एवं ;—एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि इति श्रीभाष्यश्रुतप्रकाशिकायामपि;—एवमिति—अनेन श्रवणादीनां मुक्त्युपायत्वानिषेधान्नोपासनस्य मोक्षोपायत्वमिति शङ्काव्युदासश्च भवति इत्यत्र केषांचित् (व. भू. मी. भा ) (ना. आ. भा.) शङ्कैव व्युदस्तेति व्यक्तम् ॥

एवम् अत्र समाधिरूपत्वोपपादनेन श्रुतिघटकयच्छब्दस्समाधिरूपभक्तिमदर्थक इति निर्णीतं भवति ॥

भावप्रकाशः

एतेन 'यदा तस्येत्यादिः तदैव तेन लभ्यते परमपुरुष इत्यन्ता भगवत्सूक्तिः—वरणवाचिपदाभावेन 'वृणुते तेन लभ्यः' इत्येतद्घटक-लभ्यपदार्थलाभपरत्वाभावसिद्ध्या श्रुतौ तत्कालवाचिपदाभावेऽपि यदा तदेत्युक्त्या—

'भक्तिः परेशानुभवो विरक्ति-

रन्यत्र चैष त्रिक एककालः। (भाग—११–२–४२)

इत्युक्त समाधिकालिकलाभपरत्वेन श्रुत्यघटकपूर्वस्ववाक्यघटकानुध्यान-शब्दार्थव्यक्तीकरणपरत्वसिद्ध्या 'यदा सर्वे प्रमुच्यन्ते—अत्र ब्रह्म समश्नुते' (क—उ) इति श्रुतिसिद्धब्रह्मानुभवस्यैव 'तद्विज्ञानेन परि-पश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति' (मुं.) इति 'भिद्यते हृदयग्रन्थिः' इति श्रुतिपूर्वश्रुतौ पूर्वमत्रैव व्यक्तमुक्त्या तच्छ्रुति-मभिप्रेत्य प्रवृत्ततया न स्वयंप्रयोजनतामात्रपरा; किं तु समाधिरूप-भगवल्लाभपरत्वेन श्रुतिघटकयच्छब्दविवरणपरेति व्यासार्यैर्दर्शितम्।

प्रोक्तेन भक्तियोगेन भजतो मा सकृन्मुने।

कामा हृदीया नश्यन्ति सर्वे मयि हृदि स्थिते॥ (भाग.)

११-३०-२९१॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।

क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि॥ ३०॥

इत्यादौ श्रुतीनां भक्तिपरत्वं स्फुटम्। वरणस्य पूर्वमनुक्त्या 'यथोक्तम्' इत्याद्युत्तरग्रन्थः प्रमाणतो वरणतन्मूलकलाभनिरूपणपर इत्याभिप्रेत्य 'एवं वरणीयत्वहेतुगुण उक्तः तत्र प्रमाणमाह;—यथोक्तमिति' इति तात्पर्यदीपिका।

अत्र 'परमपुरुषवरणीयताहेतुगुणविशेष' इति (श्री. भा.) 'वरणीयताहेतुभूतं स्मृतिसन्तानमेव' (गी. भा. ७ अ.) इति च

भावप्रकाशः

भगवत्सूक्तिमूलम् । एतेन भगवत्स्वातन्त्र्यमूलकचेतनव्यापाराहेतुकवरण-पक्षश्शिक्षितः ॥

अत्र (वे. सं.) उदाहृतवचनमध्ये 'भक्त्या मामभिजानाति' इति वचने तात्पर्यदीपिकायां च परभक्तेः परज्ञाने तस्य च परमभक्तौ हेतुत्वं स्फुटम् ॥

एतेन वरणपदार्थपरज्ञानादौ श्रुतिघटकयच्छब्दार्थपरभक्तिर्हेतुः इति गीताप्रमाणेन सिद्ध्यतीति व्यक्तमुक्तं भवति । तेन परभक्ति-र्वरणीयाधिकारविशेषणभूतैव न तु हेतुः इति वदतां मतं शिक्षितम् ॥

एवम् 'पुरुषस्स परः' इत्येतदुत्तरमर्चिरादिगतिद्वारकप्राप्त्य-पुनरावृत्तिप्रतिपादनेन श्रुतावपि 'लभ्यः' इत्यत्र लाभः गत्यनन्तर-कालिक एव विवक्षित इति व्यञ्जितम् । 'चतुर्विधा भजन्ते मां जनास्सु-कृतिनः' इत्यनन्तरम् 'तेषां ज्ञानी–विशिष्यते' इत्याद्युक्ताधिकारिण एव नवमे 'महात्मानस्तु' 'सततं–उपासते' इत्याद्यभिधाय 'अनन्याः—योगक्षेमं वहाम्यहम्' इत्यत्र भक्तेस्सङ्कल्पद्वारकः 'नित्याभियुक्तानाम्' इत्याशंसाविषयत्वेनोक्तः उपासनव्यतिरिक्तः योग एव लाभः फलमितिक्षेमश्चापुनरावृत्तिरूपोऽभिहित इत्यतोऽष्ट-मोक्तः गत्यनन्तरकालिक एव लाभ इति निर्णीयते। एतदेवाभिप्रेत्य 'भक्त्या मामभिजानाति' इति श्लोकेऽपि विशते इति प्रकृतिबन्धविनि-र्मुक्तस्यानुभव उच्यते' इति (वे. सं.) व्यासार्यैरुक्तम् ।

विजृम्भितमिदं भूतैः पुरुषार्थचतुष्टयम् ।
सङ्कल्पो वैष्णवस्तस्य विजृम्भाहेतुरुच्यते ॥

(अ. बु. सं. १३ अ.)

इति (२१) उदाहृतवचनेषु धर्मसाध्यज्ञानस्य वैष्णवसङ्कल्पद्वारकमेव

## भावप्रकाशः

पुरुषेणार्थ्यमानं मुक्तिरूपं फलमितिस्फुटम् । एतेन भक्तेरभिनिवेश-रूपत्वेऽपि अदृष्टद्वारकमेव लाभहेतुत्वमितिनिर्णयेन ' यमेवैष वृणुते तेन लभ्यः ' इत्यत्र प्राप्तिसमयाव्यवहितपूर्ववर्तित्वनियम एव भक्तेर्विवक्षितः (ना. भा.) इत्युक्तिरपि शिक्षिता ।

(१-१-१) श्रुतप्रकाशिकायाम् ' भक्त्या माम् ' इति वचने भक्तिजन्यज्ञानस्यैवाव्यवहितोपायत्वमवगम्यते न तु भक्तेरिति शङ्का च ' नाहं वेदैः ' इत्यनेन परिहृता भवति ' इत्युपक्रम्य ' भक्त्या माम् ' इति वचनेऽपि तच्छब्दपरामृष्टाया भक्तेरेव प्राप्त्युपायत्वमवगम्यते ' अतश्च भक्तिरेवाव्यवहितोपायः ' ' पुरुषस्स परः पार्थ ' इत्यत्र ' भक्त्या लभ्यः ' इति भक्तेः प्राप्तिसाधनत्वं स्वरसतोऽवगम्यते, इत्यत्र ' भक्तेरेव ' ' भक्तिरेव ' इत्यत्र एवकारेण परसङ्कल्पस्याव्यवहितोपायत्वं न व्यवच्छिद्यते ; किं तु भक्तिजन्यज्ञानस्यैव परसम्मतस्य ; अव्यवहितत्वमपि परसम्मतेन ज्ञानव्यवधानेन रहितत्वम् न तु परसङ्कल्पव्यवधानराहित्यम् उदाहृतप्रमाणविरोधात् आवृत्त्यधिकरणश्रुतप्रकाशिकाविरोधात् पूर्वपक्षानुगुणार्थविवक्षाया उचितत्वात् तदननुगुणार्थविवक्षाया अनुचितत्वाच्च ।

एवं च ' भक्त्या माम् ' इति वचने तच्छब्दपरामृष्टा परमभक्तिरेवेति तस्या एव ज्ञानव्यवधानविरहेण प्राप्तिहेतुत्वं निर्धारितम् । ' यमेवैष वृणुते ' इत्यत्र यच्छब्दाभिप्रेता भक्तिः वरणीयताहेतुः परभक्तिरेवेति तस्याः प्राप्तिसमयाव्यवहितपूर्ववर्तित्वं क्वाप्यनुक्तं कथमुत्प्रेक्ष्यते ? ।

अत्र परभक्तेः ' वृणुते ' इत्यत्रोक्तसङ्कल्पतद्विषयपरज्ञानपरमभक्त्येतदुभयद्वारकप्राप्तिहेतुत्वम् ; परमभक्तेस्तु सङ्कल्पमात्रद्वारकं तत् । अतः ' यमेवैष वृणुते तेन लभ्यः ' इत्यत्र भक्तेर्वर-

भावप्रकाश

णीयताहेतुभूतायाः प्राप्तिसमयाव्यवहितपूर्वत्वं न भगवतोऽभिमतम् । न वा 'यदा तस्य+तदैव तेन लभ्यते' इति सूक्तिः 'वृणुते तेन लभ्यः' इति श्रुतिविवरणपरतयाऽभिप्रेता ; किं तु यच्छब्दार्थानुध्यानकालिकलाभपरतयैव यदा तदा इत्येककालप्रतिपादनात् । भगवत्सूक्तौ 'तद्युक्त एव' इत्यादि तेन लभ्यःइत्यन्तमेव 'एष वृणुते तेन लभ्यः' इति श्रुतिखण्डविवरणरूपम् इति, इति श्रुत्यर्थः इत्युपसंहारेणैव भगवता स्फुटं बोधितम् ।

एतेन यदा तस्येत्यादि तदैव तेन लभ्यते इत्यन्तभगवत्सूक्तेः 'एष वृणुते तेन लभ्यः' इति श्रुतिविवरणप्राप्तिसमयादव्यवहितपूर्वत्वस्वयंप्रयोजनत्वपरत्वोत्प्रेक्षणं केषांचिदयुक्तमिति सिद्धम् ।

एवं कैश्चिदुत्प्रेक्षितदिशा श्रुतौ पूर्वार्धे भक्तिरूपापन्नानुध्यानस्य लाभकरणतानिषेध उत्तरार्धे अहेतुकवरणं च विवक्षितमिति न शक्यते वक्तुमिति स्फुटम् । 'भक्तिरूपानुध्यानेनैव लभ्यते न केवलवेदन मात्रेण' इति भगवता सिद्धान्तितत्वात् ।

एवं मोक्षार्थतया ध्यानादौ प्रवृत्तिः न तु स्वयंप्रयोजनकैङ्कर्यतया अधिकारपौष्कल्यार्थतया वा । भक्तिरपि परज्ञानादौ वरणरूपादृष्टद्वारा हेतुः न तु दृष्टद्वारा इति च सिद्धम् ।

'परमतः' इत्यत्र एतच्छब्देन 'अपिसंराधने' इति सूत्रसिद्धभक्तिजन्यप्रीतिमतः परामर्शेन तस्यैव 'उपपत्तेश्च' इति सूत्रे प्राप्यभूतस्य प्रापकत्वोपपादनेन 'फलमत' इत्यत्रैतच्छब्देनापि पूर्वोक्तार्थपरामर्शेन च अदृष्टद्वारकत्वस्य शब्दत एव लाभ इति । पूर्वमेव निरूपितम् ।

अत्रैव (वे. सं.) 'अत्रेदं सर्वशास्त्रहृदयम्' इत्युपक्रम्य

### भावप्रकाशः

'आत्मानं प्रेरितारं चान्तर्यामिणं पृथक् मत्वा ततः—पृथक्त्वज्ञानाद्धेतोः तेन—परमात्मना जुष्टः अमृतत्वमेतीति साक्षादमृतत्वसाधनमात्मनो नियन्तुश्च पृथग्भावज्ञानमित्यवगम्यते' इति पृथगात्मानमितिश्रुतिर्व्याख्याता। जुष्टः—जुषीप्रीतिसेवनयोः; अनुगृहीत इत्यर्थः' इति तात्पर्यदीपिका।

एवं च पूर्वमेवादृष्टद्वारकहेतुत्वस्य श्रुतिसिद्धत्वोपपादने अत्र दृष्टद्वारकत्वं स्वयंप्रयोजनत्वमात्रं च कथमुत्प्रेक्ष्यते?

एवमत्रैव पूर्वम् 'एतेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यते' इत्यादिसूक्तिविवरणावसरे व्यासार्यैः प्रपत्तिशब्दस्य स्वतन्त्राङ्गप्रपत्तिसाधारण्यं 'तमेवं विद्वान्' इत्यत्र विदिधातोरुपासनप्रपदनसाधारण्यं चोक्तम्। इत्थं सति भक्तिमन्तरा स्वतन्त्रप्रपत्त्यैव शक्तानामपि झडितिमुक्तिसिद्धौ भक्तौ कोपि न प्रयतेतेति 'एतैरुपायैर्यतते यस्तु विद्वान्' (मुं) इति श्रुत्युक्ताधिकारी नैव लभ्यते इति 'यो मुमुक्षुर्वेदान्तविहितवेदनरूपध्यानादिनिष्ठः' इत्यत्रोक्तः मोक्षार्थं ध्यानाद्यनुष्ठाता न प्रसिध्यतीत्याक्षेपः 'तदैव तेन लभ्यते' 'भक्तिरपि निरतिशयप्रियानन्यप्रयोजनस्वेतरवैतृष्ण्यावहज्ञानविशेषः (वे. सं.) इत्यत्र फलत्वाकारप्रदर्शनेन भजनकालिकविपुलसुखेच्छया झडिति मुक्तिरूप भगवत्प्राप्तिमनपेक्ष्य स्वतन्त्रप्रपत्तिं परित्यज्य भक्तौ केचित्प्रवर्तन्त इति परिहृतो भवति।

एतदेवाभिप्रेत्य 'स्वेतरवैतृष्ण्यावहेति भक्तेः प्रियतमत्वातिशयात् भगवत्प्राप्तावपि नैरपेक्ष्यं भवतीति तात्पर्यदीपिका। एवं भक्तिरपीति निरतिशयप्रियत्वादनन्यप्रयोजनत्वम्। अनेन ऐश्वर्यार्थभक्तियोगो व्यावृत्तः इति व्यासार्योक्त्या मोक्षार्थसाधनभक्तिनिष्ठस्य

भावप्रकाशः

'यो मुमुक्षुः' इत्याद्यत्रत्यमूलसूक्तिसिद्धस्य भगवद्व्यतिरिक्तफलार्थित्वविरहेण भगवति निरतिशयप्रीतिरेव न सातिशयप्रीतिरिति निर्धारितं भवति। 'अनन्यचेताः (गी. ८–१४) इति श्लोकभाष्ये 'अहमेव प्राप्यः न मद्भाव ऐश्वर्यादिकः' इति सूक्तावप्ययमर्थः स्फुटः।

एतेन 'प्रियतम एव हि' इति श्रीभाष्यविवरणावसरे 'प्रीतिविषयमात्रस्य न वरणीयत्वम् किंतु स्वयमुपस्थितस्य स्वीकार एव अतस्तद्व्यावृत्त्यर्थं प्रियतम इत्युक्तम्' (१-१-१२ श्रु. प्र.) इत्यत्र मोक्षार्थसाद्विद्यादिसाधनभक्त्यादिनिष्ठो व्यावर्त्यतया विवक्षितः' इति केषांचित् (ना. भा.) भ्रमोऽपोदितः। 'प्रियो हि' इति गीतायाश्श्रीभाष्य उदाहरणेन ब्रह्मव्यतिरिक्तैश्वर्यादीच्छोरेव भगवति निरतिशयप्रीत्यभावस्य बोधनात्। अपवर्गसाधनभूतामिति प्रतीकोपासनव्यवच्छेदः इति (श्रु. प्र.) उक्त्या अपवर्गसाधनभूताम्' इति तत्रत्यश्रीभाष्ये प्रतीकोपासनभिन्नपञ्चाग्निविद्याया अपि विवक्षितत्वेन तन्निष्ठस्य कैवल्यानुभवपर्यन्तं भगवति निरतिशयप्रीत्यभावतात्पर्यकत्वाद्गीतावचनानां कैवल्यानुभवानन्तरं भगवति निरतिशयप्रीतिसंभवेन न गीताविरोध इत्याशयात्।

एतदेवाभिप्रेत्य 'भक्तिरपि' इत्यादि (वे. सं.) विवरणे निरतिशयप्रियत्वेनैश्वर्यार्थभक्तियोगमात्रव्यावृत्त्यभिधानं व्यासार्याणाम्; एवम् 'उपायविधायकवाक्यान्यैककण्ठ्येन योजयति;—तमेव इत्यभिधाय उपायविधायकवाक्याविरोधाय केवलश्रवणादिनिषेध इत्यवगम्यते इत्यभिप्रायेण वेदान्तविहितेत्युक्तम्' इति भक्तिरूपापन्नेनैवानुध्यानेन लभ्यते न केवलवेदनमात्रेण। 'एतदुक्तं भवति;—यो मुमुक्षुः–वेदान्त विहितवेदनरूपध्यानादनिष्ठः यदा तस्य तस्मिन्नेव ध्याने अनवधिकाति-

भावप्रकाशः

शया प्रीतिर्जायते ' इति (वे. सं.) सूक्तिघटकवेदान्तविहितशब्दस्याशयो व्यासार्यैर्वर्णितः। एतदभिप्रायकमेव 'एवं प्रत्यक्षतापन्नामपवर्ग साधनभूतां स्मृतिं विशिनष्टि' (श्री. भा.) इत्यत्र एवमिति—अनेन श्रवणादीनां मुक्त्युपायत्वनिषेधान्नोपासनस्य मुक्तिहेतुत्वमितिशङ्काव्युदासश्च भवति इति व्यासार्यविवरणम्।

एतेन 'उपपत्तेश्च' इति सूत्रे कैश्चिदुत्प्रेक्षितोऽर्थोऽसंगत इति बोधितमिति न तिरोहितं विदुषाम्। अत्र (वे. सं.) 'यदा तस्य' इत्यादिना 'यमेवैष' इत्यत्र यच्छब्दार्थविवरणेन पूर्वनिरूपितदिशा यच्छब्दे ध्यानमात्रं विवक्षितम् न तु श्रवणादिकमिति स्फुटम्।

ननु श्रवणमननयोर्विध्यभावात्कथमुत्सर्गापवादनयः प्रवर्तते ? एवम्; अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा यमेवैष वृणुते तेन लभ्यः, इति श्रीभाष्यसूक्तिः। अस्मिन् वाक्ये श्रवणादीनामनुपायत्वं प्रतीतम्। ध्रुवानुस्मृतिविशेषणत्वेन न किंचित्प्रतिपन्नम्; अतस्तद्व्याचष्टे ;–अनेनेति। केवलश्रवणमनननिदिध्यासनानां–वक्ष्यमाणविशेषविरहितानां–यथा 'न पृथिव्यामग्निश्चेतव्यः, इत्यत्र हिरण्योपधानरहितपृथिव्यां चयनं निषिध्यते न तु पृथिवीमात्रे तद्वदितिभावः इति श्रुतप्रकाशिका। 'न पृथिव्यामग्निश्चेतव्यः नान्तरिक्षे न दिवि' इति वाक्यम् 'अभागिप्रतिषेधाच्च' (१-२-५) अन्त्ययोर्यथोक्तम्' (१८) इति पूर्वपक्षसिद्धान्तजैमिनिसूत्रयोर्विचारितम् तत्र सिद्धान्तसूत्रे ; 'न दिवि' इति हिरण्यं निधाय चेतव्यमित्याकाङ्क्षितत्वादस्य विधेश्शेषः। पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था 'असति प्रसङ्गे प्रतिषेधो नित्यानुवादः' इति शाबरभाष्यम्। 'नान्तरिक्षे न दिवि' इत्यौचित्येन शुद्धपृथिवीनिषेधसमर्थनायैव

**भावप्रकाशः**

यथाऽन्तरिक्षे दिवि वा चयनं न प्रसिद्धं तथा हिरण्यरहितायां पृथिव्यामितिस्तवनम्' इति वार्तिकम्। एवं च श्रवणमननयोर्विध्यभावे वार्तिकोक्तरीत्या केवलध्यानप्रतिषेधसमर्थनार्थत्वमेव तत्प्रतिषेधयोर्वाच्यमिति श्रवणमननसामान्यप्रतिषेध एव वाच्यः न तु केवलश्रवणमननयोरिति केवलश्रवणादीति ग्रन्थसंगतिश्च कथम्? इति चेत्;

उच्यते;—श्रवणमननयोर्विध्यभावेऽपि 'यस्य देवे परा भक्तिः' इति श्रुतिरर्थप्रकाशसामान्ये भक्तिः कारणमिति प्रतिपादयति। अत्र परशब्दप्रयोगात् तरतमभावापन्ना भक्तिस्तादृशार्थप्रकाशं साधयतीति प्रतीयते। एव च श्रवणमननसाध्यार्थप्रकाशं प्रति भक्तेः कारणत्वेन भक्तिरूपतानापन्नयोस्तयोर्लाभं प्रति परम्परया हेतुताप्रतिषेधः भक्तिविधिशेषो भवति। अयमर्थस्सहकार्यन्तरविध्यधिकरणे 'पाण्डित्यं भगवद्भक्तिकृतसत्त्वविशुद्धिकृतम्'। श्रुतिश्च 'यस्य देवे परा भक्तिः' 'नायमात्मा प्रवचनेन' इत्यादिका, इति श्रीभाष्य एव स्फुटः। एतत्स्वारस्यपर्यालोचनायां 'नायमात्मा' इत्याद्युक्तप्रतिषेधः विधेय पाण्डित्यमौनयोरपीति प्रतीयते। मुण्डकोपनिषदि चतुर्मुखाथर्वादि गुरुसम्प्रदायप्रदर्शनपूर्वकमागमोक्तज्ञानरूपापरविद्याया उपक्रमे उक्त्या; एतदनन्तरम् 'एतैरुपायैर्यतते यस्तु विद्वान्' इति प्रयोगविधौ साक्षात्परम्परोपायानां मध्ये मौनस्यापि विवक्षितत्वेन च उक्तदिशा प्रतिषेधविवक्षानिश्चयसंभवात्। एतेन 'वेदान्तविहितध्यानादिनिष्ठः' इत्यत्रादिशब्दार्थः विहितपाण्डित्यादिकमिति सिद्धम्।

ब्रह्मप्राप्त्युपायभूतमपरोक्षज्ञानम्; तच्च भक्तिरूपापन्नम् 'यमेवैष वृणुते तेन लभ्यः' इत्यत्रैव विशेष्यमाणत्वात्। तदुपायश्चागमजन्यज्ञानम् इति (१-२-२३) भाष्योक्त्या पूर्वोपपादितदिशा 'यमे-

**भावप्रकाशः**

वैष वृणुते तेन लभ्यः' इत्यत्र श्रवणमननयोर्विवक्षाया असम्भवेन लाभं प्रति त्रयाणां भक्तित्वेनैकरूपेण हेतुत्वमित्युत्प्रेक्षणं (श्रु. प्र. ता. दी.) केषांचिदयुक्तमिति बोधितम् । 'यमेवैष वृणुते' इत्यत्र यच्छब्दस्य 'तस्मिन्नेव ध्याने अनवधिकातिशया प्रीतिर्जायते' इति (वे. सं) विवरणात् । पूर्वमपि 'भक्तिरूपानुध्यानेनैव लभ्यते' इत्यत्रानुध्यान-त्वस्य लाभहेतुतावच्छेदकत्वोक्तेः; अन्तेऽपि 'ब्रह्मप्राप्त्युपायश्च अनु-ध्यानरूपपरभक्तिरेव' इत्येवोक्तेः; श्रीभाष्ये जिज्ञासाधिकरणेऽपि भक्तित्वातिरिक्तधर्माणां कारणतावच्छेदकताग्राहिकाश्श्रुतीरुदाहृत्य 'एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि' इति 'नायमात्मा' इति श्रुत्यवतारणेन एतच्छ्रुतेरपवर्गोपायभूतस्मृतिगतभक्तित्वाकारपरत्व-निर्णयेन अपवर्गोपायाधिकारिविशेषणभक्तिपरत्वस्य श्रवणादिसाधारण-कारणतावच्छेदकभक्तित्वपरत्वस्य चैतच्छ्रुतेरसम्भवस्य व्यक्तीकरणात् । 'अनन्यचेताः' इति गीतायां स्मृतित्वस्यापि लाभहेतुतावच्छेदकत्वस्य स्फुटत्वात् । 'भक्त्या त्वनन्यया शक्यः' इत्यत्र भक्तित्वस्य ज्ञानादि-त्रयकारणतावच्छेदकत्वं विवक्षितम् तदतिरिक्तधर्मस्य लाभकारणताव-च्छेदकत्वव्यवच्छेदकत्वासम्भवात् । 'भक्त्या मामभिजानाति' इत्यत्र परभक्तिपरज्ञानपरमभक्तिशब्दानां भिन्नधर्मप्रवृत्तिनिमित्तकत्वस्य व्यासा-र्यैरुक्त्या गीतायां तत इत्यस्यावस्थाभेदपरत्वेऽपि विरोधविरहेण त्रय-साधारणैकरूपेण कारणतापरत्वनिश्चयासम्भवात् । व्यासार्यैरपि (१-१-१ श्रु. प्र.) 'वरणीयताहेतुगुणविशेषविरहिणाम्' इत्यनेन यमेष वृणुते तेन लभ्य इत्यभिमतविशेषोपायकथनं फलितम्' इत्युपक्रम्य 'भक्तेर्ज्ञानहेतुतापरश्रुतिस्मृतीः 'जायमानं हि पुरुषम्' इत्यादिवचनं चोदाहृत्य तत्त्वार्थज्ञानस्य भक्तिप्रीतभगवत्कटाक्षसापेक्षत्वं

भावप्रकाशः

ज्ञायते, इत्यभिधानेन 'जायमानम्' इति वचनस्य निर्हेतुककटाक्षपरत्वं निरस्य श्रवणवेळायामेव पदार्थतयाऽवगम्यमानेषु परमात्मगुणादिष्वनुकूलबुद्धिगोचरत्वाद्विद्याभक्तिशब्दयोः तेन सम्यग्वाक्यार्थनिर्णयलाभः । 'न चैषा साक्षात्कारकल्पनिरन्तरध्यानरूपा भक्तिः' इत्युक्त्वा ज्ञानमुक्तिजनकताच्छेदकभक्तिरूपयोर्भेदः । मोक्षजनकभक्तौ निरतिशयप्रीतिरूपता ज्ञानहेतुभक्तौ प्रीतिरूपत्वमात्रम् नतु निरतिशयरूपत्वमिति च दर्शितं भवति । अत्रेदं तत्वम्—लघुसिद्धान्ते एवमिति—'अनेन श्रवणादीनां मुक्त्युपायत्वनिषेधान्नोपासनस्य मुक्त्युपायत्वमिति शङ्काप्युदासश्च भवति' (श्रु. प्र.) इत्यस्यायमाशयः 'नायमात्मा' इति श्रुतिः पूर्वं परत्र च ज्ञानोत्तरं ज्ञानवतः ज्ञानेन मुक्तरभिधानेन त्रयाणां परम्परासाधारणोपायतानिषेधो न सम्भवतीति श्रवणमननयोः करणत्वमप्रसक्तमिति न तन्निषेधसभव इति त्रयाणां सामान्यतो निषेधो न संभवतीति केवलश्रवणमनननिदिध्यासनानां वक्ष्यमाणविशेषविरहितानामित्यर्थः' (श्रु. प्र.) इत्यत्र अनवधिकातिशयभक्तित्वरहितानामित्यर्थः 'आत्मप्राप्त्यनुपायत्वमुक्त्वा' (श्री. भा.) इत्यत्र प्रतिषेद्धव्यमुपायत्वं 'अपवर्गसाधनभूतां स्मृतिम्' इति पूर्ववाक्य इव प्रीतिरूपतामात्रापन्नश्रवणमननव्यावृत्तं 'नायमात्मा' इति श्रुतिपूर्वार्धघटकतृतीयार्थभूतं करणत्वं विवक्षितम् । अयमाशयः—'एतैरुपायैर्यतते यस्तु विद्वान्' इत्युत्तरमन्त्रे बहुवचनेन साक्षात्परम्परासाधारणोपायताश्रयविवक्षाया आवश्यकत्वेऽपि 'अथ परा यया तदक्षरमधिगम्यते' इत्युपक्रमोक्तपरविद्याहेतुतावच्छेदकनिष्कर्षणपूर्वकतद्धेतुतानिर्णयार्थं प्रवृत्तायां 'नायमात्मा प्रवचनेन लभ्यः' इति श्रुतौ उपक्रमोक्तमेव हेतुत्वं विवक्षितम् । एवं च 'नान्तरिक्षे न दिवि' इति प्रतिषेधतुल्य एव

**भावप्रकाशः**

नायमात्मा प्रवचनेन—न बहुना श्रुतेन ' इति प्रतिषेधः ; उपक्रमोक्त-हेतुतायाश्श्रवणमननयोः प्रसङ्गाभावत् वक्ष्यमाणनिरतिशयप्रीतित्वा-संभवाच्च । ध्याने तु पूर्वमेवोक्तहेतुत्वं श्रुत्यैव प्रतिपादितम् । अतो न मेधया इति प्रतिषेधः उत्तरार्धोक्तोपासनगतानिरतिशयप्रीतित्वविधि-शेषभूतः ' अपवर्गसाधनभूतां स्मृतिं विशिनष्टि ' इति श्रीभाष्यार्थनि-ष्कर्षः ' न मेधया ' इति प्रतिषेधमात्रतात्पर्यनिष्कर्षणेन संपद्यते इत्यभि-प्रेत्य ' न पृथिव्यामग्निश्चेतव्य ' इति वाक्यमात्रं ' न मेधया ' इत्ये-तदर्थनिर्णायकमुपात्त व्यासार्यैः इति । एतेन प्रवचनं भक्तिदशापन्नध्रुवानु-स्मृतिः इति वदद्भिः कैश्चित् (व. भू. मी. भा.) ध्रुवानुस्मृतेर्भक्तिरूपत्व-विधानपरत्वे मेधाश्रुतशब्दयोर्वैयर्थ्यापत्तिः इत्युक्तं परास्तम् । अश्रुतस्य प्रियतमः इति विशेषणस्य कल्पनागौरवदूषणमपि श्रौतध्यानस्य समाधित्वोपादनेन गीताद्यनुसारेण च भगवतैव परिहृतम् । अत एवै-तदनुयायिनोऽपि भाष्यटीकोक्तमेवैतदर्थं युक्तमपि निश्चित्य स्वोत्प्रेक्षि-तार्थबाधकं मन्यमानाः अन्यत्र भाष्याद्युक्तं कदर्थयन्तोऽपि ' अपवर्ग साधनभूतां स्मृतिं विशिनष्टि ' ' न पृथिव्यामग्निश्चेतव्य ' इत्यादि लघुसिद्धान्तभाष्यटीकावाक्ये अन्वारुह्यवादावाहुश्चरमश्लोकटिप्पणीकाराः ; अर्वाचीनाः केचित् अतदनुयायिनोऽपि (व. भू. मी. भा.) एकत्र श्रीभाष्यादिकं दूषयित्वा(ना. आ. भा.) अन्यत्र कदर्थयतां मतमनुसरन्तः श्रीभाष्यादिकं (सि. ता. टि.) (श्रु. प्र. ता. दी.) (गी. अ. त. प्र.) विदुषां हासास्पदं कदर्थयन्ति । अतः मोक्षार्थसाधनभक्तिनिष्ठ एव भगवति निरतिशयप्रीतिमान् श्रुतिस्मृतिभाष्यादौ विवक्षितः । (भ. गी.) ' तेषां सततयुक्तानाम् ' इत्यादिकं परभक्तिव्यतिरिक्तमोक्षान्तफलेच्छापरमुक्त-मेवार्थं द्रढयति गीतानुसारात् ;

पूर्वकर्मप्रयत्नं च संस्कारं चाप्यपेक्ष्य तु ।

भावप्रकाशः

ईश्वरः कारयेत्सर्वं तच्चेश्वरकृतं मतम् ॥

अनादित्वाददोषश्च पूर्णशक्तित्वतो हरेः ॥ (२-३-४२) (आ. ती. सू. भा.)

इत्यादि (आ. ती. भा. २-१-३६) वचन (२-१-३४, २-३-४१ न्यायानुगृहीतायाः 'एष एव साधु कर्म कारयति' (कौ) इत्यादि-श्रुतेश्चैकार्थ्येन 'यमेवैष वृणुते इत्यत्र वरणं तत्पूर्वश्रुत्युक्तोपासनानन्तर-विशेषोपकाराणां साधनानुष्ठापनेच्छया संपादनसङ्कल्परूपमिति पूर्वमेव निरूपितम्। तेन एतच्छ्रुतिं सामान्योपकारं चावलम्ब्य दत्तप्रतिदानरूप-तया भक्तेर्व्याजत्वमपि नास्तीति (वि. मू. मी. भा.) उक्तिः लोकवेदयोः उपायदानव्यवहारस्य भङ्गप्रसङ्गाच्चानुपादेया ॥

एतेन—' वरणप्रकारः—साधनगतिप्रदानं हि वरणकृत्यम् ! अतो वरणफलत्वात्तत्प्रकार इति भावः। भगवद्वरणं न प्राप्तिमात्रोप-युक्तम् अपि तु साधनानिष्पत्तावपि इति प्रामाणिक श्रु. प्र.) व्याख्यातृ-प्राच्यचम्पकेशाचर्योक्तिं लिखद्भिरपि कैश्चित् (श्रु. प्र. ता. दी.) एकत्र वरणं नाम 'अर्चकपराधीनाखिलात्मस्थितिः' इत्युक्तात्यन्तपारतन्त्र्य-प्रतिसंबन्धित्वेन चेतनस्य प्रार्थनम्। तस्य प्रकारो नाम चेतनयत्ननैर-पेक्ष्येण भगवतैव निष्पाद्यत्वं वा प्रतिबन्धकाभावरूपव्याजमात्रसापेक्षत्वं वा इति; अन्यत्र 'वरणस्वरूपमाचार्यमुखेनाष्टाक्षरमङ्गलसूत्रबन्धद्वारा संबन्धसंपादनेनात्यन्तपरतन्त्रतया चेतनस्य स्वात्मदानरूपमिति संप्रदाय सिद्धम्' इति चोक्तं श्रुतिपीडनमेवेति व्यक्तं विदुषामिति अनादरणीयं सद्भिरिति सिद्धम् ॥

अतो 'नायमात्मा' इति श्रुतौ स्वयंप्रयोजनभूता भक्तिर्न विव-क्षिता ; अपितु निरतिशयानन्दवस्त्ववगाहितया फलभूता मोक्षार्थमनुष्ठेया

## भावप्रकाशः

मोक्षसाधनभूता भक्तिरेव इत्येव युक्तम् । ब्रह्मतज्ज्ञानयोरुभयोरपि यथा फलत्वं तथा साधनत्वमपि साध्यधर्मसंबन्धमन्तरा ब्रह्मण उभयोर्निर्वोढा-संभवात् ।

एतेनान्यथासिद्धया न साधनता ज्ञानस्य, किंतु अन्यथासिद्ध-नियतपूर्ववर्तित्वरूपं व्याजत्वमेव । राज्यार्थे जम्बीरफलं दद्यात्—इत्यत्र तथा दर्शनात्, (च-श्लो-टि) इति शङ्का परास्ता । परभक्तेः अनन्यथासिद्ध-त्वस्य यत्रयत्र प्रामाणिकानां न कारणत्वव्यवहारस्तावद्भेदकूटवत्त्वस्य नैयायिकसम्मतस्य **सिद्धान्तसिद्धाञ्जने अनन्तार्यै**रभ्युपगतस्य **श्री-भाष्यकारादिभिः** श्रुत्यादिषु कारणत्वेन व्यवहारविषयत्वेन स्थापितस्य प्रत्याख्यानासंभवात् ।

किञ्च ज्ञानस्य फलत्वमपि विषयानुकूल्यनिबन्धनमेव । ब्रह्मणः फलत्वं यदि न स्यात् तदा ज्ञानस्य न सिध्यति । एवं च ज्ञानस्यान्य-सापेक्षफलत्वेऽपि फलत्वं यथा अनौपचारिकमभ्युपगम्यते तथा पूर्वमुप-पादितदिशा निर्हेतुककृपामूलकत्वेऽपि मुक्तिहेतुज्ञानस्य भक्तिरूपस्य मधुर-भेषजनयेन मुक्तिसाधनत्वमप्यनौपचारिकमप्रत्याख्येयम् । स्पष्टं चेदमुपाय-विभागाधिकारे ।

किञ्च 'अपूर्व(स्वर्ग)फलयोरेकैव भाव्यता साध्यविवृद्धिः' इति (प्र-पं. वि-क) प्राभाकराः । तद्वत् यागस्वर्गयोः भक्तिमुक्त्योरुभयोरपि फलत्वमेव । न तु यागभक्त्योरपि साधनत्वमिति वदन्तोऽपि 'एष पन्थाः एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' 'फलमत उपपत्तेः' 'श्रुतत्वाच्च' 'पुरुषा-र्थोऽतश्शब्दादिति **बादरायणः**' इत्यादि श्रुतिसूत्रानुयायिवृत्तिकारविरोधिन इति श्रीभाष्यकृद्भिरपूर्ववादनिरसनप्रक्रियया निर्धारितं भवति । तथाहि — भावार्थस्य कर्मणोऽपि कृतिसाध्यत्वमस्ति स्वर्गादेरिष्टत्वमस्ति इति तदु-

## भावप्रकाशः

भयव्यावर्तकं कृत्युद्देश्यतादिरूपं कृतिप्राधान्यं तृतीयमाकारं दूषयत भगवता 'समभिव्याहृतस्वर्गकामपदार्थान्वययोग्यं स्वर्गसाधनमे कार्यं लिङादयोऽभिदधतीति लोकव्युत्पत्तिरपि तिरस्कृता' इत्यादिन (वे. सं.) प्राभाकरसंमता कार्यस्यानन्यार्थता दूषिता ।

जैमिनिश्च 'असाधकं तु तादर्थ्यात्' (६–१–२) इति सू 'स्वर्गकामो यजेत' इत्यत्र कामशब्देन स्वर्गस्य पुरुषार्थता यागस्य स्वर्गार्थता च विवक्षितेति स्थापयति । 'प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभि संबन्धस्तस्मात्कर्मोपदेशस्स्यात्' इत्यनन्तरसूत्रे च स्वर्गकरणतया यागे विधीयत इति निरूपयति । अयमेवार्थो वृत्तिकृतां वाक्यकारादीन चाभिप्रेत इति वेदान्तेषु मुक्त्युपायोपासनविधिं व्यवस्थापयतो भगवते भाष्यकृतस्सूक्तयः पूर्वमेवोदाहृताः । शाबरभाष्यटुप्टीकानुसारेण समानपदश्रुत्यपेक्षया कामशब्दस्य विधिश्रुतेश्च प्राबल्यं पार्थसारथिमिश्र खण्डदेवाभ्यां व्यवस्थापितम् ।

ननु शबरादिभिः समानपदश्रुत्या आख्यातार्थभावनायां यागस्य भाव्यत्वं स्वर्गशब्दस्य द्रव्यवाचित्वमिति पूर्वपक्षं प्रापय्य विधिश्रुत्य कामशब्देन स्वर्गशब्दार्थप्रीतेरेव भाव्यत्वं यागस्य करणत्वं च सिद्धान्त यित्वा अधिकारस्समर्थितः । भगवता तु (वे. सं.) "यज देवपूजायाम् इति देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्ति सिद्धां लिङादयोऽभिदधति । कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्या पारसम्बन्धप्रकारो हि वाच्यः । भूतवर्तमानतादिमन्ये, लिङादयस्तु कर्तृ व्यापारसाध्यतां वदन्ति" इति । "स्वर्गकामो यजेत" इत्यादिषु लकार वाच्यकर्तृविशेषसमर्पणपराणां स्वर्गकामादिपदानां नियोज्यविशेष समर्पणपरत्वं शब्दानुशासनविरुद्धम् । इति (१-१-१ श्री भा) कर्तृव्यापा

**भावप्रकाशः**

साध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यम्" इति चोक्तम्, अत्र लङ्लडादितो धात्वर्थसबन्धी कालो बोध्यते। लिङा तु न कालः; किंतु धात्वर्थसंबन्धिशासनविषयभूतं पचतीत्यादिबोधविषयविलक्षणं कर्तृव्यापारेण साधयितुं योग्यत्वम्। एतदेव प्रवृत्तिहेतुरूपम्। एतच्च कृतिसाध्यत्वाद्विलक्षणम्। तेन धात्वर्थस्याख्यातार्थेऽन्वये तुल्यवित्तिवेद्यतया लब्धस्य कृतिसाध्यत्वस्य अनन्यलभ्यत्वविरहेऽपि उक्तार्थस्यानन्यलभ्यत्वं संभवतीतिभावः स्फुटो विदुषाम्। विवेचयिष्यते चेदमुपरिष्टात्। एतत्सूक्तिपर्यालोचनायां कर्तृविशेषसमर्पकस्वर्गकामशब्दस्य फलसमर्पकत्वं नास्तीति प्रतीयत इति शबरादिभिः पूर्वपक्षित एवार्थो भङ्ग्यन्तरेण भगवत्संमत इति प्रतिभाति।

एवं च भगवन्मते जैमिनिसूत्राणां कथमधिकारसाधकत्वम्? कथं वा यागादेः फलसाधनत्वमिति चेत्; उच्यते; तत्रैव उत्तरत्र शास्त्रसिद्धे कर्तृत्वान्वये स्वर्गसाधनत्वनिश्चयः क्रियते। यथा भोक्तुकामो देवदत्तगृहं गच्छेत् इत्युक्ते भोजनकामस्य देवदत्तगृहगमने कर्तृत्वश्रवणादेव प्रागज्ञातमपि भोजनसाधनत्वं देवदत्तगृहगमनस्यावगम्यते; एवमत्रापि भवतीति।

अपि च 'कामिनः कर्तव्यतया कर्मणोऽपि देवताराधनरूपतां तद्द्वारेण फलसिद्धिं च तत्तत्कर्मविधिवाक्यान्येव वदन्ति 'वायुर्वै क्षेपिष्ठा' इत्यादीनि' इत्यादि। 'अत्र पुनः कामिनः कर्तव्यतया विहितस्य यागादेः काम्यस्वर्गादिसाधनत्वप्रकारं वाक्यशेषावगतमनादृत्य किमित्युपादानेन यागादेः फलसाधनत्वं कल्प्यते' इत्यन्त(वे. सं.) भगवत्सूक्तिषु, कर्तृसमर्पकत्वेऽपि स्वर्गकामपदस्य कामपदेन स्वर्गस्य फलरूपता बोध्यते। समभिव्याहाराच्च देवताप्रीतिजनकताविशिष्टस्य

**भावप्रकाशः**

यागस्य स्वर्गसाधनताबोधे स्वर्गजनकप्रीतिजनकत्वं यागे लभ्यते । 'साध्यसंशयजनककोटिद्वयोपस्थापकेत्यत्र (सव्य-चि.म) साध्यसंशयजनककोटिद्वयोपस्थितिजनकेत्यर्थलाभवत् । अतः साधनता यागस्य प्रीतिद्वारिकैवेति व्यक्तम् । एवं तदुत्तरं 'तदुपासनादिविहितकर्मानुष्ठायिनः तत्प्रसादात् तत्प्राप्तिपर्यन्तानि सुखानि अभयं च यथाऽधिकारं भवन्ति' इति वाक्ये (ब्र. सू.) कर्त्रधिकरणोक्तरीत्यैव यागोपासनयोरदृष्टद्वारकसाधनताद्यंशे अविशेषस्स्फुटः ।

अत्र 'स्वर्गकामो यजेत' 'मुमुक्षुर्ब्रह्मोपासीत' इत्यादीनाम् 'भोक्तुकामो देवदत्तगृहं गच्छेत्' इति वाक्यतुल्यार्थकत्वं वदता भगवता 'वाक्यादेवास्मादिमं संबन्धमवगच्छामः । यथा काष्ठान्याहर्तुकामोऽरण्यं गच्छेत्' इत्यादिशाबरोक्तपूर्वपक्ष एव सिद्धान्तितो भवति । अयमाशयः—'असाधकं तु तादर्थ्यात्' इति सिद्धान्तसूत्रे तादर्थ्यात् इत्यनेन फलविषये किमर्थमित्येवाकाङ्क्षा जैमिनिसंमतेति प्रतीयते । तादर्थ्यात्पुरुषप्रयत्नस्य प्रीत्यर्थं वा पुरुषो यतत इत्यादि तस्मादकर्तव्यो यागः यदि न प्रीत्यर्थः' इत्यन्तं शाबरमपि किमर्थमित्येवमाकाङ्क्षां युक्तां प्रकाशयति । उत्तराधिकरणे 'फलार्थत्वात्कर्मणः' (सू.) इत्यनेनाप्ययमर्थो युक्त इति प्रतीयते ।

पूर्वपक्षे यजेत स्वर्गकामः इत्यत्र यागं कुर्यात् इति सिद्धान्ते यागकरणिका कृतिरित्यभिप्रायभेदगमकं सूत्रेषु न किञ्चित्पदमुपलभ्यते । करणत्वं पारिभाषिकं तत्संमतं विवक्षितमित्यत्र न किञ्चिन्मानम् ।

'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति पूर्वपक्षसूत्रे स्वर्गशब्दो द्रव्यवाचीति विवक्षितमिति द्रव्याणामित्यनेनैव बोधितम् ।

## भावप्रकाशः

स्वर्गकाम इत्यत्र स्वर्गस्येच्छाविषयता प्रतीयते। तेन यागस्य स्वर्गार्थतया स्वर्गो न यागसाधक इत्यर्थके 'असाधकं तु तादर्थ्यात्' इति सिद्धान्तसूत्रे कर्मणः स्वर्गार्थत्वं तादर्थ्यादित्यनेनोक्तं स्वर्गशब्दस्य प्रीतिवचनताविवक्षां प्रकाशयतीति व्यक्तं विदुषाम्। संमतश्चायमर्थश्श-बरादीनामपि।

मञ्जूषायां नागेशेन पूर्वमीमांसाभावार्थाधिकरण (२-१-१) कर्त्रधिकरण(३-४-८) सूत्रार्थवर्णनपूर्वकं किमर्थमित्येवाकाङ्क्षा जैमिनि-संमतेति स्थापयित्वा फलाधिकरणभामतीपर्यालोचनया वाचस्पतेरपि यागस्य करणतया भावनायामन्वयो न सम्मतः, किं तु साध्यतयैवेति व्यवस्थापितम्।

एवं च किमर्थमित्याकाङ्क्षाशामकबोधजनका एव स्वर्गकामादि-शब्दाः कर्तृसमर्पकाः युष्मदस्मच्छब्दभिन्नत्वविशिष्टसामानाधिकरण्येन प्रथमपुरुषसाधकाः। समानपदश्रुत्यबाधेनोपपत्तिसंभवे तद्बाधकल्पनं चानुचितमिति यजेतेत्यस्य यागं कुर्यादित्येवार्थः। प्रवृत्तिप्रयोजक-फलेच्छासमानाधिकरणकर्तृत्वरूपोऽधिकारः (६-१-१ भा. दी.) खण्डदेवोक्तः शब्दत एव प्रतीयते यागस्य स्वर्गसाधनत्वं वाक्यात्। अतो न्यायपरिशुद्धौ (श. अ.) व्यवस्थापितः भगवत्संमत एव जैमिनि-सिद्धान्तः। भाट्टरहस्यादौ खण्डदेवादेः शबरकुमारिलादिसिद्धान्त-व्यवस्थापनसंरम्भोऽभिनिवेशमूलक इतिव्यक्तं निर्मत्सराणां विदुषाम् इति निरूपयिष्यते। प्रमिताधिकरणे 'हृद्यपेक्षया तु मनुष्याधिकार-त्वात्' (१-२-२४) इत्यत्र फलार्थितासंवलितसामर्थ्यरूपाधिकार-पदार्थघटकेच्छा च मोक्षेच्छैव विविक्षिता बादरायणस्येति तस्यापि

## भावप्रकाशः

किमर्थमित्येवाकाङ्क्षाऽभिमता । 'अङ्गुष्ठमात्रः पुरुषः इति प्रमिताधिकरणविषयवाक्यघटित (क. ४) वल्ल्युपक्रमे,—

कश्चिद्धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन् ।
अथ धीरा अमृतत्वं विदित्वा
ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥

इत्युक्तेः । एवं च 'मनुष्याणां सहस्रेषु' इत्यादि गीतावचनमपि उक्ताधिकारपरमेव । 'तदुपर्यपि बादरायणस्संभवात्' (२५) 'भावं तु बादरायणोऽस्ति हि' (३२) इति तदुत्तरसूत्रयोरपि उक्तेच्छा विवक्षितेति व्यक्तं विदुषाम् ।

मोक्षस्वरूपं च निश्शेषाविद्यानिवृत्तिपूर्वकपरमात्मानुभवरूपमिति 'प्रज्ञानेनैनमाप्नुयात्' 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' 'यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति' इति श्रुत्याद्यनुसारेण स्थापितमत्राधिकरणभाष्ये । एवं च 'मनुष्याधिकारत्वात्' इत्यादिसूत्रविवक्षिताधिकारघटकेच्छाविषयमुक्तिफलबोधकपुरुषार्थशब्दसूचितमुक्तिफलार्थविद्याप्रवृत्तिप्रदर्शनायैवतत्तात्पर्यकश्रुतीनामुदाहरणं भाष्यादौ इति निरूपयिष्यते ।

न चोक्तमोक्षकामनया प्रवृत्त्या दोषो भवति ।—

पराचः कामाननुयन्ति बालाः
ते मृत्योर्यन्ति विततस्य पाशम् ।

इत्यनेनान्यकामनया प्रवृत्तेर्निन्दया अमृतत्वमिच्छोरात्मेक्षणे प्रवृत्तिस्थापनात् । 'श्रेयो हि धीरोऽभिप्रेयसो वृणीते' 'मत्वा धीरः' इत्युभयत्र धीरशब्देनोक्तमेव 'मत्वा धीरः' इत्यनन्तरश्रुतौ प्रस्तुत्य 'यमेवैष वृणुते

## भावप्रकाशः

इत्यत्र च यच्छब्देनाभिधाय तमेव 'कश्चिद्धीरः' इत्यत्र धीरशब्देन निर्दिश्य तस्यामृतत्वेच्छया प्रत्यगात्मेक्षणाभिधानेन 'यमेवैष वृणुते' इत्यत्रापि मुमुक्षया ध्यानादिनिष्ठ एव यच्छब्दार्थो विवक्षित इति निश्चीयते। मुण्डकोपनिषदि;—

ओमित्येवात्मानं ध्यायथ
स्वस्ति वः पाराय तमसः परस्तात्।

इत्युक्तानामेव 'उपासते पुरुषं ये' इत्यत्रोक्त्या तदन्तःपातिन एव 'यमेवैष' इत्यत्र यच्छब्देन परामर्शस्थापनात्। अयमर्थः 'यो मुमुक्षुः' इत्याद्युदाहृत (वे. सं) भगवत्सूक्त्यां स्फुटः। तत्र यो मुमुक्षुः ध्यानादिनिष्ठःइति श्रुत्यन्तरार्थः यदा इत्यादि जायत इत्यन्तं यच्छब्दमात्रविवक्षितार्थपरम्।

छान्दोग्ये 'यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान् सर्वेषु लोकेष्वकामचारो भवति' (८-१-६) इत्यत्र लौकिकराजशासनानुगुणात्मज्ञानशून्य-कर्मफलान्तवत्त्वाभिधानेन तत्फलकामनैव दोष इति प्रतीयते। तदुत्तरं 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इत्यादौ 'यंय-मन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते' इत्यत्र च (८-२-१०) आत्मज्ञानिनः सर्व-जगन्महाराजशासनानुगुणसर्वकामावाप्तिसत्यसङ्कल्पवत्त्वे प्रतिपादिते। एतदेवाभिप्रेत्य 'फलसंबिभत्सया' 'शासनानुवर्तिनम्' इति उदा-हृतद्रमिडभाष्यम्। अत्र साधनानुष्ठानावसानभावत्वादन्तःफलम्' इति

भावप्रकाशः

दहराधिकरणे व्यासार्योक्त्या फलार्थसाधनानुष्ठानमेतच्छ्रुतितात्पर्यविषय इति निर्णीतं भवति। एवं च 'दहर उत्तरेभ्य' इति सूत्रतात्पर्यविषयताऽप्यस्यार्थस्य सिध्यति। उभयलिङ्गपादे प्राप्यतृष्णां भगवद्गुणनिरूपणेन द्रढयित्वा अधिकारसिद्धिं संपाद्य उत्तरपादे 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' 'नाना शब्दादिभेदात्' इत्यत्र पूर्वमीमांसोक्तदिशा व्यवस्थाकरणेन मुक्त्यर्थं मुक्तिसाधनविद्यैव वेदान्तेषु विवक्षिता नान्या ब्रह्मविद्या इति स्थापितं भवति। तदुत्तराधिकरणे ब्रह्मविद्यानामविशिष्टमुक्तिफलकत्वेन विकल्पसाधनेन परापरमुक्तिफलकब्रह्मविद्याद्वैविध्यस्य उपनिषत्तात्पर्यविषयताविरहं दर्शयित्वा 'काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्' इत्यत्र ब्रह्मप्राप्तिव्यतिरिक्तफलानां विद्यानामेव काम्यत्वोक्त्या मुक्त्यर्थमनुष्ठितानां ब्रह्मविद्यानां प्रायश्चित्तरूपत्वमेव न काम्यत्वमिति मुक्त्यर्थतत्साधनविधिः सम्यक्परिपालितो भवति। एतत्सर्वमभिप्रेत्य वेदान्तदीपे पुरुषार्थाधिकरणे 'ब्रह्मविदाप्नोति परम्' इति श्रुतिमुपादाय विद्या ब्रह्मप्राप्तिफलाय विधीयते इति।

श्रीभाष्ये समन्वयाधिकरणे सिद्धपरश्रुतिवाक्यानां परोक्षज्ञानेन सप्रयोजनत्वमभिधाय ब्रह्मप्राप्तिरूपनिरतिशयनिश्रेयसरूपफलविशेषार्थं विधिरित्यभिप्रेत्य 'ब्रह्मविदाप्नोति परम्' 'आत्मानमेव लोकमुपासीत' इति वेदनादिशब्दैः उपासनं ब्रह्मप्राप्त्युपायतया विधीयत इति (१—१—४) वदता भगवता जिज्ञासाधिकरणे ब्रह्मविदाप्नोतीति ब्रह्मज्ञानान्मोक्षोपदेशो न स्यात्। 'असन्नेव+विदुः' इति ब्रह्मज्ञानासद्भावसद्भावाभ्यां आत्मनाशमात्मसत्तां च वदति। अतो ब्रह्मविषयवेदनमेवाप (वर्गोपायं) वर्गाय सर्वाश्श्रुतयो विदधति ज्ञानं चोपासनात्मकम् इत्युक्त्या ज्ञानहेतुकं फलोपधायकत्वरूपं बृंहणत्वमिति बोधितम्। एतेन—स्वयत्नसाध्य-

## भावप्रकाशः

ब्रह्मत्वरूपं ब्रह्मसत्त्वं जानन्नसान्निति केषांचित् (व. भू. मी. भा.) श्रुत्यर्थः अनुपादेय एव—तथाहि ;—

अनवधिकातिशयबृहत् बृंहणं च (१–१–२) इति भाष्ये बृंहणत्वस्य ब्रह्मशब्दार्थत्वोक्तिमनुसृत्य 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र 'ज्ञानपदं नित्यासंकुचितज्ञानैकाकारमाह' इति भगवत्सूक्तौ स्वरूपतो धर्मतश्च ज्ञानत्वं विवक्षितम्। श्रुतौ बृंहणत्वमपि ब्रह्मशब्दार्थः। तच्च स्वसङ्कल्पेनाचेतनस्य स्थूलपरिणामहेतुत्वम्; चेतनानां 'स चानन्त्याय कल्पते' इत्युक्तज्ञानबृहत्त्वहेतुत्वं च विशेष्यांशे विशेषणांशे च ज्ञानत्वं विवक्षितमिति (१–१–२) व्यासार्यैरुक्तम्।

अत्र तदुत्तरम् 'यो वेद–सोऽश्नुते सर्वान्–कामान् सह' इत्यत्र कामनाविषयो वेदनहेतुको ज्ञानविकास उक्तः 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' इत्यादावचेतनस्थूलपरिणामहेतुत्वं ब्रह्मण उक्तम्। तत्र स्थूलारुन्धतीन्यायेन अन्नमयप्राणमयमनोमयविज्ञानमयान्निरूप्य आनन्दमयस्यात्मत्वं निर्धार्य 'असन्नेव स भवति' इत्यत्र आनन्दमयब्रह्मज्ञानाज्ञानयोर्गुणदोषावभिधाय 'सोऽकामयत' इत्यादौ निर्हेतुककृपाहेतुक करणकलेबरमूलकज्ञानविकासार्थ एव बहुभवनसङ्कल्प उक्त इति प्रतीयते। श्रुतौ विज्ञानमयविज्ञानशब्दाभ्यां जीवनिर्देशात्। तेन उक्तज्ञानविकासनिबन्धनमेव जीवस्य सृज्यत्वम्। विकासवैषम्ये च कर्म हेतुः। ज्ञानविकासाविर्भावप्रतिबन्धकपापनिवृत्त्यर्थं 'ब्रह्मविदाप्नोति परम्' इत्युपक्रम उपासनं विधीयते।

एवं च उत्तरानुवाके निर्हेतुककृपाव्यवस्थापितकारणताकोपासनहेतुकसर्ववस्तुविशेष्यकानुकूलत्वप्रकारकज्ञानरूपानन्दात्मकज्ञानविकास हेतुसङ्कल्पवत्त्वप्रतिपादने 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र बृंहणत्वं

भावप्रकाशः

स्वरूपयोग्यत्वफलोपधायकत्वोभयरूपं विवक्षितमिति प्रतीयत इति व्यासार्याशयः।

सर्वजीवानामविशेषेण निर्हेतुककृपया विकासस्वरूपयोग्यतां प्राप्तस्यापि ज्ञानस्य प्रतिबन्धककर्मणः परविद्यारूपप्रायश्चित्तेन नाशनमन्तरा नाविर्भाव इति (४–४–१) श्रीभाष्यादौ निर्धारणात् 'स चानन्त्याय कल्पते' इति श्रुतिसिद्धसकलसङ्कोचनिवृत्तिपूर्वकनिरवधिकज्ञानविकासरूपानन्त्यावहत्वं हि बृंहणत्वम्। तद्धि सकलहेयप्रत्यनीकत्वक्षान्तिकारुण्यादिमोक्षप्रदत्वौपयिकगुणगणवत्त्वम् (१–१–१) इत्यत्र स्वरूपयोग्यताया निर्हेतुकत्वेऽपि फलोपधायकत्वस्य सहेतुकत्वस्य प्रागुदाहृतप्रमाणादिसिद्धस्याप्रकम्प्यत्वात्।

अतः सर्वशेषित्वघटितसर्वशरीरित्वरूपवस्तुपरिच्छेदशून्यत्वप्रवृत्तिनिमित्तकानन्तशब्देन बृंहणत्वस्य सर्वशेषिण एव बोधनेन सर्वजीवान् प्रति शेषित्वं ज्ञानहेतुककृपया रक्षकत्वं च भगवतः प्रतिष्ठापितं भवति।

साक्षादिच्छाविषयश्च परमप्रयोजनम्। अवान्तरप्रयोजनस्य तदर्थतयेष्टत्वमिति न साक्षादिच्छाविषयत्वम् 'शेषः परार्थत्वात्' (३–१–जै. सू.) इति जैमिनिसूत्रे अर्थ्यत इत्यर्थः इष्यत इति यावत्। निरुपपदश्चार्थशब्दः स्वतः परमप्रयोजनपरः। अनेन स्वातिशयाधायके भृत्यादौ लक्षणस्याव्याप्तिशङ्काव्युदासः। भृत्यो हि स्वालङ्कारादिकमपि स्वाम्यतिशयाय भवतीति हि स्वबुद्ध्या स्वातिशयमाधत्ते।

अतो भृत्येन स्वातिशयाधानस्य परातिशयः परमप्रयोजनमिति नाव्याप्तिरिति; यतः परातिशयस्यैव परमप्रयोजनस्याधायकत्वं लक्षणम्। अत एव परगतातिशयाधानायोगान्ययोगव्यवच्छेदविकल्पेन राजन्यभृत्ययोरतिव्याप्त्यव्याप्तिप्रसञ्जनमस्मिन् पक्षे नावतरति। परातिशयमात्राधायकत्वस्य लक्षणत्वाभावात्' इति च व्यासार्यैरुक्तम्।

### भावप्रकाशः

एतेन शेषत्वं स्वस्योपकारं प्रधानमनाश्रित्य परोपकारार्हत्वम् (र-त्र-सा) इत्यत्र प्राधान्यं परमप्रयोजनत्वरूपमेव विवक्षितमित्युभयोरैकार्थ्यमेवेति ; अन्यथा (सि-उ-सु) उत्प्रेक्षणं निरवकाशम् ।

एवं च —

अत्र स्वलाभापेक्षाऽपि स्वामिलाभावसायिनी ।
स्वामिप्रयोजनापेक्षाप्यतस्स्वानन्दहेतुका ॥ (र-त्र-सा)

इत्युक्तदिशा मोक्षार्थं साधनानुष्ठातुः पूर्वोक्तशेषत्वाविभवोऽप्रकम्प्य इति सिद्धम् ।

किञ्च ;—

सह यज्ञैः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥

(भगवद्गीता-३-१०)

इत्यत्र प्रजापतिप्रजादिशब्दप्रयोगेण 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्' इत्याद्युदाहृत (६ पु) (मै-उ-२-६) श्रुतिर्मूलभूतेति प्रतीयत इत्यभिप्रेत्य सृष्टेर्दयामूलकत्वं भगवता (गी-भा) स्थापितमिति 'न प्रयोजनवत्त्वात् (२—१—१०) इत्यधिकरणे सृष्टेः परार्थत्वमपि विवक्षितमिति च पूर्वमेव निरूपितम् ।

'अनेन प्रसविष्यध्वम्' इत्युत्तरार्धमपि—

'आत्मस्थं प्रभुं कारयितारं नापश्यद्गुणौघैरुह्यमानः ।
अहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानम् (३ प्र) ।

इत्याद्यनन्तरम् 'अयं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्याधिगमः स्वधर्मस्याचरणं स्वाश्रमेष्वेवानुक्रमणं स्वधर्मस्य ।

**भावप्रकाशः**

स्वधर्मोऽभिहितो यो वेदेषु न स्वधर्मातिक्रमेणाश्रमी भवति। आश्रमेष्वेव वानवस्थस्तपस्वी वेत्युच्यत इत्येतदयुक्तम्; नातपस्कस्यात्मज्ञानेऽधिगमः कर्मसिद्धिर्वेति। एवं ह्याह;—

तपसा प्राप्यते सत्त्वं सत्वात्संप्राप्यते मनः।
मनसः प्राप्यते ह्यात्मा यमाप्त्वा न निवर्तते॥

अस्ति ब्रह्मेति ब्रह्मविद्याविदब्रवीत्। ब्रह्म द्वारमित्येवैतदाह यस्तपसाऽपहतपाप्माऽऽह ओम्, ब्रह्मणो महिमेत्येवैतदाह यस्संयुक्तः अजस्रं चिन्तयति। तस्माद्विद्यया तपसा चिन्तया चोपलभ्यते ब्रह्म (४ प्र) इत्यादि श्रुत्यर्थसंग्राहकम्; गीता च सर्वा एतद्विवरणरूपा इत्यभिप्रेत्य 'अनेन यज्ञेन प्रसविष्यध्वम्—आत्मनो वृद्धिं कुरुध्वं, एष वो यज्ञः परमपुरुषार्थलक्षणमोक्षाख्यकामस्य तदनुगुणानां प्रपूरयिता भवतु' इति भगवता भाषितम्।

अत्र प्रजापतिशब्दार्थप्रजाशेषिणः निर्हेतुकृपामूलकसृष्टिप्रतिपादनेन शेषित्वकृपाकार्ययोर्भेदनियमो नास्तीति सिध्यति।

तेन (गी-अ-त-प्र) केश्चिदुभयोरैक्यायोगस्योक्तिरनादरणीया। परदुःखदर्शनजनिततादात्विकस्वदुःखनिवृत्तिरूपफलात्तत्प्रवृत्तिरिति न स्वार्थानपेक्षत्वमिति चेत्; ईदृशं स्वार्थत्वं शेषस्याप्यस्ति; तद्धि स्वार्थानपेक्षत्वं न हन्ति किंतु तदनुकूलमेव। परदुःखज्ञानरूपदुःखनिवृत्तिं पराभ्युदयज्ञानरूपप्रीतिमत्त्वं च विना स्वार्थानपेक्षत्वस्य विवक्षितत्वात् (श्रु-प्र-१-१-१) इति परिष्कृतदयाशरीरप्रविष्टस्वार्थानपेक्षत्वस्य शेषित्वकृपाकार्यैक्येऽप्यविरोधात्। अयमर्थो विरोधिपरिहारेऽपि (५१) स्फुटः।

अतस्सर्वशेषिणो 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमोक्तविद्याहेतुकमुक्तिसंकल्पवत्त्वे उक्तश्रुतिप्रतिपाद्ये न किंचिद्बाधकम्।

**भावप्रकाशः**

'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इत्यानन्दमयवाक्योत्तरश्रुतिरपि उक्तबृंहणत्व सर्वशेषित्वादिरूपबृहत्त्वविशिष्टवस्तुज्ञानाज्ञानयोः फलभेदं दर्शयति। अ इति नञर्थकमव्ययमिति अज्ञानलाभसंभवात्। तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकम्' 'तेनैति ब्रह्मवित्' इत्याद्युत्तरं 'इहैव सन्तोऽथ विद्मस्तद्वयं न चेदिहावेदीन्महती विनष्टिः' (बृ ६-४-१४) इति 'तदेव ब्रह्म त्वं विद्धि' 'नूनं त्वं वेत्थ ब्रह्मणो रूपम्' इत्याद्युत्तरं 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः (के-२-५) इति च ब्रह्मवेदनविध्युत्तरश्रुत्यन्तरेऽप्ययमर्थोऽवसेयः।

तदेतदभिसंधाय आनन्दमयाधिकरणे श्रीभाष्यम्—"असन्नेव+विदुः, इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनस्सद्भावासद्भावौ दर्शयति" इति। अस्य वाक्यस्य पूर्वपक्षस्थत्वेऽपि 'ब्रह्मज्ञानसद्भावासद्भावाभ्यामात्मनाशमात्मसत्तां च वदति' इति जिज्ञासाधिकरणसिद्धान्तभाष्यैककण्ठ्यादयमेवार्थो भाष्यकृत्संमतः। (आ-अ) 'सद्भावासद्भावाज्ञानाशङ्का युक्ता' इत्याद्युत्तरभाष्यं तु परसंमतयोजनामभ्युपेत्य प्रवृत्तम्। सिद्धान्ते तादृशयोजनाभ्युपगमेऽपि ब्रह्मेत्यसदित्यादियोजनया सदसद्भावौ जीवान्यत्वेनैव विवक्षितौ। न तु कैश्चित् (व. भू. मी. भा.) उत्प्रेक्षितौ।

आनन्दमये विज्ञानमयान्यत्वं प्रतिपाद्य 'तदप्येष श्लोको भवति' इत्यनन्तरम् 'असन्नेव' इत्याद्यनुवाकप्रवृत्तेः।

अत्र च इतिशब्दस्योक्तप्रकारवाचित्वेनोक्तार्थलाभात् 'अस्तीत्येवोपलब्धव्यः' इतिवत् अस्तीत्यनन्तरमितिशब्दस्याभावेऽपि सत्त्वासत्त्वमात्रप्रकारकज्ञानद्वयविवक्षणे इतिशब्दद्वयवैयर्थ्यात्। असद्ब्रह्म वेद सद्ब्रह्म वेद इत्यतस्तदर्थलाभसंभवात्। 'ब्रह्मज्ञानसद्भावासद्भावाभ्या-

**भावप्रकाशः**

मात्मनाशमात्मसत्तां च वदति ' (१-१-१) इति भाष्यं ब्रह्म वेदेत्यसदिति योजनाभिप्रायकमिति (भा-प्र) प्राञ्चः ।

वस्तुतस्तु पचति भवति इत्यस्य पाको भवतीति वैयाकरणसंमतार्थवत् ' अस्ति ब्रह्मेति चेद्वेद ' इत्यस्य ब्रह्मवेदनमस्ति इत्यर्थः । ' अस्ति ' इति ज्ञानविशेषाभिप्रायकम् असद्ब्रह्मेति वेद चेत् ' इत्यत्र असदिति अभेदेन क्रियाविशेषणम् । तेन ब्रह्मज्ञानसद्भावासद्भावयो र्लाभः ' अस्ति ब्रह्मेति चेद्वेद ' इत्यत्र विदिधात्वर्थभूतं ज्ञानं मुक्तिहेतूपासनादि विवक्षितम् । ' ब्रह्मविदाप्नोति परम् ' इति प्रक्रमात् । अयमर्थः श्रीभाष्ये स्फुटः । अत एव उत्तरानुवाके ' यदा ह्येवैष एतस्मिन् + प्रतिष्ठां विन्दते ' ' यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते ' इत्यादिविवरणभाष्यैकरस्यम् । अतः कैश्चित् उत्प्रेक्षितार्थस्य नावकाशः ।

एतेन (ना. आ. भा.) कैश्चिदुदाहृते ' विनतविविधभूत ' इत्येतद्विवरणे (श्रु-प्र) ' भगवज्ज्ञानेन लब्धसत्ताकत्वं भूतशब्दार्थः

अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति हि श्रुतिः !

लब्धस्वरूपाणां च—

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थः . . . भास्वता ॥
ददामि बुद्धियोगं तं . . . यान्ति ते ॥ भ. गी.
अहं स्मरामि मद्भक्तं . . . . सन्निभम् ॥ वरा. पु.

इत्याद्युक्तप्रकारेण साक्षात्कारविरोधिनिवर्तनादिकं हि भगवत एव भर इति न स्वरूपप्रच्युतिसंभवः ' इत्यत्र भगवज्ज्ञानं विनतशब्दार्थभूतन्यासोपासनात्मकविद्याविशेषरूपमेव विवक्षितम् । ' तेषामेव ' ' अहं स्मरामि ' इति प्रमाणोदाहरणाच्च ।

## भावप्रकाशः

एवं च जिज्ञासाधिकरणश्रीभाष्यानुसारादपि पुरुषार्थाधिकरणे 'ब्रह्मविदाप्नोति परम्' इत्यत्र अपवर्गार्थोपासनं विवक्षितमिति सिद्धम् ।

अतः 'पुरुषार्थोऽतश्शब्दात्' इति सूत्रे पुरुषार्थशब्देन किमर्थमित्येवाकाङ्क्षा बादरायणस्यापि संमतेति बोधयितुमेव (वे. दी.) 'विद्या ब्रह्मविद्याप्राप्तिफलाय विधीयते' इति पुरुषार्थाधिकरणे भगवतोक्त युक्तम् । (श्री. भा.) तत्रोदाहृते 'ब्रह्मविदाप्नोति परम्' इति श्रुतिवाक्ये परत्वं गुणैरपि विवक्षितम् । गुणाश्च 'सोऽश्नुते सर्वान् कामान् सह' इति एतद्विवरणश्रुतौ काम्यमानत्वेनोक्ताः । तेन गुणवद्ब्रह्मप्राप्तेरपि कामनाविषयत्वं सिध्यतीति ब्रह्मवेदनस्य ब्रह्मप्राप्त्यर्थत्वं लभ्यते । एतदेवाभिप्रेत्य 'ब्रह्मविदाप्नोति परम् । यो वेद—कामान् सह इत्यादि शब्दात्' इति (वे. सा.) उक्तम् ।

एवं (श्री. भा.) तत्रोदाहृतात् 'यथा नद्यः—पुरुषमुपैति दिव्यम्' इत्यतः पूर्वम् 'ओमित्येवात्मानं ध्यायथ स्वस्ति वः पाराय तमसः परस्तात्' इति श्रुतौ ब्रह्मप्राप्त्यर्थं ध्यानविधिः स्फुटः । तदुत्तरम् 'क्षीयन्ते चास्य कर्माणि' इत्यत्र दर्शनसाध्यता कर्मक्षये प्रतिपादिता । तेन दर्शनस्य प्रायश्चित्तरूपता सिध्यति । तदुत्तरं 'पुण्यपापे विधूय' इत्यादौ कर्मक्षयानन्तरं प्राप्तिः प्रतिपाद्यते । 'यथा नद्यः' इति मन्त्रे 'नामरूपाद्विमुक्तः' इत्यादौ नामरूपमुक्त्यनन्तरं प्राप्तिरभिधीयते । 'मुक्तोपसृप्यव्यपदेशाच्च' इति सूत्रं चोक्तार्थसंग्राहकम् । एवं च ध्यानस्य क्वचिदुक्तं ब्रह्मप्राप्त्यर्थत्वं कर्मक्षयार्थतामपि ग्राहयति ।

एवं 'स्वस्ति वः पाराय तमसः परस्तात्' इत्येतद्घटक- 'तमसः परस्तात्' इत्येतद्घटिते 'वेदाहमेतं पुरुषं महान्तं, आदित्य-

### भावप्रकाशः

वर्णं तमसः परस्तात्' इत्यत्रापि उत्तरार्धोक्तब्रह्मप्राप्त्यर्थत्वं वेदने विवक्षितमित्याशयेन पुरुषार्थाधिकरणे 'वेदाहमेतं' इत्याद्युपादानम्। भाष्ये आदिपदेन 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, (छां. ८-१-६) इत्यादिकं ग्राह्यम्। 'आत्मानं तदन्तर्वर्त्तिनश्च काम्य-भूतानपहतपाप्मत्वादिकान् गुणान्विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिः' इति भाष्ये प्राप्त्यर्थता वेदन-स्यादृष्टद्वारकप्राप्तिहेतुता चेत्युभयं विवक्षितमिति स्फुटं विदुषाम्। (वे. दी.) 'सोऽकामयत' इत्यादिश्रुतिमुदाहृत्य 'विद्या मुक्तिफलाय विधीयते' इत्युक्त्या निर्हेतुककृपामूलकभगवत्कामना चेतनकामनापूर्वक-विद्यायत्नमन्तरा विफलैवेति सिद्धम्।

एतेन अदृष्टाद्वारकत्वं अन्यार्थत्वे सति प्रसङ्गादुपकारकत्वं च विद्यायाः प्रतिक्षिप्तं भवति।

एवं 'पुरुषार्थोऽतः' इत्यत्र एतच्छब्दोत्तरतसिल्प्रत्यये 'अथ परा यया' इत्यादि श्रुत्युक्तकरणत्वस्य विवक्षितत्वेन अहेतुत्वे सतीत्यादि-कमपि निरस्तम्। अत एव 'येनाहं नामृता स्यां किमहं तेन कुर्याम्' आत्मा वा अरे -निदिध्यासितव्यः' (बृ. मै. ब्रा) इत्यादिश्रुतिरपि संगच्छते। अत्र येनेति करणे तृतीया; तेन अमृतत्वकरणमेव जिज्ञा-सितमिति ध्यानस्य करणत्वमेव विवक्षितम्। तथा च भाष्यम् (१-४-२२) 'अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्यः 'आत्मा वा अरे द्रष्टव्यः' इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा' इति, उपसंहारे 'विज्ञातारमरे केन विजानीयात्' इति श्रुतेर्विवरणावसरे 'सर्वस्य विज्ञा-तारं पुरुषोत्तममुक्तप्रकारादुपासनादृते केन विजानीयादितीदमेवोपासन-ममृतत्वप्राप्त्युपायः' इति च। 'येनेदं सर्वं विजानाति तं केन

## भावप्रकाशः

विजानीयात्' इति तत्पूर्ववाक्यस्येदं भाष्यम्; 'येन परमात्मना आहितज्ञानस्सान्निदं विजानाति तं केन विजानीयात्? न केनापीति परमात्मनो दुरधिगमत्वमुपपाद्य' इति। अत्र श्रुतप्रकाशिका— 'येनेदमिति। 'क इत्था वेद यत्र सः' इतिवत् परमात्मप्रसादादृते तस्य दुरवबोधत्वमत्रोऽच्यते। अन्यथा 'आत्मा वा अरे द्रष्टव्यः' इत्युपक्रमावगतद्रष्टव्यत्वविरोधात्।

तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्।
इति तत्प्रसादेन तद्दर्शनस्य श्रुत्यन्तरसिद्धत्वाच्चेति भावः' इति परमात्मप्रसादादृते तस्य दुरवगमत्वपरं पूर्ववाक्यम्। तत्प्रसादनोपायश्चात्राभिहितमुपासनमेवेति केवलयज्ञदानाद्युपायान्तरनिषेधपरमिदं वाक्यमित्यर्थः' इति च।

एतेन अमृतत्वोपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया द्रष्टव्यत्वेनोपदिष्टोऽयमात्मा परमात्मैव इति उपक्रमभाष्ये आत्मन उपायत्वं उपासनजन्यप्रसादवत्त्वेनैव विवक्षितमिति निर्णीत भवति।

अत्राधिकरणे 'महान्तं विभुम्' 'नायमात्मा' इति श्रुतिद्वयं प्रकृतम्। 'क इत्था वेद यत्र सः' इत्यपि तत्प्रसादादृते तस्य दुरवबोधत्वं पूर्वं प्रस्तुतं प्रत्यभिज्ञाप्यते' इति भाष्यम्। अत्र 'अयमात्मा' 'एषः' इत्युभयत्र 'आत्मानं मत्वा' इति पूर्वमुपासनकर्मत्वेनोक्त आत्मा विवक्षितः। य इत्यत्र कर्ता। तेन पूर्वश्रुत्युक्तविभ्वात्मोपासनहेतुकं वरणं 'एष वृणुते' इत्यत्र विवक्षितम्। 'अणोरणीयान्' इति पूर्वश्रुतौ 'तमक्रतुं पश्यति' इत्यत्रापि 'तं दुर्दर्शम्' इत्युपक्रमश्रुतौ 'देव मत्वा' इत्युक्तोपासनजन्यप्रसादहेतुकमेव दर्शनं विवक्षितम्। 'गुहाहितं' 'गुहायां निहितः' इत्युभयत्र विषयैक्यप्रत्यभिज्ञानात्

**भावप्रकाशः**

'तमक्रतुं' इत्यत्र तच्छब्देन जीवात्मयोगाङ्गकपरविद्याकर्मणः परामृष्टव्यत्वात्। एवं च एतत्समानार्थकतैत्तिरीयश्रुतेरपीत्थमेवार्थः। कठोपनिषदि 'मत्वा धीरो हर्षशोकौ जहाति' इत्यत्र दृष्टादृष्टयोर्द्वारयोरनुक्त्या प्राप्तस्संशयः 'तमक्रतुं' 'यमेवैषः' इति श्रुतिद्वयेनादृष्टद्वारप्रदर्शनेन परिहृतो भवति।

अतोऽत्राधिकरणभाष्येऽप्युपासनहेतुक एव प्रसादो विवक्षित इत्यभिप्रेत्य उपासनस्य प्रसादनोपायत्वं व्यासार्यैरुक्तम्।

एतेन (१-४-१९) तदुपायतया द्रष्टव्यत्वेनोपदिष्टोऽयमात्मा इत्यर्थसाधनपरं 'तमेव विदित्वा' इत्यादिभिरमृतत्वस्य परमपुरुषवेदनैकोपायताप्रतिपादनात्' इति भाष्यं वेदनस्य प्रसादद्वारकोपायत्वपरं व्याख्यातं भवति। श्रुत्या एतदर्थलाभप्रकारः (१४१) पूर्वमेव निरूपितः। लक्ष्मीतन्त्रे—

परमः पुरुषार्थो यस्त्वत्प्रीतिस्तस्य साधनम्।
त्वत्प्रीतौ क उपायः स्यात् . . ॥ (१५-६)

इति (२६) उदाहृतवचनेषु पुरुषार्थशब्देन साध्योपायप्रवृत्त्युद्देश्यत्वं मुक्तेरुक्तम्। पुरुषार्थसाधनप्रीतिसाधनत्वस्योपाये प्रतिपादनेन प्रीतिद्वारा पुरुषार्थसाधनत्वमुपायस्य स्फुटम्। अहिर्बुध्न्यसंहितायामपि प्रीतिसङ्कल्पद्वारा साधनत्वं धर्मस्य तत्साध्यज्ञानस्य च प्राक् (२१) उदाहृतवचनेषूपपादितम्।

तत्प्राप्तिसाधनं योगः कर्म च श्रुतिबोधितम्।
श्रृणुष्व परमं कर्म द्विविधं तद्द्विरोच्यते।
प्रवर्तकं च स्वर्गादिफलसाधनमुच्यते॥
निवर्तकाख्यं देवर्षे विज्ञेयं मोक्षसाधनम्॥ ३१॥ १४॥

भावप्रकाशः

संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः ।
अष्टाङ्ग एष कथितो येनात्मा दृश्यतां गतः ॥ ३१ ॥ १५ ॥
य एन पूजयेद्भक्त्या पूर्वोक्तेनैव वर्त्मना ।
बाह्येन चान्तरेणापि योगाख्येन महामुने ॥
न्यासेन वा सुखी सोऽत्र परत्र च न संशयः ॥ ३७ ॥ २१ ॥
यानि निःश्रेयसार्थानि चोदितानि तपांसि वै ।
तेषां तु तपसां न्यासमतिरिक्तं तपश्श्रुतम् ॥ ३६ ॥

इत्यत्र निश्श्रेयसार्थं चोदितयोर्भक्तिप्रपत्त्योः प्रीतिद्वारा परत्र सुखहेतुत्वं बोध्यम् । अत्र निवर्तकसामान्यस्य मोक्षार्थतया विहितत्वं स्फुटम् ।

ननु स्वयंप्रयोजनभगवत्प्रीत्यर्थं ज्ञानिनाऽनुष्ठितानां सर्वकर्मणां भगवत्कालुष्यनिवृत्तिरूपफलोद्देशविरहेऽपि वस्तुस्वभावादेव कालुष्यनिवृत्तिसाधनत्वेन प्रसादनोपायत्वम् कालुष्यस्य प्रतिबन्धकतया प्रतिबन्धकनिवर्तकत्वरूपं, आलोकस्य प्रत्यक्षप्रतिबन्धकतमोनिवर्तकत्वमात्रेण हेतुताव्यवहारवदत्रापि तद्व्यवहारः । हेतुत्व सिद्धधर्मस्यैव न तु साध्यधर्मस्य । एकत्र सिद्धसाध्ययोः करणताकल्पनस्यान्याय्यत्वात्, भगवदौदार्यादिगुणानां वैफल्यप्रसङ्गाच्च । अतस्सर्वेषां चेतनव्यापाराणां अन्यार्थत्वे सति प्रसङ्गादुपकारकत्वरूप व्याजत्वमेव । व्यवस्थापितं चेदं (र.त्र.मी.भा) चरमश्लोकटिप्पणीकारानुयायिभिः कैश्चित् (सि. ध. वि. मं. दी.) इति चेत्; उच्यते—मोक्षार्थं साधनभूतविद्यायां प्रवृत्तरुपपादनेन उक्तव्याजत्वस्यौत्प्रेक्षिकत्वनिश्चयात् । तदधिगमाधिकरणे 'तदेवं विद्या वेदितुर्वेद्याऽत्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया सती वेद्यभूतपरमपुरुषाराधनरूपा पूर्वकृताघसञ्चयजनिताप्रीतिं नाशयति' इत्यादौ विद्यायाः प्रायश्चित्तत्वनिरूपणभाष्ये सतीत्यन्तं समाधित्वेन फलता-

## भावप्रकाशः

परम्। 'परमपुरुषाराधनरूपा' इति द्वारप्रदर्शनपरम्। पापदाहकार्थक-पुरुषपदे 'क्षमिष्यामि' इति 'क्षान्तम्' इति च सङ्कल्पः, आराधनशब्दे प्रीतिश्चेति द्वयं विवक्षितम्। श्रुतप्रकाशिकायां च अश्लेषविनाशयोः प्रीतिपूर्वकक्षमिष्यामीतिसङ्कल्परूपत्वम् विधूननस्य 'क्षान्तम्' इति सङ्कल्परूपत्वम्। लोके राजसेवासमापनयोः प्रीतितारतम्यदर्शनात् इति॥ अत्र शक्तिशब्दः कर्मानुष्ठानजनितभगवन्निग्रहपर इति च उक्तम्। एतेन अप्रीतिः निग्रह इति पूर्वं भाष्योक्तं विद्यायाः कर्मणां फलजनन-शक्तिविनाशादिसामर्थ्यं दीपे शक्तिशब्देन निर्दिष्टं च प्रीतिसंकल्परूप-मितिच निर्णीतम्। पूर्वमीमांसायामपूर्वाधिकरणे द्वारमात्रं निरूपितं, अत्र तु द्वारविशेषो निरूप्यत इति भिदा। एवमपि सापूर्वात् कर्मोपासनात् स्वर्गापवर्गफलप्राप्तिः, उत कर्मोपासनाराधिताद्ब्रह्मण इति फलाधिकरणे (श्रु-प्र), उक्तम्। अत्र (वे)दीपोक्तदिशा संशयप्रदर्शनेन;

तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्।

इति (वे-दी) गीतोदाहरणेन पूर्वपक्षे सिद्धान्ते च 'धर्मम्-अत' इत्यत्र अपूर्वं, परायत्ताधिकरणैककण्ठ 'पराभिध्यानात्' इत्यादि-सूत्रोक्तजीवकृतप्रयत्नापेक्षप्रीतिपूर्वकानुग्रहसंकल्पश्च द्वारं विवक्षितमिति निर्णीयते। प्रसादशब्दश्च—

प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिषु।

इति (अ-सु) मेदिनीकोशादनुग्रहवचनः। (वे. सं) 'चोदितान्यनुतिष्ठतो विहितं कर्माकुर्वतो निन्दितानि कुर्वतस्सर्वाणि सुखानि दुःखानि च परम-पुरुषनिग्रहानुग्रहाभ्यामेव भवन्ति' इति प्रतिज्ञाय 'एष ह्येवानन्दयाति' (तै-उ) इत्यादिश्रुतीरुदाहृत्य 'शासनानुवर्तिनम' इत्युदाहृत (९)द्रमिड-भाष्यविवरणावसरे कारुण्यशब्दार्थमनुग्रहवाचिनिग्रहशब्दप्रतिकोटि

## भावप्रकाशः

प्रसादशब्देनाभिधाय तत्र प्रमाणतया 'मत्प्रसादादवाप्नोति शाश्वतं पदम्' इति गीतोदाहरणेन (वेदी) उदाहृत—'तत्प्रसादात्' इति वचनेऽपि प्रसादशब्दस्यानुग्रहवाचित्वं 'एष ह्येवानन्दयाति' इति श्रुतौ चोदितानुष्ठानरूपशासनानुवृत्तिजन्यमेवानन्दयितृत्वं च व्यक्तीकृतम्। 'एष ह्येवानन्दयाति' इत्यत्र एतच्छब्दस्य 'अस्ति ब्रह्मेति चेद्वेद, इति पूर्वप्रस्तुतवेदनविषयोऽर्थः, एवं तदव्यवहितोत्तर-'यदा ह्येवैष एतस्मिन्' इतिश्रुत्युक्ताविच्छिन्नध्यानविषयार्थ इति विवक्षितमिति 'पराभिध्यानात्' इति सूत्रे 'यदा ह्येवैष एतस्मिन्' इतिश्रुत्यनन्तरं 'एष ह्येवानन्दयाति' इत्युदाहरणेन सूचितम्। 'यदा ह्येवैषः' 'रसꣳ ह्येवायम्' इत्यत्र एतदिदशब्दौ 'आनन्दं ब्रह्मणो विद्वान्' 'अस्ति ब्रह्मेति चेद्वेद' इति पूर्वोक्तवेदितृपरौ। एवं च 'एष ह्येवानन्दयाति' इति मध्यमश्रुत्युक्तसंकल्पः 'रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति पूर्वश्रुत्युक्ते जीवानन्दे द्वारतया प्रथमं ज्ञात उत्तरश्रुत्युक्तार्थमभिसन्धाय प्रयुक्तैतच्छब्दार्थनिष्कर्षणेन अत्रापि द्वारतया निश्चीयते। अत एव 'विज्ञानमानन्दं ब्रह्म' इत्यादि पूर्व(४०८)विचारितश्रुत्यैकरस्यम्। अतस्सिद्धस्यैव साध्यस्यापि भगवच्छासनसिद्धधर्मत्वमुक्तदिशैवोपपादनीयम्। प्रमाणाचार्यसूक्तीनामपार्थकल्पनस्य साधनादिशब्दानां मुख्यार्थकतयैव प्रयुक्तानां स्वेच्छयाऽर्थान्तरकल्पनस्य चायुक्तत्वात्। कारुणिकोदारवत्सलराजभक्त्या तत्प्रीतिं सपाद्य तया पूर्वकृतराजापराधजनिताप्रीतिं विनिवर्त्य राजसमीपे अन्यफलाभिसन्धिविरहपूर्वकराजसेवारूपफलं सम्पादयितरि सापराधपुरुषे अयं राजभक्त्या तं प्रीणयित्वा तत्सेवामवाप इति लोके प्रयोगे भक्तेः करणत्वं राज्ञः संवादातृत्वं च प्रामाणिका अभ्युपगच्छन्ति। न तु राजैव फलकरणम्, राजभक्तिस्तु

**भावप्रकाशः**

अन्यार्थत्वात्प्रसङ्गादुपकारिकेति । भगवत्तद्भक्त्योरुपायत्वं भाष्यादौ राज-दृष्टान्तप्रदर्शनेन तद्वदेवेति निर्णीयते । पूर्वं प्रीतेस्सत्त्वेऽपि अपराधेन निग्रहकाले नाशेन चेतनव्यापारस्य भगवदाराधनताग्राहकप्रमाणैश्च पुन-र्भक्त्या निग्रहानिवृत्तिवत्प्रीत्यादेरप्युत्पत्तेरावश्यकत्वेन प्रीत्यादिद्वारा करण-ताया अवश्यवक्तव्यत्वात् । तमआलोकयोस्सहानवस्थाननियमेन तमसो द्रव्यत्ववादिभिरालोकस्य प्रत्यक्षप्रतिबन्धकत्वेन कल्पितस्य तमसो निवर्तकत्वमात्रं, न तु प्रत्यक्षहेतुत्वमित्यभ्युपगम्यते आलोकतमो-निवृत्त्योस्सहावस्थाननियमात् । न चैवं प्रकृते सम्भवति। अप्रीति-शब्दार्थनिग्रहनिवृत्तिप्रीत्योस्सहावस्थानानियमाभावात्, अप्रीतिनिवृत्ता-वप्यौदासीन्यसम्भवात् । अतएव सर्वत्र भगवता चेतनव्यापारस्य हेतुत्व-मेवोक्त, न तु प्रतिबन्धनिवर्तकत्वमात्रम् । एवं भट्टार्यैः—'त्वदर्चेष्टापूर्ते फलमपि भवत्प्रीतिजम्' इत्युक्तम् । अर्चा—प्रीतिजनकव्यापारः । तदुक्तं वीरराघवाचार्यैः (ता-दी) 'वस्तुतस्तु अदृष्टद्वारकफलसाधनत्वं धर्मत्व' अदृष्टं च लाभसाधनीभूतभगवत्प्रीतिः 'फलमपि भवत्प्रीतिजमिति त्रयीवृद्धाः' इत्याचार्योक्तिः इतीति । एव च इष्टापूर्तयोः प्रीतिद्वारा फलजनकत्वमत्र विवक्षितम् । पूर्वोदाहृतप्रमाणाचार्यसूक्तिषु अनुग्रह-सङ्कल्पस्य हेतुता स्फुटा । प्रायश्चित्तस्य प्रतिबन्धकनिवर्तकस्यापि प्रति-बन्धकनिवृत्त्युद्देशेनैवानुष्ठानं प्रामाणिकम् । राजानं निकटे पश्यन् जम्बीर-फलं दद्यात् 'इत्येव प्रयोगः' न तु 'राज्यार्थी जम्बीरफलं दद्यात्' इति वा 'उपहारं दद्यात्' इति वा प्रयोगस्संप्रतिपन्नः । यदि राज्याहार्यापि करदान एव राज्यं देयमिति महाराजशासनं तदा करदानमपि राज्यदाने सह-कारिकारणं भवत्येवेति राज्यस्योद्देश्यत्वसम्भवेन 'राज्यार्थी करं दद्यात्' इति प्रयोग इष्यते । न च तावता भवत्संमतमनुपायत्वादिघटितं

भावप्रकाशः

व्याजत्वमेतद्दृष्टान्तप्रदर्शनेन सिध्यति। न वा मोक्षस्यानुद्देश्यत्वे 'मुमुक्षुर्ब्रह्मोपासीत' इति वाक्यमुपपन्नं भवति। निर्हेतुककृपास्वातन्त्र्याभ्यां कारणस्यैव व्यवस्थितिर्नानुपायस्येति पूर्वमेव कारणशब्दघटित (अ. सं.) (ल. तं) वचनैर्निरूपितम्। स्वयंप्रयोजनप्रीतिव्यतिरिक्तफलेच्छया प्रवृत्तिस्साध्यधर्मे ज्ञानिनः पूर्वमेव निरूपिता। दयादिगुणानां सार्थक्यं व्यासार्योक्तं प्रागेव प्रदर्शितम्। अतः धर्मशब्दस्य सिद्धसाध्ययोरुभयोरपि श्रेयस्कारणपरतयैव प्रामाणिकैः प्रयुक्तत्वेऽपि सिद्धधर्मे अव्यवहितकारणत्वेन साध्यधर्मे च द्वारव्यवहितकारणत्वेन लोकन्याय सेश्वरवादिप्रामाणिकसर्वसम्मतिप्रमाणाचार्यसूक्तिभिः धर्मत्वोपपादनस्य युक्तत्वेऽपि साध्यधर्मे स्वेच्छया धर्मत्वोपपादनमनुचितमेव।

असकृदावृत्तमेव ज्ञानम् 'नायमात्मा इत्यादिश्रुतितात्पर्यविषयभूतं भक्तिरूपं, तच्च मोक्षायैव विधीयत इति पूर्वमेव निरूपितम्। ज्ञानस्य स्वरूपतो विधानानर्हत्वेऽपि साध्यरूपविशिष्टतया विधानं संभवतीति भाट्टरहस्यादौ स्फुटम्। साध्यरूपं च ज्ञाननिष्ठ आवृत्तिरिति बोधनाय 'आवृत्तिरसकृदुपदेशात्' इति सूत्रम्। अत्र-आवृत्तमित्यनभिधाय 'आवृत्तिः' इत्युक्त्या उपासनं ज्ञानमेवेति सूचितम्। एवं च 'चोदनालक्षणोऽर्थो धर्मः' (१-१-२ जै. सू.)—

अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्। (या. स्मृ.) इत्युक्त धर्मत्वं भक्तर्निर्व्यूढम्। ब्रह्मणोऽपि 'अणुरेष धर्मः' 'साक्षाद्धर्मः' 'कृष्णं धर्मम्' इत्यादिश्रुतिस्मृतिसिद्धं धर्मत्वं न प्रत्याख्यातुमर्हतीति ह. शि. र. मू. दी) निरूपितम्।

प्रवृत्तं च निवृत्तंच द्विविधं कर्म वैदिकम ॥ (वि. पु. ६-४-४२) इत्यनन्तरम्;

भावप्रकाशः

ज्ञानात्मा ज्ञानयोगेन ज्ञानमूर्तिस्स चेज्यते ।

निवृत्ते योगिभिर्मार्गे विष्णुर्मुक्तिफलप्रदः ॥

इत्यत्र ज्ञानयोगेनाप्याराध्यस्य विष्णोर्मुक्तिफलप्रदत्वम् ;—

तस्मात्तत्प्राप्तये यत्नः कर्तव्यः

क्षेत्रज्ञ करणी ज्ञानं करणम्

इत्येतदुत्तरम् ;—यद्विमुक्तिप्रदो योगः . . . . . (वि. पु) ६-८-१०) इत्यत्र योगस्य करणत्वं चोक्तम् । मनुश्च ;—

'धर्मान्नो वक्तुमर्हसि' इति प्रश्नस्य प्रतिवचनोपक्रमे नारायणशब्दार्थनिरूपणेन तस्य आराध्यसिद्धधर्मरूपतां सूचयित्वा—

नैःश्रेयसकरं कर्म विप्रस्येदं निबोधत ॥ (१२-८२)

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ।

अहिंसा गुरुसेवा च निःश्रेसकरं परम् ॥ (८३)

सर्वेषामपिचैतेषामात्मज्ञानं परं स्मृतम् ॥

तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृत यतः ॥

श्रेयस्करतरं ज्ञेयं सर्वदा कर्म वैदिकम् ।

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥

तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ ।

तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

नैःश्रेयसमिदं कर्म यथोदितमशेषतः ।

मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १०७ ॥

एवं यस्सर्वभूतेषु पश्यत्यात्मानमात्मना ।

स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥ (१२५)

इत्यत्र आत्मज्ञानस्य वैदिककर्मत्वं, तस्या एव विद्याया अमृतशब्दार्थ

### भावप्रकाशः

ब्रह्मप्राप्तिकरणत्वं 'धर्मान्नो वक्तुमर्हसि' इत्युपक्रमस्थप्रश्नप्रतिवचन-मुख्यतया मानवशास्त्ररहस्यतां च प्रत्यपादयत्। अष्टाङ्गयोगस्य मोक्ष-साधनता (निवर्तक) कर्मणश्च अहिर्बुध्न्यसंहितायामप्युक्ता। (अ-सं.) वचनानि (१९४) पूर्वमेवोदाहृतानि। एवं वेदादिप्रमाणार्थद्वैविध्यमुक्तं तत्रैव—

यत्पुंसो हितमत्यन्तं सर्वदेशेषु सर्वदा॥
स प्रमाणार्थ इष्टोऽत्र स द्वेधा व्यवतिष्ठते॥
हितं च साधनं चेति तयोस्तत्त्वमिदं शृणु॥ १३॥ ८॥ इति।

एतदुत्तरवचनान्यपि पूर्वमेव (२१) उदाहृतानि। एतेन;— 'एष पन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' इति ऐतरेयोपनिषदुपक्रमश्रुतौ आत्मज्ञानरूपकर्मापि कर्मशब्दार्थः। तस्य पथित्वं मुक्तिकरणत्वरूपं इति विवक्षितमिति सिद्धम्।

न युज्यमानया भक्त्या भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये॥ ३॥ २५॥ १९॥
भाग)

ब्रह्म नारायणं मां यत् ज्ञानेनैवाप्नुयाद्यतिः।
पन्था नान्योऽस्ति विज्ञानादयनाय विपश्चिताम्॥
॥१५॥ ११॥ ८-ल-तं)

इत्यत्र कर्मयोगज्ञानयोगादिसाध्यसमाध्यात्मकसाक्षात्कारस्य मुक्तिकरण-त्वोक्तेश्च—

एवं बृंहणत्वमपि ब्रह्मशदार्थः। तच्च स्वसंकल्पेनाचेतनस्य स्थूलपरिणामहेतुत्वम्; चेतनानां 'स चानन्त्याय कल्पते' (श्वे. ५-९) इत्युक्तज्ञानबृहत्त्वहेतुत्वं च इति (१-१-२) व्यासार्योक्त्या विद्यारूप-कर्मजन्यसंकल्पवत्त्वरूपं बृंहणत्वमपि 'एतद्ब्रह्म' (ऐ-उ) इत्यत्र ब्रह्म-

भावप्रकाशः

शब्देन विवक्षितम् । एवं च 'तं त्वौपनिषदं पुरुषम्' 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्' 'तिष्ठमानस्य तद्विदः' (बृ. ५-९-२६-२८) इत्युपक्रमोपसंहारश्रुत्यैकार्थ्यमुपपद्यते। श्रुत्यर्थश्च पूर्वमेव (४०८) निरूपितः। एतेन ; ज्ञानस्य मुक्तिं प्रति व्यापारवत्कारणत्वं निर्व्यूढम् ।

एव च 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्' (मु. १-२-१३) इति श्रुतिघटकपुरुषब्रह्मशब्दावपि 'अथ परा यया' इत्युपक्रमस्थतृतीयार्थकरणताघटकविद्यासाध्यमुक्तिहेतुसंकल्पवत्परावेवेति 'नास्त्यकृतः कृतेन' इत्यत्र कृतशब्दः केवलकर्मपर एवेति सिद्धम् । एतदेवाभिप्रेत्य मुण्डकश्रुतिः प्रथमसूत्रविषयतया भगवतो पात्ता । अनावृत्तिसूत्रविषयवाक्ये 'ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छां. ८-१५-१) इत्यत्र ब्रह्मशब्दे उक्त एवार्थो विवक्षित इति भगवता तत्सूत्रश्रीभाष्ये व्यक्तीकृतमिति स्फुट विदुषाम् । इत्थं च उपक्रमोपसंहारयोः ब्रह्मणः प्राप्यत्वप्रापकत्वे अभिप्रेते इति उभयोरैकरस्यं सिध्यति । एवं च 'पन्था नकार उद्दिष्टः' (अ-स.) इत्यादिकमपि 'एष पन्थाः' इत्यादिश्रुत्युपबृंहणमेव'

'ऋग्वेदपाठपठितं व्रतमेतत्सुदुश्चरम् । (ना. आ.)

इत्युक्तेः । (मु. ता. दी.) (र. त्र. मी. भा.) उत्प्रेक्षणमन्यत्र पर्यालोचयिष्यते ।

इत्थं च एष पन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' इत्यत्र कर्मव्यापारवत्कारणं ब्रह्म अव्यवहितकारणं कारणमुभयं सत्यमित्येव विवक्षितम् 'तस्मान्न प्रमाद्येत् तन्नातीयात् न ह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः' इति तदनन्तरवाक्यमपि कर्मब्रह्मोभयविषयकमुक्तार्थं द्रढयति ।

### तत्वमुक्ताकलापः

## सा च धीः प्रीतिरूपा

### सर्वार्थसिद्धिः

**भज सेवायामिति** च सामान्यतः पठ्यते। क्वचिद्रूढिक्लृप्तौ तु गौरवमित्यत्राह—**सा चेति**। धीरित्यनेन ब्रह्मविद्यात्वाविरोधस्थापनम्। **प्रीतिरूपेति रूढिनिमित्तसूचनम्**। महनीयविषये

### आनन्ददायिनी

भक्तिशब्दार्थविचारेऽपि न ज्ञानार्थत्वनियम इत्यत्राह—**भजसेवायामिति। रूढिनिमित्तसूचनमिति**-प्रवृत्तिनिमित्तसूचनमित्यर्थः। गच्छतीति गौरित्यत्रेव न व्युत्पादनं बाधकमिति भावः। ननु कथं प्रीतिरूपत्वमात्रेण भक्तिरूपत्वमित्यत्राह—महनीयेति। ननु प्रीति-

### भावप्रकाशः

अत्र भाष्यगीतम्;—(८६ पु.) 'तस्मादुभयविधमार्गात्प्रमादं न कुर्यात्। तत्—पूर्वोक्तमार्गरूपमुभयं नातिक्रामेत्। पूर्वे-महर्षयो व्यासवसिष्ठादयः त-उक्तं पन्थानं नात्यायन्-नात्यक्रामन्। ये तु नास्तिका अत्यक्रामन् ते पराबभूवुः-पराभूताः-पुरुषार्थाद्भ्रष्टाः' इति। अत्र पथिद्वयमप्यत्र विवक्षितमिति स्फुटम्। 'एतत्कर्म' इत्यत्रेव 'अपिसंराधने' 'प्रकाशश्च कर्मणि' इति ब्रह्मसूत्रे(२००)उदाहृतमनुस्मृत्याद्युक्तदिशा ब्रह्मज्ञानमपि विवक्षितम्। ब्रह्मणः पुरुषार्थसाधनतायां बहुप्रमाणसिद्धतया 'एतद्ब्रह्म' इत्यत्र ब्रह्मैव पन्था इत्येव युक्तम्। एवं च गीतायां 'प्रत्यक्षावगमं धर्म्यम्' (९) इत्यत्रापि ब्रह्मविद्याया धर्मत्वमेव विवक्षितम्। 'स्वधर्ममपि चावेक्ष्य' 'धर्म्याद्धि युद्धात्' (२-३१) 'अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामम्' 'ततः

## सर्वार्थसिद्धिः

प्रीतिर्भक्तिः प्रीत्यादयश्च ज्ञानविशेषा इति वक्ष्यते । 'स्नेहपूर्वमनुध्यानं भक्तिः' इति चोपायो विशेष्यते ।

## आनन्ददायिनी

रूपत्वमात्रेण विद्यात्वाविरोध इत्यत्राह—**प्रीत्यादयश्चेति।** अनुपदमेवेति शेषः । ननु भक्तिरुपायश्चेत् सैव स्मृतिरिति भक्तिस्मृत्योः पर्यायता स्यादित्यत्राह—स्नेहेति । स्मृतिमात्रं न भक्तिः, अपि तु स्नेहपूर्विका स्मृतिरित्यर्थः ।

## भावप्रकाशः

स्वधर्मं कीर्तिं च ' इत्यादाविव ' प्रत्यक्षावगमं धर्म्यम् ' इत्येतदुत्तरम् ;—

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥

इत्युक्तेः । अतः श्रुतिशतविहितो मुक्तेरुपायो भक्तिरिति वृत्तिकारद्रमिडभाष्यकारादिसिद्धान्तघण्टापथो निष्कण्टक इति दिक् ॥

गीतासप्तमावतरणभाष्योक्तगतिमभिप्रेत्य तत्रोपात्तं 'उपासनं स्याद्ध्रुवानुस्मृतिः' इत्यत्र स्मृतिशब्दं विहाय अनुस्मृतिशब्दं प्रयोक्तुः वाक्यकृतो ब्रह्मनन्दिनोऽभिप्रेतवचनमुदाहरति — स्नेहपूर्वमनुध्यानमित्यादिना अनुध्यानम्—समाधिमनुसृत्य विद्यमानं समाधिपर्यन्तं ध्यानमित्यर्थः । 'सोऽयं परब्रह्मभूतः पुरुषोत्तमः ; ध्यानार्चनप्रणामादिप्रीतपरमकारुणिकपुरुषोत्तमप्रसादविध्वस्तस्वान्तध्वान्तस्य निरतिशयप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपभक्त्येकलभ्यः' (वे. सं.) इति सूक्तिव्याख्याने व्यासार्यैः 'अनुध्यानशब्देन दिव्यात्मस्वरूपानुसंधानरूपस्समाधिरुच्यते ; स हि ध्यानसाध्यः —

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।

**भावप्रकाशः**

मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ॥
(वि. पु. ६–७–९२)

इति वचनात् इत्यादि ; ध्यानस्य समाधिनिष्पादकत्वमेवेति समाधेरेवाङ्गित्वम्। ध्यानस्यैव प्राधान्य यत्रोच्यते तत्र ध्यानशब्देन समाधिपर्यन्तध्यानं विवक्षितम्। समाधिनिष्ठेन व्युत्थाने क्रियमाणमर्चनादिकमङ्गिकोटिनिविष्टम्' इत्युक्तम्। (वे. सं.) तत्र तत्र अनुध्यानशब्देन समाधिपर्यन्तध्यानं (गी. ७–१) तत्र मूलवचनं च दर्शयता भगवता 'उपासनं स्यात् ध्रुवाऽनुस्मृतिः' (श्री. भा. १–१–१) इति आचार्यटङ्कापरनामधेयब्रह्मनन्दिवाक्येऽपि समाधिपर्यन्तस्मृतिरेव विवक्षितेति बोधितम्। एतेन 'युक्तं तद्गुणकोपासनात्' (वे. स.) इति वाक्येऽपि उपासनं भक्तिरूपमिति तद्विवरणभाष्ये 'अन्तर्गुणामेव देवतां भजते' इत्यत्र भजत इत्यनेन द्रमिडाचार्येण निर्णीतं भगवता [illegible] । इयमेव भक्तिरूपा सेवा इत्यादि (वे. सं.) वाक्येन बोधायनसिद्धान्तोऽयमेवेति व्यक्तीकृतम्। उक्तं च (ता–दी.) व्यासार्यैः—

भज इत्येष धातुर्वै सेवायां परिकीर्तित ।
तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी ॥

इति भगवद्बोधायनवचनम् इति। (एतद्वचनं लैङ्गमार्कण्डेययोरिति सहस्रनामभाष्ये उक्तम) एवं प्रीतिरूपध्यानेन निरतिशयानन्दरूप–दिव्यात्मस्वरूपानुसंधानं निरतिशयप्रियं भवति' इति च व्यासार्यैरुक्तम्।

परविद्या च योगजन्यब्रह्मप्राप्त्युपायभूतमपरोक्षज्ञानम्; तच्च भक्तिरूपापन्नम्' इति; अनवधिकातिशयानन्दस्वरूपस्य हृदयगुहाया-मुपासनप्रकारमुपासनस्य परभक्तिरूपत्वम् (१–२–२३) इति च

## भावप्रकाशः

श्रीभाष्येऽप्युक्तम् । श्रुतौ च (मु. उ.) 'अथपरा' इति परविद्यां प्रस्तुत्य 'ओमित्येवात्मानं ध्यायथ' इति तस्या ध्यानरूपता—

तद्विज्ञानेन परिपश्यन्ति धीराः ।

आनन्दरूपममृतं यद्विभाति ।

इति समाधिरूपता, तत एव —

यमेवैष वृणुते तेन लभ्यः ।

इत्यत्र वरणयिताहेतुगुणवदुपासकपरयच्छब्दे परभक्तिरूपता च प्रतिपादिता । 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः (यो. सू. २–३) इत्यत्र 'अर्थमात्रनिर्भासमिति 'स्वरूपग्रहणम्' (वि. पु.) इत्येतत्समानार्थकम् श्रुतौ 'आनन्दरूपम्' इत्यत्र स्वरूपग्रहणं 'परिपश्यन्ति' इत्यत्र स्वरूपशून्यमिव इत्येतच्च विवक्षितम् । व्यासार्यसूक्तौ अर्थमात्रनिर्भासत्वं उपपादितम् । एवं भट्टार्यैरपि इदमेवोपासनं विपक्रिमं भक्तिरित्युच्यते नान्यत् इति तत्त्वज्ञानसमाधिशरीरो मोक्षार्थः इति चोक्तम् । न्यायपरिशुद्धावर्थमात्रनिर्भासत्वं 'तदेव च निदिध्यासनं प्रीतिरूपं प्रकरणविशेषात्समाधिः' स चाष्टाङ्गशास्त्रेषु शिष्यते, (श. अ. २) इत्यत्र विवक्षितम् । सैव स्मृतिर्वैशद्यातिशयात्समाध्याख्या (त. टी) ध्यानमेव हि यथावस्थितध्येयार्थवैशद्यातिशयात्तन्निगीर्णस्वरूपमिव भवति (श. दू. ११) इति । स्वरूपशून्यमिव–इत्येतदुपपादकम् । एतेन स्वरूपशून्यमिव' इत्यत्र इवशब्देन स्मृतित्वं वर्तत इति सूचितमिति बोधितम् ।

'तस्यैव कल्पनाहीनम्' इति श्लोकश्च इत्थं विवृतो व्यासार्यप्राचार्यैः विष्णुचित्ताचार्यैः—'एवं सोपानक्रमेणारूढदिव्यविग्रहविषयमिदं ध्यानम्' पूर्वत्र 'तस्य चालम्बनवतः' इत्यत्र प्रस्तु-

भावप्रकाशः

तस्सालम्बनो योगः। अस्त्रभूषणाध्याये अस्त्रभूषणमयसर्वशक्त्याश्रय-दिव्यमङ्गलविग्रहः सबीजयोगविषय इति स्पष्टमुक्तं 'सालम्बनो महा-योगस्सबीजः' इत्यादिना। अथ ध्यानपर्यन्तसप्ताङ्गजन्यं निर्बीज-योगाख्यं भगवत्स्वरूपविषयं समाधिमाह—तस्यैवेति। तस्यैव—विग्रहादिविशिष्टतया ध्यानस्यैव कल्पनाः—नामरूपवर्णापक्षयविनाशा-दयः। अयं समाधिः पूर्वाध्याये परविद्येत्युक्तं विवेकजज्ञानम्। इदं च अस्त्रभूषणादिविशिष्टदिव्यविग्रहवत एव भगवतोऽस्त्रभूषणा-ध्यायादिषु—

विभर्ति पुण्डरीकाक्षस्सदैव परमेश्वरः। (वि. पु. १-२२-३७)
कला (मुहूर्तादिमयश्च कालः) काष्ठानिमेषादि।

इत्यादिभिः प्रतिपादितत्वात् अस्त्रादीनां राहित्येनोत्तरोत्तरध्यानस्य वचनम्। अन्यथा तस्याशक्यत्वात्, न तु त्याज्यत्वात्। तेषां अस्त्रादि-विशिष्टविग्रहवत एव प्राप्यत्वात् तत्क्रतुन्यायेन तेषामपि दृढं ध्येयत्ववचनाच्च, इति।

उक्तस्य समाधिरूपज्ञानस्य 'भेषजं भगवत्प्राप्तिः' इत्युक्तां परब्रह्मप्राप्तिमेवाह' इति 'विज्ञानम्' इति श्लोकोऽवतारितः। 'क्षेत्रज्ञः करणी' इति श्लोके 'समाधिरूपज्ञानं करणम्' इत्युक्तम्। समाधिनिरूपणानन्तरश्लोकद्वयस्थविज्ञानज्ञानशब्दौ समाधिपरावेव न तु तज्जन्यज्ञानपराविति विष्णुचित्तार्यैः स्थापितं भवति। तेन 'ऋतम्भरा तत्र प्रज्ञा' (१-४८) इति योगसूत्रभाष्योदाहृते।

आगमेनानुमानेन ध्यानाभ्याससरसेन च।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्।

भावप्रकाशः

इति वचने ध्यानाभ्यासरसः संप्रज्ञातः सबीजयोग इति दर्शितं भवति।
अयमेवार्थः शरणागतिदीपिकायामपि निरणायि—

योग्यं यमैश्च नियमैश्च विधाय चित्त
सन्तो जितासनतया स्ववशासुवर्गाः।
प्रत्याहृतेन्द्रियगणाः स्थिरधारणास्त्वां
ध्यात्वा समाधियुगलेन विलोकयन्ति ॥ (२१ शर-दी)
पद्माभिरामवदनेक्षणपाणिपादं
दिव्यायुधाभरणमाल्यविलेपनं त्वाम्।
योगेन नाथ! शुभमाश्रयमात्मवन्तः
सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम्॥ २२ ॥
मानातिलङ्घिसुखबोधमहाम्बुराशौ
मग्नास्त्रिसीमरहिते भवतस्स्वरूपे।
तापत्रयेण विहतिं न भजन्ति भूयः
संसारघर्मजनितेन समाधिमन्तः ॥ २३ ॥ इति।

ननु श्रीभाष्ये योगजन्यस्यापरोक्षज्ञानस्य ब्रह्मप्राप्त्युपायतोक्ता। तत्र 'तद्रूपप्रत्यये' इत्यनन्तरम् 'विज्ञानं प्रापकम्' क्षेत्रज्ञः करणी ज्ञानम्' इति श्लोकौ विवक्षितौ। अत एव;—

अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्॥ (या-स्मृ-आ-८)

इति वचनम्;

तस्याभिध्यानाद्योजनात्तत्त्वभावात्
भूयश्चान्ते विश्वमायानिवृत्तिः (श्वे-१-२)

इति श्रुतौ; योजनम्—योगः, तत्त्वभावः-साक्षात्कारः इति (१-४-८) व्यासार्योक्तिश्च संगच्छते।

भावप्रकाशः

'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' (यो. सू. ३-३) इत्यत्र वार्तिके 'अस्य च समाधिरूपस्याङ्गस्याङ्गिसंप्रज्ञातयोगादयं भेदो यदत्र चिन्तारूपतया विशेषतो ध्येयस्वरूपं न भासते, अङ्गिनि तु संप्रज्ञाते साक्षात्कारोदये समाध्यविषया अपि विषया भासन्त इति। तथा च साक्षात्कारयुक्तैकाग्र्यकाले संप्रज्ञातयोगोऽन्यदा तु समाधिमात्रमिति विभागः। अष्टानां चाङ्गानां फलद्वयं संप्रज्ञातयोगः तद्वार असंप्रज्ञातयोगश्चेति' इति वदन् विज्ञानभिक्षुः उक्तमर्थं प्रत्यातिष्ठपत्। अतश्चाष्टमाङ्गसमाधेर्मुक्तिसाधनता कथमिति चेत्; न; 'विज्ञानं प्रापकम्' (वि. पु. ६-७-९३) 'क्षेत्रज्ञः करणी ज्ञानं करणम्' (वि. पु. ६-७-९४) इत्यत्र ध्यानविवक्षायाः श्रीभाष्य एव (१-१-१) व्यक्तमुक्ततया—

योगेनाव्यभिचारिण्या धृतिस्सा पार्थ सात्त्विकी (१८-३३)

इति गीताभाष्ये 'योगो मोक्षसाधनभूतं भगवदुपासनम्' इति विवरणेन,

'परया त्वक्षरप्राप्तिः' (वि. पु. ६-५-६५) 'तद्ध्येयं मोक्षकाङ्क्षिभिः' (वि. पु. ६-५-६८) इत्याद्युपक्रमानुसारेण—

मनसा ध्याननिष्पाद्य समाधिस्सोऽभिधीयते। (वि.पु. ६-७-९२)

इत्यनुसारेण च समाधिपर्यन्तध्यानस्यैव तत्रतत्राभिप्रेतत्वेन;—

अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्॥ (या. स्मृ. १-८)

इत्यत्र योगशब्दस्य—

ध्यानयोगेन संदृश्यस्सूक्ष्म आत्माऽऽत्मनि स्थितः।

(या. स्मृ. ३-६४) इत्युपसंहारानुसारेण,

उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः।

ध्यानयोगेन संपश्येद्गतिमस्यान्तरात्मनः (म. स्मृ. ६-७३)

भावप्रकाशः

सम्यग्दर्शनसंपन्नः कर्मभिर्न निबध्यते।

दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥ (म. स्मृ. ६–७४).

इति मनूक्त्यनुसारेण च ध्यानयोगपरतया तदनुसारेण श्रीभाष्ये अपरोक्षज्ञानपदेन ध्यानयोगसाध्यसमाधेरेव संप्रज्ञातयोगसाध्यस्यासंप्रज्ञातस्य श्रीभाष्यकृदभिप्रेतत्वनिर्णयसंभवात् । उक्तं च (वि. पु. ६-७-९३) विष्णुचित्तार्यैः ;—"उक्तस्य समाधिरूपस्य ध्यानस्य 'भेषजं भगवत्प्राप्तिः' (वि. पु. ६-५-५९) इत्युक्तं परब्रह्मप्राप्तिमेव फलमाह ; —विज्ञानमिति" इति। "ब्रह्मविदाप्नोति परम्' (तै. उ. २-१) विद्ययाऽमृतमश्नुते' (ई. उ. ११) 'भक्त्या त्वनन्यया शक्यः' (भगवद्गीता ११-५४) 'भक्त्या मामभिजानाति' (भगवद्गीता १८-५५) इत्यादि 'तत्प्राप्तिहेतुर्ज्ञानं च' (वि. ६-५-६०) इत्यादि" इति च। समाधिरूपं ज्ञानं करणमिति 'समाधिस्सोऽभिधीयते + विज्ञानं प्रापकम्' (वि. पु. ६–७–९२, ९३) इत्यानन्तर्यादयमेवार्थो युक्तः । योगजन्यता च निर्बीजसमाधेस्सबीजपूर्वकत्वादुपपद्यते । तदुक्तम् ;—'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' (यो. सू. १–२०) इति। अत्र (यो. सू. १–१८) असंप्रज्ञातसमाधिनिरूपणानन्तरं भवप्रत्ययरूपमसंप्रज्ञातं (यो. सू. १९) निरूप्य उपायप्रत्ययरूपस्य असंप्रज्ञातसमाधेरुपायक्रमः प्रदर्श्यत इति योगभाष्यवार्तिककारादीनां संमतमेव। समाधिशब्दे योगाष्टमाङ्गं प्रज्ञाशब्दे च संप्रज्ञात इति शब्दद्वयविवक्षितार्थस्तैरुक्तः । नायमर्थस्सूत्रकृदभिप्रेतः ; किं तु 'ता एव सबीजस्समाधिः' (यो. सू. १–४६) 'ऋतंभरा तत्र प्रज्ञा' (यो. सू. १–४८) इत्यभिधाय असंप्रज्ञातनिर्बीजसमाधेर्वक्ष्यमाणतया संप्रज्ञातसबीजसमाधिः ऋतंभरप्रज्ञा च इत्युभयं पदद्वये सूत्रकृतो

## भावप्रकाशः

विवक्षितम् । किं च 'वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः' (यो. सू. १–१७) इत्युक्तस्संप्रज्ञात एव 'क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः' (यो. सू. १–४१) इति सूत्रेणोच्यत इति वाचस्पतिनोक्तम् । एवं च तदनन्तरं 'तत्र शब्दार्थज्ञानविकल्पैस्सङ्कीर्णा सवितर्का समापत्तिः' (यो. सू. ४२) 'स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का' (यो. सू. १–४३) इत्यत्र निर्वितर्कसमापत्तिलक्षणे स्मृतिपरिशुद्धौ इत्यंशं विहाय अवशिष्टभागं 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' (यो. सू. ३–३) इति योगाङ्गसमाधिलक्षणं वदन् सूत्रकार इदमेव संप्रज्ञातसमाधेर्लक्षणमिति द्योतयति । समापत्तिस्साक्षाकारः, स एव संप्रज्ञातयोगः । योगाङ्गसमाधिस्तु न तथेति (यो-वा) विज्ञानभिक्षूक्तौ न किञ्चित्संप्रतिपन्नं मानं पश्यामः । अत एव 'समाध्यभावाच्च' (ब्र. सू २–३–३९) इति ब्रह्मसूत्र(शं)भाष्यभामत्यां 'समाधिमिति संयममुपलक्षयति' यथाऽऽहुः ; 'त्रयमेकत्र संयमः' (यो. सू. ३-४) इति । अत्र निदिध्यासितव्य इति ध्यानोपदेशः, द्रष्टव्य इति समाधेरुपदेशः" इत्यत्र वाचस्पतिना संयमशब्दार्थधारणाध्यानसमाधिसमुदायघटकयोगाङ्गसमाधिर्दर्शनरूपत्वोक्तिः:— 'तदेव+समाधिः' (यो. सू ३–३) इति योगसूत्रोदाहरणं च सङ्गच्छते ।

एतेन योगभाष्यतत्ववैशारद्यां योगाङ्गेषु सर्वत्र विष्णुपुराणमेव प्रमाणयता तेनैव 'तदेव+समाधिः' (यो. ३-३) इति सूत्रे; — "अत्रापि पुराणम्; -'तस्यैव कल्पनाहीनं + सामाधिस्सोऽभिधीयते' (वि. पु. ६-७-९२) इति अष्टाङ्गयोगमुक्त्वा खाण्डिक्याय केशिध्वज उपसञ्जहार 'क्षेत्रज्ञः करणी ज्ञानं करणम्' (वि. पु. ६ ७ ९४) इति" इत्युक्तिर्व्याख्याता । अत्र ध्यानानन्तरसमाधिरेवाष्टाङ्ग-

भावप्रकाशः

योगः । न तु ततोऽतिरिक्तः तत्र तस्यानिरूपणात् । 'तत्प्राप्ति हेतुर्ज्ञानं च' (वि. पु. ६–५–६०) 'द्वे विद्ये वेदितव्ये + परया त्वक्षरप्राप्तिः' (वि. पु. ६-५-६५)

'तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः'।

(वि. पु. ६-५-६८)

'क्लेशानां च क्षयकरं योगादन्यन्न विद्यते ॥' (वि. पु. ६-७-२५)

'योगस्वरूपं खाण्डिक्य श्रूयतां गदतो मम।
यस्मिन्स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ॥

(वि. पु. ६–७–२७)

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः ॥ (वि. पु. ६-७-२८)
विषयेभ्यस्समाहृत्य विज्ञानात्मा मनो मुनिः ।
चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम् ॥' (वि. पु. ६-७-२९)
'आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥' (वि पु. ६-७-३१)
'विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगे योगाग्निदग्धकर्मचयोऽचिरात् ॥'

(वि. पु. ६–७–३५)

इति मोक्षार्थध्यानविधिमुपक्रम्य यमनियमेति योगसूत्रोक्तयोगाष्टाङ्गनिरूपणावसरे धारणासिद्ध्यर्थं शुभाश्रयदिव्यमङ्गलविग्रहमभिधाय—

तद्रूपप्रत्यये चैका संततिश्चान्यनिस्स्पृहा ।
तद्ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते नृप ॥ (वि. पु. ६–७–९१)

इत्युक्तविग्रहध्यानमभिधाय 'तस्यैव कल्पनाहीनम्' (वि. पु. ६-७-९२)

## भावप्रकाशः

इति ध्यानसाध्यं समाधिमभिधाय 'विज्ञानं प्रापकम्' (वि. पु. ६-७-९३) क्षेत्रज्ञः करणी ज्ञानं करणम्' (वि. पु. ६-७-९४) इति श्लोकद्वयेन उपक्रमोक्तसमाधिपर्यन्तध्यानात्मकपरविद्याया मुक्ति-हेतुत्वमुपसंहृतम्।

'द्वे ब्रह्मणी वेदितव्ये' 'मन एव मनुष्याणां' इति मैत्रायणीयोपानिषद्वाक्याभिधानपूर्वं इत्थं वदता पराशरेण 'प्राणा-यामः प्रत्याहारो ध्यानं धारणा तर्कः समाधिः षडङ्ग इत्युच्यते योगः' मै. उ. ६-१८) इति मैत्रायणीयश्रुतौ तर्क इत्यत्र यमनियमासन-त्रयं विवक्षितं, क्रमो न विवक्षितः, योगसूत्रोक्तक्रम एव श्रुतावनुसन्धेय इति व्यवस्थापितम्। एवं च श्रुतौ पूर्वमङ्गतयोक्तसमाधेरेव—

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते॥
(मै. उ. ६-३४)

इत्युत्तरत्र समाधिशब्दार्थतया तत उत्कृष्टसमाध्यनुक्त्या चाङ्ग-समाध्यतिरिक्तसमाधिकल्पनं श्रुतिविरुद्धत्वादुपेक्ष्यमिति च सूचितम्।

उपनिषत्सु ध्यानविधेरेव स्फुटं सद्भावमभिसंधाय परविद्यां प्रस्तुत्य तद्ध्येयं मोक्षकाङ्क्षिभिः' (वि. पु. ६-५-६८) इत्युक्तम्। 'षडङ्ग इत्युच्यते योगः' (मै. उ. ६-१८) इति श्रुतावङ्गनिर्णयार्थं समाध्यव्यवहितपूर्वध्याने षण्णामङ्गत्वोक्त्या योगसूत्रादौ संप्रज्ञाता-संप्रज्ञातत्वाभ्यां सबीजनिर्बीजत्वाभ्यां व्यवहृतयोः ध्यानानन्तरसमाधि-रूपता अङ्गिता अङ्गाङ्गिसमुच्चयेनाष्टाङ्गयोगव्यवहारश्च इति सूच्यते। 'योगश्चित्तवृत्तिनिरोधः' (यो. सू. १-२) 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेः धर्ममेघस्समाधिः' (यो. सू. ४-२९)

भावप्रकाशः

इत्युपक्रमोपसंहारसूत्रद्वयपर्यालोचनायां समाधिरेव योगो मुक्तिहेतुः न तु तज्जन्यज्ञानमिति प्रतीयते । तथा च 'अथ योगानुशासनम्' (यो. सू. १-१) इत्यत्र भाष्यम् 'योगस्समाधिः एकाग्रे संप्रज्ञातः निरुद्धमसंप्रज्ञातः' इति । 'त्रयमेकत्र संयमः' (यो. सू. ३-४) इत्यनन्तरम् 'तज्जयात्प्रज्ञालोकः' (यो. सू. ३-५) इत्यत्र प्रज्ञालोकः सबीजसमाधौ (यो. सू. १-४६) संप्रज्ञाते 'निर्विचारवैशारद्येऽध्यात्म-प्रसादः' (यो. सू. १-४७) इत्युक्त आत्मनिष्ठः प्रसादः (प्रज्ञालोकः भाष्योक्तः) प्रज्ञा च या' 'ऋतंभरा तत्र प्रज्ञा' (यो. सू. १-४८) इति सूत्रोक्ता सैव विवक्षितेति संयमान्तर्गतस्संप्रज्ञातसमाधिरिति सिध्यति । 'ऋतंभरा तत्र प्रज्ञा' (यो. सू. १-४८) इति सूत्रभाष्यो-दाहृते—

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥ (यो-भा)

इति वचने श्रवणमननिदिध्यासननिष्ठस्य असंप्रज्ञातसमाधि-रूपोत्तमयोगलाभोक्त्या ध्यानाभ्यासरसः संप्रज्ञातसमाधियोग इति प्रतीयते । 'त्रयमेकत्र संयमः' (यो. सू. ३-४) 'परिणामत्रयसंयमादतीतानागतज्ञानम्' (यो. सू. ३-१६) इति सूत्रयोर्मध्ये 'त्रयमन्तरङ्गं पूर्वेभ्यः' (यो. सू. ३-७) 'तदपि बहिरङ्गं निर्बीजस्य' (यो. सू. ३-८) इत्यनन्तरं सूत्रत्रयेणोक्ता निरोधसमाध्येकाग्रतापरिणामा अपि संयम-संबन्धिन एवेति प्रतीयते । 'तदपि बहिरङ्गं निर्बीजस्य' (यो. सू. ३-८) इति सूत्रं तु निर्बीजस्यापि योगाङ्गसूत्राभिप्रेतस्यासंप्रज्ञातस्य संप्रज्ञात-घटितत्रयं बहिरङ्गमित्येतत्परम् । अतः 'व्युत्थाननिरोधसंस्कारयोरभि-भवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः' (यो. सू. ३-९)

## भावप्रकाशः

इत्युक्तनिरोधरूपासंप्रज्ञातस्यापि योगाख्यसूत्रोक्तसमाधिता सिध्यति । 'तत्र प्रत्ययैकतानता ध्यानम्' (यो. सू. ३–२) इत्यत्र 'प्रत्ययस्यैकतानता—सदृशः प्रवाहः (भा) इत्यस्य एकाग्रता (त–वै) इति विवरणकरणेन ; 'ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता-परिणामः' (यो. सू. ३–१२) इत्यत्रापि संप्रज्ञातपर्यन्तध्यानमेव विवक्षितमिति प्रतीयते । (यो. सू. ३–१०) निरोधपरिणाममसंप्रज्ञातसमाधिपरिणाममभिधाय 'सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः' (यो. सू. ३–११) इति सूत्रं 'संप्रज्ञातपरिणामावस्थां चित्तस्य दर्शयति' इत्यवतारयन् वाचस्पतिरपि तदुत्तरसूत्रोक्तैकाग्रतापरिणाममपि संप्रज्ञातानुबन्धिनमावेदयति । 'अथ योगानुशासनम्' (यो. सू. १–१) इत्यत्र भाष्यकारोऽपि एकाग्रनिरुद्धयोः संप्रज्ञातासंप्रज्ञातरूपतां स्पष्टयति । 'आवृत्तिरसकृदुपदेशात्' (ब्र. सू. ४–१–१) 'ध्यानाच्च' (ब्र. सू. ४–१–८) 'यत्रैकाग्रता तत्राविशेषात्' (ब्र. सू. ४–१–११) इति सूत्रयन् व्यासोऽपीममेवार्थमाभिप्रैति । 'यत्रैकाग्रता' (ब्र. सू. ४–१–११) इति सूत्रे समाधिपरिणामस्य विवक्षितत्वात् एकाग्रतापरिणामाविनाभावात्समाधिपरिणामस्य 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघस्समाधिः' (यो. सू. ४-२९) इत्यनन्तरम् 'ततः क्लेशकर्मनिवृत्तिः' (यो. सू. ४–३०) 'तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम्' (यो. सू. ४–३१) इति सूत्रयोः असंप्रज्ञातसमाधेरेव संयमान्तर्गतस्य क्लेशकर्मनिवर्तकत्वस्य तदा ज्ञानानन्त्यस्य च प्रतिपादनेन संयमान्तर्गतसमाधेरेव मुक्तिहेतुत्वं सिद्धम् । 'सर्वान् धर्मान् ज्ञेयान् मेहति वर्षति प्रकाशेनेति धर्ममेघ इत्युच्यते' इति वाचस्पतिः । धर्ममेघशब्देन पूर्णज्ञानदीप्तिहेतुत्वं दर्शितम् ।

भावप्रकाशः

एतेन 'विवेकख्यातिरविप्लवा हानोपायः (यो. सू. २–२६) 'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः' (यो. सू. २–२८) इत्यत्र संयमव्यतिरिक्तस्य किंचित्ज्ञानदीप्तिहेतुत्वं 'तज्जया त्प्रज्ञालोकः' (यो. सू. ३–५) इत्यत्र संयमान्तर्गतसंप्रज्ञातसमाधेस्ततोऽधिकप्रज्ञालोकहेतुत्वं च विवक्षितमिति बोध्यम्। 'ज्ञानदीप्तिः' (यो. सू. २–२८) 'प्रज्ञालोकः' (यो. सू. ३–५) 'ज्ञानानन्त्यम्' (यो. सू. ४–३१) इत्युक्त्या जीवगतधर्मभूतज्ञानपूर्णविकास एव मुक्तिः इति 'क्लेशकर्मनिवृत्तिः (यो. सू. ४–३०)' 'तदा सर्वावरणमलापेतस्य ज्ञानस्य' (यो. सू. ४–३१) इत्युक्त्या कर्मणां धर्मभूतज्ञानावरणत्वं संकोचकत्वम् इति विवक्षितमिति प्रतीयते। एतेन 'ततः क्षीयते प्रकाशावरणम्' (यो. सू. २–५२) 'बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः' (यो. सू. ३–४३) इत्यत्राप्यावरणपदार्थः क्लेशकर्मरूप एवेति सिद्धम्। ज्ञानानन्त्यं इत्यनेन 'स चानन्त्याय कल्पते' इति (श्वे. ५–९) श्रुतौ ज्ञानानन्त्यं विवक्षितमिति बोधितम्।

एतेन—

'यथाऽग्निना हेम मलं जहाति
ध्मातं पुनः स्वं भजते च रूपम्।
आत्मा च कर्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम्॥

(श्री भाग ११–१४–२५)

इत्यत्र आत्मशब्दः प्रागुक्तदिशा धर्मभूतज्ञानघटितव्यापकताश्रयजीववचनः। भक्तिः—असंप्रज्ञातसमाधिरूपा इति बोधितम्।

भावप्रकाशः

बन्धदशायां धर्मभूतज्ञानविकासस्य चित्तहेतुकत्वाच्चित्तवृत्तित्वेन सूत्रेषु व्यवहारः। यद्वा चित्तशब्दः करणप्रत्ययान्तो मनोवाची योगरूढः। भावप्रत्ययान्तस्तु धर्मभूतज्ञानवाची यौगिकः, इति सूत्रेषु यथासंभवं विवक्षाऽवसेया। अतो योगसूत्रघटकसमाधिशब्दास्सर्वेऽपि योगाङ्ग-समाधिमेवाभिदधति। अर्थभेदस्य सूत्रतो निश्चयासंभवात्, लाघवाच्च। सूत्रक्रमपर्यालोचनायां एकादशानामेकार्थत्वमेव प्रतीयते।

प्रथमे पादे (यो. सू. १७–१८) संप्रज्ञातासंप्रज्ञातद्वयनिरूपणा-नन्तरम् तत्पादान्ते (यो. सू. ४६, ५१) सबीजनिर्बीजसमाध्योः क्रमिकयोरभिधानेन मध्ये 'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' (यो. सू. २०) इति सूत्रे असंप्रज्ञातनिर्बीजसमाधेस्संप्रज्ञातसबीजसमा-धिपूर्वकत्वं विवक्षितमिति व्यक्तम्।

अत्र 'ईश्वरप्रणिधानाद्वा' (यो. सू. १–२३) इति सूत्रे असं-प्रज्ञातसमाधेरीश्वरप्रणिधानसाध्यत्वमभिहितमिति ; द्वितीये 'तपस्स्वाध्या-येश्वरप्रणिधानानि क्रियायोगः' (यो. सू. २–१) 'समाधिभावनार्थः क्लेशतनूकरणार्थश्च' (यो. सू. २–२) इत्यत्रापि प्रथमपादान्त्यसूत्रोक्त-निर्बीजसमाधेरीश्वरप्रणिधानहेतुकत्वं विवक्षितमिति स्फुटम्।

'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाव-ङ्गानि' (यो. सू. २-२९) इति सूत्रेऽपि पूर्वोक्त एव समाधिर्विवक्षितः, न तदतिरिक्तः ; पूर्वोपस्थितं परित्यज्य अन्यस्योपस्थापकप्रमाणाभावात्।

'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः' (यो. सू. २-२८) इत्यनन्तरम् अष्टानामङ्गत्वोक्तिमात्रमपि पूर्वोक्तसबीजनिर्बीज-समाधिव्यातिरिक्तस्य योगशब्दार्थत्वाभ्युपगम एव स्वरसमित्येतन्मात्र-पर्यालोचनपरैस्तथैवाभ्युपेयं प्रसज्यते। न च तथाऽभ्युपगतं योगभाष्य-कारादिभिः।

भावप्रकाशः

अतो 'यमनियम' (यो. सू. २–२९) इत्यादिसूत्रे पूर्वोपस्थित एव समाधिर्विवक्षितः। अनन्तरम् 'समाधिसिद्धिरीश्वरप्रणिधानात्' (यो. सू. २-४५) इत्यत्र नियमान्तर्गतेश्वरप्रणिधानसाध्यत्वं योगाङ्ग-समाधेरुक्तम्।

'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' (यो. सू. ३-३) इति तल्लक्षणम्, 'सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधि-परिणामः' (यो. सू. ३–११) इति तत्परिणामस्वरूपम्, अनन्तरं संयमजासिद्धीश्च निरूप्य 'जन्मौषधिमन्त्रतपस्समाधिजास्सिद्धयः' (यो. सू. ४–१) इति पूर्वोक्तसिद्धीनां योगाङ्गसमाधिजत्वं दर्शयित्वा 'प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघस्समाधिः' (यो. सू. ४–२९) इति योगाङ्गसमाधिरुपसंहृतः।

एवं च सूत्रघटकास्समाधिशब्दा एकादश न योगाङ्गव्यति-रिक्तबोधका इति पराशरेण निर्णितं भवति।

आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते। (वि. पु. ६-७-३१)

इत्यत्र ध्यानानन्तरसमाधेरेव विवक्षितत्वात्।

एतेन 'युजिर् योगे' इति धातोः योगशब्दव्युत्पत्त्यङ्गीकारेऽपि 'युज समाधौ' इत्यर्थ एव पर्यवसानम्। 'योगश्चित्तवृत्तिनिरोधः' (यो. सू. १–२) इति सूत्रे वृत्तिसामान्यनिरोधो न विवक्षितः, किं तु बाह्यवृत्तीनाम्। योगशब्दार्थश्च नाभावपर्यवसितः। 'तदा द्रष्टुस्स्व-रूपेऽवस्थानम्' (यो. सू. १–३) इत्यत्र स्वरूपशब्दार्थोऽपि 'द्रष्टुः' इत्यत्र प्रकृत्यर्थः बाह्यव्यातिरिक्तात्मदर्शनात्मकचित्तवृत्तिरेव इति च बोधितम्। उदाहृतमनुयाज्ञवल्क्यवचनानुगुण्यादप्ययमेवार्थो युक्तः।

### भावप्रकाशः

तदेतत्सर्वमभिसन्धाय भगवतोक्तं श्रीभाष्ये 'आसीनस्संभवात्' (ब्र. सू. ४-१-२) इत्यधिकरणे—'उपास्तिरपि तदेकार्थ एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात्' इत्यादि। अत्र एकाग्रचित्तवृत्तिशब्दप्रयोगेण ब्रह्मसूत्राणां योगविषये योगसूत्रैकरस्यं सूचयता तस्मिन्नेवाधिकरणे 'यत्रैकाग्रता तत्राविशेषात्' (ब्र. सू. ४-१-११) इत्यत्र समाधिद्वयविवक्षा व्यञ्जिता। अत एव 'तत्कारणं सांख्ययोगाधिगम्यम्' (श्वे: ६ अ.) इति श्रुतिस्सङ्गच्छते। 'अथातो ब्रह्मजिज्ञासा' (ब्र. सू. १-१-१) इत्युपक्रम्य 'यत्रैकाग्रता तत्राविशेषात्' (ब्र. सू. ४-१-११) इति वदतो व्यासस्य 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य.' (बृ. उ. २-४-५) इत्यत्र विचारानन्तरकालिकं ध्यानं समाधिपर्यन्तं विवक्षितम्। अत एव 'आगमेनानुमानेन' इति (यो. भा.) उदाहृतवचनमपि सङ्गच्छते। मैत्रायणीयोपनिषदि—

यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति॥ (मै. उ. ६-३४)
स्वयोनावुपशान्तस्य मनसस्सत्यकामतः।
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः॥ (मै. उ. ६-३४)

इत्यत्र चित्तस्य परमात्मनि उपशान्तिः बाह्यविषयवृत्तिक्षयश्चेति द्वयं विवक्षितमिति सत्यकामत इत्यत्र परमात्मपरसत्यशब्देन इन्द्रियार्थशब्देन च बोधितम्। सत्यकामत इत्यन्तं पूर्वान्वितार्थकम्। न विद्यते ऋतं परमात्मा विषयतया यासां वृत्तीनां ता अनृता इत्यर्थः।

संमासक्त यथा चित्तं जन्तोर्विषयगोचरे।
यद्येवं ब्रह्मणि स्यात्सक्तो न मुच्येत बन्धनात्॥
(मै. उ. ६-३४)

भावप्रकाशः

इत्युत्तरश्रुत्या अपि पूर्वत्र यथोक्त एवार्थः ।

अत्र बन्धशब्दार्थः शुभाशुभकर्मेति—

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।

प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमक्षय्यमश्नुते ॥ (मै. उ. ६-३४)

इत्येतदव्यवहितपूर्वश्रुतौ व्यक्तम् । एतच्छ्रुतिमभिप्रैति 'ततः क्लेशकर्मनिवृत्तिः' (यो. सू. ४–३०) इति योगसूत्रम् ।

लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् ।

यदा यात्यमनीभावं तदा तत्परमं पदम् ॥

तावन्मनो निरोद्धव्यं हृदि यावद्गतक्षयम् ।

एतज्ज्ञानं च मोक्षश्च शेषास्तु ग्रन्थविस्तराः ॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।

बन्धाय विषयासक्तं मोक्षे निर्विषयं मनः ॥ (मै. उ. ६-३४)

इति सिद्धान्तबिन्दुटीकोदाहृतैतदुत्तरश्रुतिषु अमनीभावः बहिर्विषयकवृत्तिविशिष्टमनोऽभावः बहिर्विषयकवृत्त्यभावपर्यवसितः । निर्विषयत्वमपि पूर्वोक्तवृत्तिशून्यत्वम् । मोक्षश्च 'अथ मर्त्योऽमृतो भवति' (क-६-१४) इति श्रुतेः—योग–मूर्धन्यनाडीगतिप्रतिपादनश्रुति–(क-६-११, ६-१६) द्वयमध्यस्थाया अस्या एव (६-४-७-बृ) गतिप्रतिपादकश्रुतेः पूर्वस्याश्च तात्पर्यमनुसृत्य व्यासेन 'अमृतत्वं चानुपोष्य' इति सूत्रखण्डे समाधिशालिनो व्यवस्थापितः ।

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ॥ (मै. उ. ६-३४)

भावप्रकाशः

इति पूर्वोदाहृतात्रत्यश्रुतौ असंप्रज्ञातसमाधावन्तःकरणवृत्तिर्निर्मत्सराणां विदुषां स्फुटा । यद्यपि—(पं-द) ध्यानदीपे—

'बहुव्याकुलचित्तानां विचारात्तत्त्वधीर्न हि ।
योगो मुख्यस्ततस्तेषां धीदर्पस्तेन नश्यति ॥ ३२ ॥
अव्याकुलधियां मोहमात्रेणाच्छादितात्मनाम् ।
साङ्ख्यनामा विचारस्स्यात् मुख्यो भवति सिद्धिदः ॥ ३३ ॥
तत्कारणं साङ्ख्ययोगाभिपन्नमिति हि श्रुतिः ॥ ३५ ॥
निर्गुणोपासनं पक्कं समाधिस्स्यात्ततश्शनैः ।
यस्समाधिर्निरोधाख्यस्सोऽनायासेन लभ्यते ॥ २६ ॥
निरोधलाभे पुंसोऽन्तरसङ्गं वस्तु शिष्यते ।
पुनःपुनर्वासितेऽस्मिन् वाक्याज्जायेत तत्वधीः' ॥ १२७ ॥

इत्युक्तार्थस्सिद्धान्तलेशसंग्रहे निरूपितः ।

गीताविवरणे-(६-अ. २५ श्लो.) मधुसूदनसरस्वतीभिस्तु "असंप्रज्ञातसमाधिस्थस्सन् किंचिदप्यात्मानमनात्मानं वा न चिन्तयेत्—न वृत्त्या विषयीकुर्यात् । अनात्माकारवृत्तौ व्युत्थानमेव स्यात् । आत्माकारवृत्तौ च संप्रज्ञातस्समाधिरित्यसंप्रज्ञातसमाधिस्थैर्याय कामपि चित्तवृत्तिं नोत्पादयेदित्यर्थः" इति '(६ अ. २७ श्लो.) एतादृशयोगः श्रुत्या प्रतिपादितः—

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥'

इति, 'एतन्मूलकमेव योगश्चित्तवृत्तिनिरोधः (यो. सू. १-२) इति सूत्रं' इति, 'समाधिः स्वयं तदन्तःकरणेन गृह्यते (मै) इति अन्तःकरणेन निरुद्धसर्ववृत्तिकेनेत्यर्थः' (६ अ. २१ श्लो.) इति, 'चित्तनाशस्य

## भावप्रकाशः

साक्षिणस्सकाशात्तदुपाधिभूताचित्तस्य पृथक्करणात्तददर्शनस्य तस्योपायद्वयं एकोऽसंप्रज्ञातसमाधिः। संप्रज्ञातसमाधौ हि आत्मैकाकारवृत्तिप्रवाहयुक्तमन्तःकरणतत्त्वं साक्षिणाऽनुभूयते। निरुद्धसर्ववृत्तिकं तूपशान्तत्वान्नानुभूयत इति विशेषः। द्वितीयस्तु विचारः। तत्र प्रथमं हैरण्यगर्भाः प्रतिपेदिरे। शङ्करभगवत्पूज्यपादमतोपजीविनस्त्वौपनिषदा द्वितीयमुपेयुः। ब्रह्मसाक्षात्काराय न योगे प्रवर्तन्ते परमहंसाः। विचारेणैव चित्तदोषनिराकरणेन तस्यान्यथासिद्धत्वात् (६ अ. ९५ श्लो.)'' इत्युक्तम्; तथाऽपि गीताशङ्करभाष्योत्कर्षदीपिकायाम्— 'द्विविधस्समाधिः संप्रज्ञातोऽसंप्रज्ञातश्चेति। तत्र ध्येयैकाकारचित्तवृत्तिर्भेदेन कथञ्चिज्ज्ञायमाना आद्यः, कथमपि पृथगज्ञायमाना द्वितीयः' (६ अ. २० श्लो.) इत्युपक्रम्य 'एतेन योगः प्रत्युक्तः' (ब्र. सू. २-१-३) इति सूत्र— (शं) भाष्यमुदाहृत्य तदनुसारेण भगवत्पादमतेन परमहंसानां विचाराधिकारिणामपि श्रुत्यविरोधितत्त्वज्ञानसाधनयोगाभ्यासप्रवृत्तिः" (६ अ. २९ श्लो.) इति साधितम्। 'तत्कारणं साङ्ख्ययोगाभिपन्नम्' (श्वे. ६-१३) इति श्रुतेरधिकारिद्वयपरत्वमयुक्तमिति एतदाशयः।

सदानन्दवेदान्तसारादौ 'निरोधरूपेण परिणामोऽप्यसंप्रज्ञातः। स केवलात्माकारवृत्तिरूपः। मनोवृत्तिभानाभावे समानेऽपि मनोवृत्तिसत्त्वासत्त्वाभ्यामसंप्रज्ञातसमाधिसुषुप्त्योर्भेदात्' इत्युक्तम्। ब्रह्मानन्दसरस्वतीभिश्च 'असंप्रज्ञातसमाधेश्श्रुतिस्मृतिसिद्धत्वाच्च' इति (सि. बि. २२ पृ.) वाक्यं मधुसूदनगीताविवरणानुरोधेन प्रथमं व्याख्याय, अथवेत्यारभ्य "न च नियामकाभावेन न तस्य शुद्धचिद्विषयकत्वसंभव इति वाच्यं, संप्रज्ञातसमाधिपाटवस्यैवानात्माकारसर्वनिरोधेच्छासहितस्य तादृशनिरोधहेतुत्वात् 'समाधिनिर्धूतमलस्य चेतसः' (मैत्र्युपनि.

**भावप्रकाशः**

६–३४) इत्यादिश्रुत्या ‘आत्मसंस्थं मनः कृत्वा’ (भगवद्गीता ६-२५) इत्यादिस्मृत्या च तथा प्रत्ययात्, निरोधविवेकज्ञानयोः पश्चात्केवलात्म-साक्षात्कारस्य पूर्वोक्तकल्पनापेक्षया तयोरेव तत्साक्षात्कारत्वकल्पनस्य युक्तत्वात्। केवलात्मजिज्ञासासहितस्य विवेकज्ञानहेतोरेव विवेकोपलक्षितशुद्धात्मसाक्षात्कारहेतुत्वसंभवात्। ‘मोक्षे निर्विषयं स्मृतम्’ इति स्मृतिस्तु असंप्रज्ञातसमाधेरात्मान्याविषयकत्वबोधिनी। एवं योगसूत्राण्यपि बोध्यानि। संक्षेपशारीरके अत एवोक्तं ‘आत्मानात्माकारं स्वभावतोऽवस्थितं चित्तम्। आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत’ इति। न चैवं निरोधस्य संप्रज्ञातसमाधितो विशेषानुपपत्तिरिति वाच्यम्। निरोधरूपपरिणामविशेषत्वप्रमाणजन्यत्वाभ्यां ततो विशेषात्। अस्मिन् पक्षे निरोधस्यैव वाक्यगतपदार्थस्मृतिहेत्वनुभवत्वेन वाक्यजन्यत्वेन प्रमाणजन्यता” इति व्याख्याय, गीताटीकायां तु “निरोधसमाधिरूपस्य योगस्य पुण्यविशेषद्वारा यथार्थप्रत्यक्षहेतुत्वात्परमार्थात्मप्रत्यक्षहेतुता” इत्युक्तम्। लघुचन्द्रिकायामपि दृश्यत्वहेतूपपत्तौ “मोक्षे निर्विषयमित्यनेन मोक्षसाधनरूपेण परिणतमनसोऽनात्मविषयकत्वनिषेधात्” इत्युक्तम्।

अत्र उदाहृतश्रुत्यनुसारेण योगसूत्रकृतोऽप्यसंप्रज्ञातसमाधेरपि वृत्तिरूपत्वं विवक्षितमिति स्फुटम्। अतः ‘यत्रैकाग्रता तत्राविशेषात्, (ब्र. सू. ४–१–११) इति सूत्रे असंप्रज्ञातसमाधिः चित्तवृत्तिरूपा मुक्तिहेतुरित्येव विवक्षितम्।

‘तस्याभिध्यानाद्योजनात्तत्त्वभावात्’ (श्वे. १–१०) इति श्रुतिः ‘योगजन्यमपरोक्षज्ञानम्’ इत्युदाहृतश्रीभाष्ये योगशब्दस्य ध्यानार्थकत्वेन ‘तत्त्वभावात्’ इत्यस्य परसम्मतार्थमभ्युपेत्य च तदनु-

### भावप्रकाशः

गुणं व्यासार्यैर्विवृतम् । वस्तुतस्तु—पराशरोक्तदिशा, अभिध्यानं—दिव्यमङ्गलविग्रहविशिष्टध्यानं सालम्बनयोगरूपं सबीजं योजनम् । निर्बीजयोगः असंप्रज्ञातसमाधिः, तत्त्वभावशब्दो न साक्षात्कारे रूढः ; नापि भावशब्दस्तथा ; न च योगेन तदर्थे प्रसिद्धः, इति (ल. चं. ८९१ पृ) परसम्मतार्थो नात्र विवक्षितः । किं तु तत्त्वशब्दः परमार्थवचनः । भावशब्दोऽभिप्रायवाची । तस्य 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे १—१०) इति पूर्वार्धोक्तप्रधानजीवेशितुः महाराजस्य तत्त्वभावात् अभिध्यानजयोगजन्यात् परमार्थसङ्कल्पात् सर्वमायानिवृत्तिः इत्यर्थः । तत्त्वशब्दोपादानं परोक्तदिशा ईशसङ्कल्पो मायिक इति भ्रमव्युदासाय मायामूलकस्य मिथ्यापरिणामस्य मायानिवृत्त्यव्यवहितपूर्वत्वासम्भवबोधनाय च । तस्येति अभिध्यानात् योजनात् इति पदद्वयमात्रान्वितार्थकं वा । तस्मिन् पक्षे तत्त्वशब्देन द्वितीयाध्यायैकरस्यबोधनेन (४१२ पृ. सर्वार्थसिद्धिभावप्रकाशे) सिद्धोऽर्थः पूर्वमेवोक्तः । पूर्वं 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे. १-६) इति जीवेशभेदज्ञानस्यादृष्टद्वारा अमृतत्वप्राप्तिहेतुत्वमभिधाय अत्र प्रधानजीवेश्वरत्वविशिष्टैकदेवयोगस्यादृष्टद्वारा मुक्तिहेतुत्वोक्त्या द्वितीये 'त्रिरुन्नतं प्राप्य' (श्वे. २-८) इत्यादिना योगमभिधाय, 'यदात्मतत्त्वेन तु ब्रह्मतत्त्वम्' (श्वे. २-१५) इति मन्त्रे अस्यैवार्थस्य (३२६ पृ. सर्वार्थसिद्धिभावप्रकाशे) पूर्वमुपपादितदिशा स्थिरीकरणाच्च सगुणात्मयोग एव मुक्तिहेतुरिति स्थापितम् ।

'यैस्स्वधर्मपरैर्नाथ नरैराराधितो भवान् ।
ते तरन्त्यखिलामेतां मायामात्मविमुक्तये ॥ (वि. पु. ५-३०-१६)
निवृत्ते योगिभिर्मार्गे विष्णुर्मुक्तिफलप्रदः (वि. पु. ६-४-४२)

भावप्रकाशः

इत्यादिकमेतदुपबृंहणम्। एतदेवाभिप्रेत्य नायकसरे (४१ श्लो.) वक्ष्यते। 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे. १-१०) इत्येतदपि प्रस्तुतयोगबलान्निश्शेषमायातरणमेव निर्दिशतीति अत्र। स्थूलशरीरवियोगकाले मायाशब्दार्थकतिपयप्रकृतितरणं, प्रकृतेः (प्राकृतलोकानाम्) अवसाने सूक्ष्मशरीरवियोगसमये विश्वप्रकृतितरणम्, अप्राकृतदेशगमनसमये प्राकृतलोकनिवृत्तिरेवात्र विवक्षितेति 'आत्मविमुक्तये' इति वदता (वि. पु. ५-३०-१६) पराशरेण स्थापितम्। एतदेवाभिप्रेत्य (४–३–११) श्रीभाष्ये निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यत इति परं ज्योतिरुपसम्पद्य बन्धनिवृत्तिरूपा मुक्तिः ज्ञानानन्दादि गुणानामात्मनि सङ्कुचितानां परं ज्योतिरुपसम्पद्य विकासरूपाविर्भावः (४–४–२–३) इति च भगवतोक्तम्। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथसम्पत्स्ये' इत्युक्ता सम्पत्तिर्गत्यनन्तरमेवेति 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य' इति श्रुत्यैव निर्धारितमिति 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' इत्युत्तरं सद्विद्योक्तामुत्क्रान्तिं गतिं च पादद्वयेन निरूप्य 'सम्पद्याविर्भावस्स्वेन शब्दात्' इति सूत्रयता व्यासेन स्थापितम्। योगसूत्रकृतोऽपि सगुणात्मवाद एव विवक्षितः।

अत एव सूत्रेषु 'द्रष्टृदृश्ययोस्संयोगो हेयहेतुः' (यो. सू. २-१७) 'द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् (यो. सू. ४-२३)' इत्यत्र दृक्शब्दं विहाय द्रष्टृशब्देन पुरुषनिर्देश उपपद्यते। 'द्रष्टा दृशिमात्रश्शुद्धोऽपि प्रत्ययानुपश्यः' (यो. सू. २-२०) इति सूत्रे धर्मसामान्यस्य द्रष्टरि निषेधो न विवक्षित इति हयशिरोरत्नभूषणदीधितौ निरूपितम्।

'सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्' (यो. सू. ४-१८) इत्यत्र निषेध्यतया विवक्षितः परिणामस्संकोच-

भावप्रकाशः

विकासात्मक एव । तत्पूर्वम्; 'परिणामैकत्वाद्वस्तुतत्त्वम्' (यो. सू. ४-१४) इत्यत्र इन्द्रियभूताद्यात्मकपरिणामस्यैव तद्भाष्यादावप्युक्तेः 'तदुपरागापेक्षत्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम्' (यो. सू. ४-१७) इत्यत्र वस्तुविषयचित्तोपरागस्य सङ्कोचविकासात्मकत्वेन उत्तरसूत्रे तज्जातीयस्यैव प्रसक्तेः । अन्यस्याप्रसक्त्या निषेधविवक्षाया अनुचितत्वात् ।

तत्प्रभोः इत्यनेन तत्तत्पुरुषज्ञानं तत्तत्पुरुषेणैव सदा ज्ञायते नान्यपुरुषेणेत्युक्तं भवति । सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषाद्भोगः परार्थत्वात्स्वार्थसंयमात्पुरुषज्ञानम् (यो. सू. ३-३५) इत्यत्र पुरुषस्य ज्ञानं यदुक्तं तत् सदैवेति अत्रापरिणामित्वादित्यनेन सूच्यते । उत्तरसूत्रे पुरुषतज्ज्ञानयोरुभयोरपि स्वाभासत्वमिति व्यञ्जितम् । ज्ञानपदं विहाय चित्तवृत्तिपदोपादानेन धर्मज्ञानप्रसरविरहे ज्ञानस्य स्वाभासता नास्तीति द्योतितम् । एवं चित्तवृत्तय इत्यत्र वृत्तिपदोपादानेन चित्तस्य सदाज्ञातत्वं व्युदस्तम्—तदेवाह;—'न तत्स्वाभासं दृश्यत्वात्' (यो. सू. ४-१९) इति । अत्र चित्तस्य स्वयंप्रकाशत्वनिषेधेन तद्वृत्तिभूतधर्मभूतज्ञानप्रसरस्य स्वयंप्रकाशत्वं स्थापितम् । तस्यापि द्रष्टृशब्दार्थघटकज्ञानरूपत्वेन द्रष्टृभिन्नभूतेन्द्रियात्मकदृश्यत्वाभावात् । चित्तस्य तु दृश्यत्वेन स्वयंप्रकाशता न घटत इत्याशयः । 'एकसमये चोभयानवधारणम्' (यो. सू. ४-२०) इत्यत्र ज्ञानप्रसरार्थयोरेकदा अवधारणं, न तु चित्तार्थयोरिति विवक्षितम् ॥

एतेन अर्थप्रतीतिकालएव ज्ञानभानम् इति बोधितम् । चित्तवृत्तिपदेऽप्ययमर्थोऽभिप्रेतः । 'चित्तान्तरदृश्यत्वे बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च' (यो. सू. ४-२१) इत्यत्र परचित्तस्य ज्ञानं तद्गोचराविषयकं

भावप्रकाशः

विषयीभूतत्वात् (यो. सू. ३-२०) इत्यत्रोक्तं न घटते चित्तार्थोभय-ज्ञानाङ्गीकारे अर्थविषयकस्मृतितदितरज्ञानगोचरज्ञानस्यावर्जनीयत्वात्, ज्ञानसामान्यं प्रति कारणत्वात् स्मृतिं प्रति करणत्वाच्चित्तस्य इति विवक्षितम् ।

चित्तस्य स्वरूपपरिणामो विकासाख्यो ज्ञानं बुद्धिरित्यिव्यव-ह्रियते। तत्प्रतिबिम्बितेन निर्गुणात्मरूपेण चिता तस्य वेदनमिति मतं दूषयन् स्वमतेन तदुपपादयति 'चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्' (यो. सू. ४-२२) इति। प्रतिसंक्रमः प्रतिबिम्बं निरवय-वत्वेन सन्निकृष्टत्वेन प्रतिबिम्बशून्यचितः स्वधर्मभूतज्ञानस्य इन्द्रिय-द्वारकतत्तद्विषयसम्बन्धे संवेदनमिति सूत्रार्थः।

योगसूत्रभाष्ये क्वापि कर्तृनामोल्लिखो नास्ति ।

नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते ।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधास्यते ॥

इति भामतीकारवाचस्पतिमिश्रतत्त्ववैशारदीश्लोकमात्रं न योगभाष्यस्य ब्रह्मसूत्रकारव्यासविरचितत्वं साधयितुमलम्, बहूनामसंप्रतिपत्तेः । शङ्कराचार्यादिभिः क्वापि योगसूत्रभाष्यस्य ब्रह्मसूत्रकारविरचितत्वा-नुक्तेश्च ।

एवंच सगुणात्मवाद एव योगसूत्रतात्पर्यविषयः। 'पुरुषार्थशून्या-नां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिः' (यो. सू. ४–३४) इति अन्तिमसूत्रे स्वप्रतिष्ठेत्यनुक्त्वा स्वरूपप्रतिष्ठा इत्युक्त्या 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छान्दो-उ) इति श्रुतिर्विवाक्षितेति प्रतीयते। तेन ईश्वरयोगफलमिदं

भावप्रकाशः

कैवल्यमिति सूचितम्। वार्तिककृतोऽपि संमतमेतत्। चितिः इत्यनभिधाय शक्तिपदोपादानेन ;—

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा।

(वि. पु. ६-७-६१)

समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।

तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ (वि. पु. ६-७-७०)

इति धारणाप्रकरणस्थपराशरोक्तार्थः मुक्तिकालेऽपीति बोधितम्। एवं च समाधेर्मुक्तिहेतुता योगसूत्रकृदभिमतैव पराशरस्याभिप्रेता, 'ईश्वरप्रणिधानात्' इति (यो. सू. १–१३) सूत्रपर्यालोचनायामपि योगाङ्गसूत्रोक्तस्समाधिरसंप्रज्ञातोऽपीति सिध्यति। तथाहि— (यो. सू. १७-१८) संप्रज्ञातासंप्रज्ञातनिरूपणानन्तरं 'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' (यो. सू. १-२०) 'तीव्रसंवेगानामासन्नः' (यो. सू. १-२१) इत्यनन्तरम् 'ईश्वरप्रणिधानाद्वा' (यो. सू. १-२३- इति सूत्रे भाष्यम्;—'प्रणिधानात्—भक्तिविशेषात् आवर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण। तदभिध्यानादपि योगिन आसन्नतमस्समाधिलाभः समाधिफलं च भवति इति। अत्र श्रद्धावीर्य (यो. सू. १-२०) ' इति सूत्रोक्तः असंप्रज्ञातः विवक्षितः। स्पष्टं चेदं ' प्रणिधानमत्रासंप्रज्ञातकारणीभूतसमाधिर्भावनाविशेष' इति वार्तिकेऽपि। 'तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः' (यो. सू. २-१) 'समाधिभावनार्थः क्लेशतनूकरणार्थश्च' (यो. सू. २-२) इत्यत्र पूर्वपादान्त्य (यो. सू. १-५१) सूत्रोक्तःबहिर्वस्तुबीज (१-४६ भा) शून्यःनिर्बीजसमाधिर्विवक्षितः।

अत्र योगाङ्गयमनियमादिषु मध्ये तपआदित्रयं प्रकृष्टतया आदौ पृथङ्निर्दिष्टं 'केवलेनैतेनापि तीव्रतरेण योगो भवतीति सूचयितुम्'

### भावप्रकाशः

योगाङ्गनियमान्तर्गतेश्वरप्रणिधानस्यैकस्य 'समाधिसिद्धिरीश्वरप्रणिधानात्' (यो. सू. २-४५) इति सूत्रे फलदर्शनेन प्राधान्यं सूच्यते। अत्र तत्ववैशारद्याम्;—'न च वाच्यमीश्वरप्रणिधानादेव चेत् संप्रज्ञातसमाधेरङ्गिनास्सिद्धिः कृतं सप्तभिरङ्गैरिति;—ईश्वरप्राणिधानसिद्धौ दृष्टादृष्टावान्तरव्यापारेण तेषमुपयोगात्। संप्रज्ञातसिद्धौ च संयोगपृथक्त्वेन दध्न इव क्रत्वर्थता पुरुषार्थता च। नचैवमनन्तरङ्गता धारणाध्यानसमाधीनाम्; संप्रज्ञातसिद्धौ संप्रज्ञातसमानगोचरतयाऽङ्गान्तरेभ्योऽतद्गोचरेभ्योऽस्यान्तरङ्गत्वप्रतीतेः। ईश्वरप्रणिधानमपि हीश्वरगोचरं न संप्रज्ञेयगोचरामिति बहिरङ्गमिति सर्वमवदातम् ' इति।

अत्र सप्तानामङ्गानां वैफल्यस्य शङ्कादशायां संप्रज्ञातस्याङ्गित्वकथनेन 'यमनियम' (यो. सू. २-२९) इति सूत्रोक्तसमाधेरङ्गित्वं संप्रज्ञातत्वं च वाचस्पतेरनाभिमतमिति व्यक्तम्। अष्टमाङ्गसमाधिस्संप्रज्ञातः अङ्गी तु अज्ञायमानवृत्तिरूपोऽसंप्रज्ञात इति वेदान्तसारें सदानन्दयतिनाऽप्युक्तम्। एवमपि पूर्वं असंप्रज्ञातनिर्बीजसमाधेरीश्वरप्राणिधानसाध्यत्वस्य सूत्रतात्पर्यविषयत्ववदत्रापि तथैव विवक्षा युक्ता। योगाङ्गसमाधेरसंप्रज्ञातरूपताया ईश्वरप्राणिधानपर्वभेदानां च बोधनाय पुनरुक्तिः। साधनपादे क्रियायोगरूपमीश्वरप्रणिधानं पूर्वपादे भक्तिरूपम्। योगभाष्येऽपि तथैवोक्तेः—

"योगास्त्रयो मया प्रोक्ता भक्तिज्ञानाक्रियात्मकाः"।

इति वार्तिकोदाहृतस्मृतिवचनमपि। श्रीभागवते;—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्॥

(श्रीभाग—११-२०-९)

## भावप्रकाशः

इत्युपक्रम्य 'यदा सर्वे प्रमुच्यन्ते' (बृ. उ.) 'भिद्यते हृदय-ग्रन्थिः (मुं. उ.) इतिश्रुत्योः (३०-३१) भक्तिपरतामभिधाय ;—

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते । (मै. उ.)

'समाधिनिर्धूतमलस्य—स्वयं तदन्तन्करणेन गृह्यते' इत्यादि श्रुतितात्पर्यमेतेनाविष्कृत्य ; 'भक्तिः परेशानुभवो विरक्तिरन्यत्र' इत्युक्तसमाधिकालिकानुभवमहत्तामपि प्रकाश्य ;

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरपरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥

इत्यनेन ;—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचष्टेत तामाहुः परमागतिम् ।
ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ।

तस्मात्सर्गस्वर्गापवर्गहेतुर्भवानसावादित्यः' (मै. उ.) इत्यादितात्पर्य प्रकाशनेन 'समाधिनिर्धूत' इत्यादेः (सि. बि. टी.) निर्विशेषपरत्वं निरस्य योगत्रये भक्तेः प्राधान्योक्त्या तत्समानार्थकमेव । 'ईश्वरप्र-णिधानाद्वा' (यो. सू. १-२३) इति सूत्रे भक्तिरूपमीश्वरप्राणिधानं ध्यानकालिकं विवक्षितम् ।

योग आध्यात्मिकःपुंसां मतो निश्श्रेयसाय मे ।

भावप्रकाशः

न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ।
(श्रीभाग—३-२५.१९)

इत्युपक्रम्य—

यया पदं ते निर्वाणमञ्जसाऽन्वाश्नुवा अहम् ॥

(श्रीभाग—३-२५-२८) 'यो योगः कीदृशः कति वाऽङ्गानि' (श्रीभाग—३-२५-२९) इति देवहूतिप्रश्नस्य प्रतिवचने 'प्रावोचद्भै भक्तिवितानयोगम्' (श्रीभाग—३-२५-३१) इत्यादिना योगरूपभाक्तिस्वरूपमुक्त्वा 'योगस्य लक्षणं वक्ष्ये सबीजस्य' (श्रीभाग. ३-२८-१) इत्युपक्रम्य षडङ्गान्यभिधाय शुभाश्रयविग्रहविशिष्टध्याननिरूपणावसरे ;—

ध्यायेत् स्वदेहकुहरेऽवसितस्य विष्णोः
भक्त्याऽऽर्द्रयाऽर्पितमना न पृथग्दिदृक्षेत् ।

इति श्रीभागवते (श्रीभाग. ३-२८-३३) ध्यानस्योपसंहारात् । विष्णुपुराणेऽपि ;—

'ततोऽवयविनि प्रणिधानपरो भवेत् ।
तद्रूपप्रत्यये चैका संततिः'
(वि. पु. ६-७-९०)

इत्युक्तेः । अत्र विष्णुचित्तीयव्याख्या ;—'अथ ध्यानमाह ;—ततोऽवयविनि' इत्यादि । अयमर्थः ;—

प्रणिहितधियां त्वत्संपृक्ते वृषाद्रिशिखामणौ
प्रसृमरसुधाधाराकारा प्रसीदति भावना ।
दृढमिति दये दत्तास्वादं विमुक्तिवलाहकं
निभृतगरुतो निध्यायन्ति स्थिराशयचातकाः ॥ (दयाश-८०)

इत्यत्र स्फुटः ।

भावप्रकाशः

श्रीभागवते ;—

एवं हरौ भगवति प्रतिलब्धभावो
भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ।
औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानः
तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥
(श्रीभाग—३-२८-३४)

मुक्ताश्रयं यर्हि निर्विषयं विरक्त
निर्वाणमृच्छति मनः सहसा यथाऽर्चिः ।
आत्मानमत्र पुरुषेऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥
(श्रीभाग. ३-२८-३५)

इति श्लोकद्वयेनासंप्रज्ञातसमाधिरुक्तः । तत्रैवैकादशे ;—
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति । (श्रीभाग—११-२०
३३) इत्यनन्तरम् ;—

न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥
(श्रीभाग—११-२०-३४)

इति । तृतीये ;—

अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥
(श्रीभाग. ३-२५-३३)

नैकात्मतां मे स्पृहयन्ति केचित्

भावप्रकाशः

येऽन्योऽन्यतो भागवताः प्रसज्य
सभाजयन्तो मम पौरुषाणि ॥

(श्रीभाग. ३-२५-३४)

इत्यादि च भक्तेः स्वादुतमत्वं मुक्तावनुवृत्तिं चाभिप्रेत्योक्तम् । न तु नवीनाभिमतरीत्या मुक्तीच्छानिषेधपरम् ;—

कश्चिद्धीरः प्रत्यगात्मानमैच्छ-
दावृत्तचक्षुरमृतत्वमिच्छन् ।

(कठ. ४—१)

'ओमित्येवात्मानं ध्यायथ स्वस्ति वः पाराय तमसः परस्तात्' (मुं—२-२-६) 'मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे. ६-१८) इत्यादिश्रुति-विरोधात् । उक्तं च व्यासार्यैश्शुकपक्षीये —'न वाञ्छन्ति अपवर्गेच्छा-विरहे ; भक्तेस्स्वादुतमत्वकाष्ठा दर्शिता ; न त्वपवर्गेच्छाया आनर्थ्य-हेतुत्वम्' (श्रीभागवतव्याख्या ११-२०-३४) इति ।

'भक्तिरपि' स्वेतरवैतृष्ण्यावहज्ञानविशेषः' इति (वेदा. सं.) सूक्तिव्याख्यानेऽपि इत्थमेवोक्तम् । तस्मिन्नेवाध्याये पूर्वम् ;—

प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुने ।
कामा हृदीया (हृदय्या) नश्यन्ति सर्वे मयि हृदि स्थिते ।

(श्रीभाग. ११-२०-२९)

इत्यत्र 'हृदा मनीषा' 'तां योगमिति' इति भक्तिरूपयोगो-क्त्यनन्तरम् ;—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि (स्थिताः) श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥

(कठ उ. ६-१४) (बृ. उ. ४-७)

भावप्रकाशः

इति ;—

पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥

(मुं. ३-२-२)

इति ;—

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ॥

(मैत्रायण्युप. ४-४-९)

इति च श्रुत्यर्थकथनमुखेन भक्तेः स्वादुतमत्वं प्रतिपादितमिति अत्रापि (११-२०-३४) तद्विवक्षैव युक्तेति व्यासार्याणामाशयः । अत एव ;—

एवमेतान् मयाऽऽदिष्टाननुतिष्ठन्ति मे पथः ।
क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः ॥

(श्रीभाग. ११-२०-३७)

इत्युपसंहारस्सङ्गच्छते ।

तृतीये भागवतान्योन्यसङ्गोक्त्या—

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥

(श्रीभाग. १-१८-१३)

इति ऋष्युक्तिवत्—

क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥

(श्रीभाग. ४-२४-५७)

भावप्रकाशः

इति रुद्रोक्तिवच्च अत्यन्तस्वादुतातात्पर्यमूह्यम् ।

अत एव तदुत्तरम्—

तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश्च भक्तिः अनिच्छतो गतिमण्वीं प्रयुङ्क्ते ॥

(श्रीभाग. ३-२५-३६)

इति भक्तेरर्चिरादिगतिप्रापकत्वोक्तिस्संगच्छते ।

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥

(श्रीभाग. ३-२५-४३)

एतावानेव लोकेऽस्मिन् पुंसां निश्श्रेयसोदयः ।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥

(श्रीभाग. ३-२५-४४)

इत्यध्यायान्ते भक्तियोगस्य मुक्तिहेतुताया इहलोके निश्श्रेयसरूपतायाश्चोक्तिस्संगच्छते ।

अत्र 'भक्तियोगेन योगिनः' (श्रीभाग. ३-२५-४३) इत्यत्र योगिनः अष्टाङ्गयोगनिष्ठा विवक्षिताः—

योग आध्यात्मिकः पुंसां मतो निश्श्रेयसाय मे ।

(श्रीभाग—३–२५–१३)

न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥

(श्रीभाग. ३–२५–१९

असेवयाऽयं प्रकृतेर्गुणानां
ज्ञानेन वैराग्यविजृम्भितेन ।

भावप्रकाशः

योगेन मय्यर्पितया च भक्त्या
मां प्रत्यगात्मानमिहावरुन्धे ॥ २७ ॥

इत्युपक्रमानुसारात् । उत्तरत्र (श्रीभाग ३-२८-३३ श्लो. ३४ श्लो.) श्लोकयोः समाधिकाले भक्तेः कथनात्—

मुक्ताश्रयं यर्हि निर्विषयं विरक्तं
निर्वाणमृच्छति मनस्सहसा यथार्चिः ॥

(श्रीभाग. ३-२८-३५)

इत्यत्र स्वरूपानन्दविषयकसमाधौ भक्तित्वस्यापरिहार्यत्वाच्च । एवं च—

भक्तियोगश्च योगश्च मया मानव्युदीरतः ।
ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥

(श्रीभाग. ३-२९-३५)

इत्युभयोरुपसंहारे एकतरेणेति उभयोरविनाभावाभिप्रायकमिति बोध्यम् ।

पूर्वम्—

कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावस्स सात्त्विकः ॥

(श्रीभाग. ३-२९-१०)

मद्गुणश्रुतिमात्रेण मयि सर्वगुणाश्रये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ ११ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहेतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमित्युत ।
दीयमानं न गृह्णन्ति जना मत्सेवनं विना ॥ १३ ॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।

## भावप्रकाशः

येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥

(श्रीभाग. ३–२९–१४)

इत्यत्र निर्गुणभक्तियोगमात्यन्तिकमुक्त्वा भक्तिरूपभगवत्सेवां विना तस्य फलनिषेधेन भक्तिमिश्रमेव भक्तेः फलमित्युक्तं भवति ।

प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥

(भगवद्गीता ९)

इति गीतायामप्ययमर्थो विवक्षित इति प्रागेव निरूपितम् ।

अत्र भक्तियोगे निर्गुणत्वं न निर्विशेषविषयकत्वम् । 'मद्गुणश्रुतिमात्रेण' (श्रीभाग. ३–२९–११) इत्यनेन तस्य गुणविषयकत्वावगमात् । तामसराजससात्त्विकानां भक्तियोगानां पूर्वमभिधानेन अत्र गुणशब्दस्य गुणत्रयोपस्थापकत्वस्य स्फुटत्वात् । तामसत्वादेस्तमआद्यभिवृद्धिफलकत्वरूपत्वेन निर्गुणत्वस्य गुणत्रयनिवृत्तिफलकत्वरूपतायाः प्रतीतायाः—

येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ।

(श्रीभाग. ३–२९–१४)

इत्यन्ते दृढीकरणाच्च ।

अत एव—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥

इति गीतैकार्थ्यम् । गीतायां ब्रह्मभूयम्—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥

(भगवद्गीता १४–२)

इत्युपक्रमोक्तब्रह्मसाधर्म्यमेव । एतेन मद्भावशब्दार्थोऽपि निर्णीतः । नैकात्मतां मत्पादसेवाभिरताः (३-२५-३४) इत्यनुसृत्य ;—

भावप्रकाशः

'मत्सवनं विना' (श्रीभाग. ३-२९-१३) इत्युक्त्या अति भागव्यतिरिक्तैक्यप्रतीत्ययोगाच्च 'मद्गुणश्रुतिमात्रेण' (श्रीभाग. ४-२९-११) इत्यत्र गुणश्रुतिशब्देन 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यः' इत्यत्र श्रवणं गुणविशिष्टस्यैव विवक्षितामिति बोधितम् ।

'मद्गुणश्रुतिमात्रेण' (श्रीभाग· ३-२९-११) इत्यत्र अवधारणेन गुणविषयकत्वशून्यश्रवणम् व्यावर्तितम् सगुणेत्यनुक्त्या 'सर्वान् कामान् सह, 'ब्रह्मणा' इतिवत् गुणप्राधान्यं सूचितम् । श्रवणोत्तरध्यानाभिप्रायकेण 'मद्गुणश्रुतिमात्रेण' 'मनोगतिरविच्छिन्ना' इत्यनेन भक्तेर्योगरूपत्वमुक्तम् । 'मयि सर्वगुहाशये' (श्रीभाग. ३-२९-११) इत्यस्यार्थः अत्रैवोत्तरत्र—

आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनेन च ।
आर्जवेनार्यसङ्गेन निरहङ्क्रियया तथा (श्रीभाग-३-२९-१८)
मद्धर्मिणो गुणैरेतैः परिसंशुद्ध आशयः ।
पुरुषस्याञ्जसाऽभ्येति श्रुतमात्रगुणं हि माम् ॥ १९ ॥
यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् ।
एवं योगरतं चेत आत्मानमविकारि यत् ॥ २० ॥
अहं सर्वेषु भूतेषु भूतात्माऽवस्थितस्सदा ॥
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ २१ ॥
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वाऽर्चां भजते मौढ्यात् भस्मन्येव जुहोति सः ॥ २२ ॥
द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ।
भूतेषु बद्धवैरस्य न मनश्शान्तिमृच्छति ॥ २३ ॥
अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे ।
नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥

भावप्रकाशः

अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ।
यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ २५ ॥
आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥ २६ ॥

इति विशदीकृतः ।

अत्र श्रीधरीयव्याख्या ;—"मद्गुणश्रुतिमात्रेण मयि पुरुषोत्तमे मनोगतिरिति या भक्तिः सा निर्गुणस्य भक्तियोगस्य लक्षणमित्यन्वयः । अविच्छिन्ना सन्तता । लक्षणं स्वरूपम् । अहैतुकी फलानुसन्धान-शून्या" इति (श्रीभागवतव्याख्या ३–२९–११–१२) "मद्धर्मिणः भगवद्धर्मानुष्ठातुः । आशयः चित्तम्" इति । (१९) "आवृङ्क्ते—आत्म-सात्करोति । (२०) । अवज्ञोपेक्षाद्वेषनिन्दाः क्रमेण निषिध्यन्ते" इति च । (२१) 'सर्वभूतेषु कृतालयम्—कृतावासम् । तत्र हेतुः-भूतानामात्मानमन्तर्यामिणम् अभिन्नेन चक्षुषा-समदर्शनेन' इति च (२७)।

अत्र 'अविच्छिन्ना' संतता इति विवरणेन अविच्छिन्ना क्वचदपि विषयेऽनवच्छिन्ना सर्वं विष्णुरेवेत्याकारेतियावत् इत्यादि (सि. बि. टी.) व्याख्यानमाभिनिवेशमूलकमेव ।

'सर्वेषु भूतेष्ववस्थितो भूतात्मा' (२१) इत्यत्र भूतात्मन् शब्दस्य भूतान्तर्यामी इत्येवार्थः । एवं भिन्नदृशः (२३) इत्यत्र एकपरमात्माख्यान्तर्यामिज्ञानशून्यतया स्वपरभेददर्शिनः इत्यर्थः 'आत्म-नश्च परस्यापि' (१६) इत्युत्तरश्लोकानुसारात् । परमात्मरूपैकान्तर्यामि-ज्ञानरूपसमदर्शनज्ञानशून्यतैव अवज्ञोपेक्षाद्वेषनिन्दावदनुगता ।

अत एव 'जीवाश्श्रेष्ठा ह्यजीवानाम्' (२८) इत्यादिना उत्त-रोत्तरोत्कर्षकथनावसरे—

मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ।

भावप्रकाशः

न पश्यामि परंभूत मकर्तस्समदर्शनात् (३३)

इत्युपसंहारस्सङ्गच्छते ।

एतेन पूर्वश्लोकेषु भूतशब्दोऽचित्संसृष्टजीवपर इति बोधितम् । अर्चानिन्दाऽपि समदर्शनप्रशंसार्थैव । अत एव ।

मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवादनैः ।
भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च ॥

(श्रीभाग. ३–२९–१६)

इत्यादिनाऽऽत्यन्तिकभक्तियोगनिष्ठपुरुषस्वरूपानिरूपणमुपपद्यते । एतेन—

अभिसंधाय यद्धिंसां दम्भं मात्सर्यमेव च ।
संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥

(श्रीभाग. ३–२९–९)

विषयानभिसंधाय यश ऐश्वर्यमेव च ।
अर्चादावर्चयेद्यो मां पृथग्भावस्स राजसः ॥ १० ॥
कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावस्स सात्त्विकः ॥ ११ ॥

इत्यत्र सर्वभूतान्तर्यामिभगवद्भावनाविरहस्तामसराजससात्त्विकभक्तियोगनिष्ठानां 'भिन्नदृक् पृथगग्भाव पृथग्भावः' इत्यत्र विवक्षित इति तत्प्रतिद्वन्द्विता ।

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये (श्रीभाग. ३–२९–११ इति पूर्वश्लोके सर्वभूतान्तर्यामिबोधकसर्वगुहाशयशब्दे विवक्षितेति सिद्धम् । एतेन सर्वगुहाशये सर्वदृश्याधिष्ठानभूते इति (सि. बिं. टि.) उक्तिरनुपादेया । अधिष्ठेयविषमसत्ताकमाधिष्ठानम् (अ. सि. ३५४) अधि-

## भावप्रकाशः

ह्यानत्वमपरिणाम्युपादानत्वं यत्प्रमया यद्बाध्यते तत्तस्य तादृशोपादानम् (ल. चं.) इत्यादिपरिभाषाया व्यासासम्मतत्वात् ।

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥

(श्रीभाग. ११-२-४५)

अर्चायामेव तु हरेः पूजां यश्श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥

(श्रीभाग ११-२-४७)

न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ।
सर्वभूतसमश्शान्तः स वै भागवतोत्तमः ॥ (श्रीभाग ११-२-५२)

इत्येकादशवचनैकरस्यादपि यथोक्त एवार्थः ; श्रीधरसंमतश्च । तृतीये 'मद्गुणश्रुतिमात्रेण' (श्रीभाग ३-२९-११) इत्यस्य उत्तरश्लोके—

अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।

(श्रीभाग ३-२९-१२)

इत्यत्र अव्यवहितत्वं मुक्तिफलमपेक्ष्य। तेन 'कर्मनिर्हारमुद्दिश्य' इति पूर्वोक्तसात्विकज्ञानसाधनभक्तेः मुक्तिं प्रति व्यवहितायाः—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥

(श्रीभाग ७-५-२३)

इति सप्तमे वक्ष्यमाणनवविधभक्तियोगस्य च व्युदासः । 'अव्यवहिता अहमेव विष्णुरिति स्वाभेदेन क्रियमाणा' (सि. बि. टी. १७७ पृ) इत्युक्तिस्तु नादरणीया, पुरुषोत्तमशब्दाविरोधात् । पुरुषोत्तमशब्दस्य—

भावप्रकाशः

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।

(गी. १५-१८)

इति गीता निर्वचनपरा ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

(गी. १५-१६)

इति पूर्वत्र क्षराक्षरशब्दयोरर्थ उक्तः । क्षरशब्दार्थघटकपरिणामः धर्मभूतज्ञानसङ्कोचविकासात्मको विवक्षित इति—

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।

(गी. १५-१५)

इति तत्पूर्वश्लोके व्यक्तम् । 'सर्वाणि भूतानि' (गी १५-१६) इत्यत्र अचित्संसृष्टा जीवा विवक्षिताः । पूर्वम्—'सर्वाणि भूतानि' (गी. २-३०) 'सर्वभूतानाम्' (गी. २-६९) 'सर्वभूतेषु (गी ३-१८) 'सर्वभूतात्मभूतात्मा' (गी ५-७), 'सर्वभूतहिते (गी. ५-२५) 'सर्वभूतानाम्' (गी. ५-२९) 'सर्वभूतस्थम्' (गी. ६–२९ 'सर्वभूतस्थितम्' (गी. ६–३१) 'भूतानि सर्वाणि' (गी. ७.६) 'सर्वभूतेषु (गी. ७-९), 'सर्वभूतानाम्' (गी. ७-१०) 'सर्वभूतानि' (गी ७-२७) 'सर्वभूतानि' (गी. ९-४) 'सर्वाणि भूतानि' (गी. ९-६ 'सर्वभूतानि' (गी. ९-७) 'सर्वभूतेषु' (गी. ९-२९) 'सर्वभूतानाम् (गी. १०-३९) 'सर्वभूतेषु' (गी. ११-५५) 'सर्वभूतहिते (गी १२-४) 'सर्वभूतानाम्' (गी. १२-१३) 'सर्वभूतानाम्' (गी

**भावप्रकाशः**

१४-३) इत्यत्र अचित्संसृष्टजीवानां सर्वभूतशब्दार्थतायाः परेषामपि संमतत्वेन अत्रान्यार्थस्य गीताचार्यतात्पर्यविषयत्वस्यासंभवात् ।

उत्तरत्र 'सर्वभूतेषु' (गी. १८-२०) इत्यादि 'सर्वभूतस्थम्' (गी. १६-२९) इत्यादिपूर्ववाक्यसमानार्थमेव ।

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।'

(गी. १८-६१)

इत्यादि 'स्मृतेश्च' (ब्र. सू. १-२-६) इति सूत्रे शारीरपरमात्मभेदस्मृतितयोदाहृतं (शं) भाष्ये ॥

अत्र 'सर्वस्य चाहं हृदि सन्निविष्टः' (गी. १५-१५ इति श्लोकानन्तरं तदैकार्थ्यज्ञापनार्थसर्वशब्दघटितं 'क्षरस्सर्वाणि भूतानि' (गी. १५-१६) इति वाक्यं 'ईश्वरस्सर्वभूतानाम्' (गी. १८-६१) इत्येतत्समानार्थकमिति न तिरोहितं निर्मत्सराणां विदुषाम् ।

'कूटस्थोऽक्षर उच्यते' (गी. १५-१६) इत्यत्र 'ये त्वक्षरम्+ कूटस्थमचलं ध्रुवम्' (गी. १२-३) इत्यत्रेवाचिद्वियुक्तजीवो विवक्षितः । अक्षरत्वं ज्ञानसङ्कोचात्मकपरिणामशून्यत्वमिति मुक्तात्मैव कूटस्थोऽक्षरः । 'सर्वस्य चाहं हृदि संनिविष्टः' (गी. १५-१५) इत्यादिना—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

(गी. १५-१७)

इत्यन्तेन—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये सन्निविष्टः ।

(श्वे. उ. ३-१३)

### भावप्रकाशः

एष देवो विश्वकर्मा महात्मा
सदा जनानां हृदये संनिविष्टः ।
(श्वे. उ. ४–१७)

इति श्रुत्यर्थ उक्तः । 'यो लोकत्रयं' (गी. १५–१७) इत्यनेन महात्मेत्येतद्विवरणपरपूर्वार्धस्थपरमात्मशब्दार्थो विशदीकृतः ।

एतेन—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये संनिविष्टः ।
तं स्वाच्छरीरात्प्रवृहे-
न्मुञ्जादिवेषीकां धैर्येण ॥ (क. उ. ६–१७)

इति श्रुतिरपि विवृता । संनिविष्टः—शरीरित्वेन निविष्ट इत्यर्थः । सर्वचेतनशरीरकत्वं महात्मत्वं परमात्मत्वं च श्रुतौ गीतायां च विवक्षितम् ।

'यो लोकत्रयं' (गी. १५–१७) इत्येतेनाभेदश्रुत्यर्थोपपादनेन जीवपरभेद एव सर्ववेदवेद्यत्वं परस्य पूर्वोक्तं प्रतिष्ठापितम् ।

अत एव चेतनप्रसिद्धपुरुषशब्दघटितपुरुषोत्तमशब्दनिर्वचनपरत्वं 'यस्मात् क्षरमतीतोऽहं' (गी. १५–१८) इत्यादेस्सङ्गच्छते ।

एवं च बद्धमुक्तोभयावधिकोत्कर्षवान् पुरुषोत्तमशब्दार्थ इति सिद्धम् ।

अत एव—

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ (गी. १५–१९)

इत्युत्तरश्लोकोऽपि सङ्गच्छते । अत्र 'असंमूढः' इत्यत्र समित्येकी-

भावप्रकाशः

कारे; 'उत्तमः पुरुषस्त्वन्यः' (गी. १५–१७) इत्युक्तार्थविरोधि-जीवब्रह्मैक्यमोहेन शून्योऽसंमूढशब्दार्थः ।

एवमेव—

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ (गी. १०–३)

इत्यत्रापि ।

अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ (गी. १०-८)

इति तदनन्तरश्लोकः—

स सर्वविद्भजति मां सर्वभावेन भारत । (गी. १५–१९)
इत्येतत्समानार्थः ।

एतेन उत्कृष्टविषयकप्रीतिरेव भक्तिः, न तु स्वाभिन्नवस्तुज्ञानमिति बोधितम् ॥

संयुक्तमेतत् क्षरमक्षरं च
व्यक्ताव्यक्तं भरते विश्वमीशः । (श्वे. उ. १–८)

इत्यत्राव्यक्तमक्षरं चोक्तम् । 'क्षरात्मानावीशते देव एकः' (श्वे.उ. १-१०) इति श्रुतौ देवो वासुदेवः आत्मा बद्धो मुक्तश्च ईशितव्यः असंकोचात् । 'तद्ब्रोभयं वै प्रणवेन देहे' (श्वे. उ. १–१३) इत्यत्र भर्ता ईशिता च देवः ईशितव्यो जीवश्चेत्युभयं प्रणवार्थः । 'तस्याभिध्यानाद्योजनात्' (श्वे. उ. १–१०) इत्यत्र क्षरात्मनोरीशितुर्देवस्य योगस्समाधिर्भक्तिः इति, 'अङ्गुष्ठमात्रः' इति (श्वे. उ. ३–१३) (क. उ. ६–१७) श्रुतिद्वये पुरुषपदस्य 'स वा अयं सर्वासु पूर्षु' (बृ) इत्युक्तस्सर्वशरीरी अर्थः इति

**भावप्रकाशः**

'हृदा मनीषा' (श्वे. उ. ३–१३ क उ. ६–१७) इति श्रुतिद्वयोत्तरार्धे भक्तिर्विवक्षितेति च गीतापञ्चदशवचनैर्निर्णीतम् ।

"अक्षरात्परतः परः (मुं. उ. २-१-२) इति पञ्चम्यन्ताक्षरपदघटित-श्रुतिविवरणरूपं 'अक्षरादपि चोत्तमः इति' इति (गी वि १५–१८) मधुसूदनसरस्वतीपक्षाश्रयणेऽपि 'अक्षरात्परतः' (मु. २–१–२) इति समानाधिकरणनिर्देशः' इति (शं) सिद्धान्तादेरऽपि श्रुतौ जीवादुत्कर्ष एव विवक्षित इति गीताऽपि तत्परैव, न तु प्रकृतेरुत्कर्षपरा। तदुक्तं भगवता श्रीभाष्यकृता वेदान्तसारे—(१–२–२३) 'अथवा सामानाधिकरण्येन परतोऽक्षरात्पञ्चविंशात्पर इति भेदव्यपदेशः' इति। अयमाशयः—

यथा सुदीप्तात्पावकाद्विष्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद्विविधास्सौम्य भावाः
प्रजायन्ते तत्र चैवापियन्ति ॥
(मुं. उ. २–१–१)

इति पूर्वश्रुतौ भावाः—जीवाः इति (शं. उ. भा) विवरणेन जीवानामक्षराज्जनिरुक्ता । प्रकाशवदग्निस्फुलिङ्गदृष्टान्तानुसारेण अक्षरात् इत्यस्य ज्ञानसंकोचेनापि शून्यात् 'यस्सर्वज्ञ' इत्याद्युक्तनिरवधिकज्ञानविकासवत इति पर्यवसितोऽर्थः। भावाः सत्तावन्तः, सत्ता च ज्ञानवत्त्वेन विवक्षिता। तेन भावाः ज्ञानवन्त इत्यर्थः। अत एव 'भावो-विद्वान्' 'भावः–बुधजन्तुविभूतिषु' इति अमरमेदिनीकोशौ संगच्छेते। एवं च दृष्टान्तोक्तसरूपता ज्ञानवत्त्वेन दार्ष्टान्तिकेऽपि निर्व्यूढा। एवं 'य एष विज्ञानमयः पुरुषः' (बृ. उ. ४–१–१७) इत्यादिना सुषुप्तिकथनानन्तरं 'स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्रा विष्फुलि-

भावप्रकाशः

ङ्गाव्युच्चरन्त्येवेमतस्मादात्मनस्सर्वे प्राणाः—सर्व एत आत्मानो व्युच्चरन्ति' (मा–शा) इत्यत्र 'यच्चास्य सन्ततो भावः' (लिङ्गपुराण ७०–९६) इति स्मार्तनिर्वचनविवक्षया 'विज्ञानमयः' इत्युपक्रमानुगुण्येन च 'आत्मानः' इत्यत्रात्मन्शब्दो व्याप्तियोग्यज्ञानवत्पर इति निर्णीयेत। एतदेवाभिप्रेत्योक्तम् 'जीवस्य सृष्टिवचनं भोक्तृत्वानुगुणज्ञानविकासाभिप्रायम्' (वे. दी. २–३–१८) इति। एवं च अव्यवहितपूर्वश्रुतौ अक्षरसरूपतया बुद्धिस्थमर्थं परित्यज्य अनन्तरश्रुतावक्षरशब्दस्यार्थान्तरकल्पनमनुचितम्। अतः 'अक्षरात्परतः परः' (मु. उ. २–१–२) इत्यनन्तरश्रुतौ अक्षरात् इत्यस्य पूर्ववदेवार्थः। मुक्तिकाल एव जीवस्याक्षरत्वं वसिष्ठकरालजनकसंवादे स्पष्टमिति जीवेभ्योऽपि जनिमद्भ्यः परभूतात् 'तदा विद्वान्—परमं साम्यमुपैति' (मु. उ. ३–१–३) इत्युक्तवेदनसाम्यवतो मुक्तात्पर इति श्रुत्यर्थः। पञ्चविंशकात् इत्यनेन वसिष्ठकरालजनकसंवादस्य एतच्छ्रुत्युपबृंहणता सूच्यते। चतुर्विंशतितत्त्वात्मकप्रकृतेः पूर्वम् 'तथाऽक्षरात्संभवतीह विश्वम्' (मु उ. १–१–७) इत्यत्र कार्यतया विवक्षितत्वं 'तथाऽक्षराद्विविधास्सौम्य भावाः' इत्येतत्पूर्वश्रुतौ पञ्चविंशकस्यैव कार्यतया विवक्षितत्वं च परैरप्यङ्गीकरणीयमिति 'अक्षरात्परतः परः' (मु उ. २-१-२) इत्यत्राक्षरशब्दे जीवविवक्षैव युक्ता। एवम्—

क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देव एकः। (श्वे उ. १–१०)

इत्युक्तमक्षरमेव 'तद्वोभयं वै प्रणवेन देहे' (श्वे उ. १-१३) इत्यत्र वर्गपञ्चकवर्णेषु पञ्चविंशस्य प्रणवघटकस्य मकारस्यार्थो विवक्षित इति च सूचितम्। स्वरूपपरिणामशून्यत्वं बद्धमुक्तसाधारणं कादिचतु-

## भावप्रकाशः

विंशतिवर्णार्थचतुर्विंशतितत्त्वव्यावर्तकं तत्र विवक्षितम्। (श्वे. उ.) तदुक्तदिशा पञ्चविंशकात्परत्वम्;—

'प्रकृतिं क्षेत्रज्ञं च परः क्षेत्रज्ञष्षड्विंशकोऽनुपश्यति,

न तु पञ्चविंशः क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यति' इति मोक्षधर्मे (वा. रा. मु. शा. कोशे–१५६ पृ)। नारदसनत्कुमारसंवादे कपिलासुरिसंवादे जनकयाज्ञवल्क्यसंवादे

वासुदेवः परं ब्रह्म तन्मूर्तिः पुरुषः परः।
अव्यक्तो निर्गुणश्शान्तः पञ्चविंशात्परोऽव्ययः॥

इति सूर्यसिद्धान्ते च व्यक्तम्। अयमर्थः (हय–शि) दीधितौ निरूपितः।

एवं गीतायां सप्तमेऽपि विवक्षितः। तथाहि—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा (गी. ७–४॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत् (गी. ७–५॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा (गी. ७–६॥
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव (गी. ७–७॥

इति। अत्र भूमिरित्यादि खमित्यन्तं 'पञ्च तन्मात्रा भूतशब्देनोच्यन्ते पञ्च महाभूतानि भूतशब्देनोच्यन्ते' (मै. उ.) इत्युक्त्यनुसारेण तत्तन्मात्राणामप्युपलक्षणम्। मनःपदं 'इन्द्रियाणि दशैकं च' (गी. १३–५) इति वक्ष्यमाणोपलक्षणम्।

**भावप्रकाशः**

कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः ।
कृष्णस्य हि कृते (विश्वमिदं भूतं) भूतमिदं विश्वं चराचरम् ॥
(म. भा. सभा. ४१–२३)

इति प्रागुक्तरीत्या अत्रापि मे इत्यस्यार्थो विधेयतया विवक्षितः । एवं च (श्वे.) श्रुत्युक्तं भगवदीशितव्यत्वं चेतनाचेतनयोरत्रापि विहितं भवति । 'द्वे वाव ब्रह्मणो रूपे' 'तस्य हैतस्य पुरुषस्य रूपम्' (बृ) इत्यनन्तरं 'नेति नेति' (बृ) इत्यादिश्रुत्यर्थस्य (श्रीभाष्यादिशा) निर्णयाय—

तमीश्वराणां परमं महेश्वरं (श्वे-उ. ६–७)
'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे. उ. ६–८)

इति श्रुत्यर्थमाह—'मत्त' इत्यादिना । 'नेति नेति' इत्यनन्तरम् 'न ह्येतस्मादितिनेत्यन्यत्परमास्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' (बृ. उ. ४–३–६) इति श्रुतौ परशब्दान्यशब्दयोः प्रयोगेण रूपद्वयविशिष्टब्रह्मण उत्कृष्टस्यैवान्यस्य 'नेति नेति' इत्यनन्तरं निषेधः, न तु ब्रह्मणोऽन्यस्य सत्यस्येति श्रुत्याशयो दर्शितः । रूपत्रयसत्यत्वानुक्त्या (गु. चं.) सत्यद्वयं नात्र विवक्षितमिति श्रीभाष्योक्तार्थ एव युक्तः ।

'प्रकृतिं विद्धि मे पराम्' (गी. ७–५) इत्यत्र जीवस्याचिदपेक्षयोत्कर्षं 'ययेदं धार्यते जगत्' (गी. ७–५) इत्यत्र अचिद्धारकत्वं परत्वनिदानं चाभिधाय तेन मनुष्यदेहधारकजीवपर्यन्तत्वं 'मनुष्याणां सहस्रेषु कश्चित्' (गी. ७–३) इत्यस्य सूचयित्वा सर्वभूतानां चिदचित्कारणकत्वमुक्त्वा 'अहं कृत्स्नस्य' (गी. ७–६) इत्यादौ वासुदेवस्य सर्वोत्पत्तिलयकारणत्वं तद्व्यतिरिक्तस्योत्कर्षाभावः तस्यैव सर्वधारकत्वं चोक्तम् ।

**भावप्रकाशः**

अत्र चिदचितोः कारणत्वेऽपि जीवस्याचिद्धारकत्वेनोत्कर्षवत् भगवतस्सर्वकारणत्वेन सर्वधारकत्वेन प्रागुक्ताचेतनजीवस्वामित्वेन च जीवादप्युत्कर्षेण तद्व्यतिरिक्तस्योत्कृष्टत्वाभावः स्फुटमुक्तः । सूत्रस्य स्वसमानसत्ताकाधिकसंख्यमण्याधारतावत् भगवतस्स्वसमानसत्ताक-सकलचेतनाचेतनाधारत्वं विवक्षितम् ।

एकस्य सर्वाधारत्वोक्त्या अपृथक्सिद्धिपर्यवसिता व्याप्तिः सिद्धा । एतदेव सामानाधिकरण्यबीजम् । 'ययेदं धार्यते जगत्' (गी. ७–५) इत्यनेन मनुष्यादिशब्दानां देहात्मभ्रमनिबन्धनप्रयोगमतव्युदसन-पूर्वकदेहापृथक्सिद्धधारकपर्यन्तत्वबोधनेन तद्वदेव अपृथक्सिद्धप्रकार-वाचिनां सर्वशब्दानां स्वार्थापृथक्सिद्धधारकवासुदेवपर्यन्तत्वेन 'रसोऽ-हमप्सु' (गी. ७–८) इत्यादिकमप्युपपद्यते' न त्वन्यथा ।

'रसोऽहमप्सु' (गी. ७–८) इत्याद्यनन्तरम्—

'ये चैव सात्त्विका भावाः न त्वहं तेषु ते मयि' (गी. ७-१२)

इत्यत्र सर्वाधारत्वोक्त्या मध्ये सामानाधिकरण्यमपृथक्सिद्धि-संवलितधारकत्वनिबन्धनमेवेति बोधितम् ।

नवमे—

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥
(गी. ९–४)

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥
(गी. ९–५)

यथाऽऽकाशस्थितो नित्यं वायुस्सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ (गी. ९–६)

भावप्रकाशः

इत्यत्र सर्वस्य व्यापकत्वमाधारत्वं चेत्युभयं भगवतः कण्ठत एवोक्तम् । 'न च मत्स्थानि' (गी. ९–५) इत्यत्र भूतमिथ्यात्वभ्रमापनोदनाय 'भूतभृत्' इत्यनेन भगवतः सङ्कल्पेन भूतधारकत्वं 'यथाऽऽकाश' (गी. ९–६) इत्यनेन नियताधारत्वं च विशदीकृतम् ।

वायोस्सर्वत्र गमनेऽपि स्वसमानसत्ताकाकाशाधारकत्वमेव यथा तथा भूतानामन्यत्र गमनदशायामपि स्वसमानसत्ताकभगवदाधारकत्वमित्येतदुभयविधव्यतिरिक्ताधारकत्वं 'न च मत्स्थानि '(गी. ९-५) इत्यत्र निषेध्यं विवक्षितम् ।

'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' (ब्र. सू. ३-२) इति व्यासेन नेति नेतीति श्रुत्यर्थनिर्णायकतया प्रदर्शित एव न्यायः ।

अतोऽध्यायद्वये 'व्यक्ताव्यक्तं भरते विश्वमीशः' 'अनन्तश्चात्मा विश्वरूपः' (श्वे. उ. १) इति श्रुत्यर्थः प्रदर्शितः ।

अचेतने प्रीतिरविवेकिनः । तद्धारके स्वामिनि च जीवे प्रीतिः किञ्चिद्विवेकिनः । सर्वतदुभयधारके सर्वकारणे सर्वस्वामिनि परस्मिन् प्रीतिरतिविवेकिन इति महनीयप्रीतिरूपसमाधिर्भक्तिरेतेन संपादिता । एतेन—

'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्' (गी. ७–५) इत्यत्र 'परां प्रकृष्टाम्' इति व्याख्याय 'मत्तः परतरं नान्यत्' (गी. ७–७) इत्यत्र 'परतरम्—परमार्थसत्यं अन्यत्किञ्चिदपि नास्ति' इति, 'भूतभृत्' (गी. ९–५) 'तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय' (गी. ९–६) इत्युत्तरवाक्यविरुद्धतया 'न च मत्स्थानि' (गी. ९–५) इत्यत्र 'परमार्थतो मयि न सन्ति' इत्यादि च मधुसूदनसरस्वतीप्रभृतिविवरणं न [illegible] बोध्यम् ।

अत एव 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे. उ. १) इत्यत्र 'ब्रह्मोडुपेन प्रतरेत विद्वान्' (श्वे. उ. २) इति वक्ष्यमाणं तरणमेव विवक्षितमित्यभिप्रेत्य—

### भावप्रकाशः

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ (गी. ७–१४)

इत्यत्र मायां तां नाशयन्तीत्यनभिधाय तरणमेवोक्तम् । तेन अधिष्ठानयाथार्थ्यज्ञानेन अध्यस्तनिवृत्तिर्न विवक्षितेति बोध्यम् ।

पूर्वमस्मत्पदार्थो यद्यदर्थसंबन्धितया गृहीतः तत्तदर्थसंबन्धितयैव मामित्यनेनाप्युपस्थितिर्वाच्येति निर्विशेषपरत्वं मामित्यस्य न सम्भवति । 'कश्चिन्मां वेत्ति तत्त्वतः' (गी. ७–३) इत्यनन्तरं तात्त्विकचतुर्विंशतितत्त्वात्मकप्रकृतिपञ्चविंशकजीवोभयस्वामित्वकारणत्वाधारत्वैस्संबद्धस्यैवास्मदर्थस्य प्रागभिधानात् 'दैवी माया' इति पदद्वयं 'क्षरात्मानावीशते देव एकः' (श्वे. उ. १) इति पूर्वार्धोक्तदेवसम्बन्धिनी तदुत्तरार्धोक्ता माया इत्यर्थज्ञापनेन निर्विशेषचितो मायासम्बन्धवादिपरमतव्युदासायेति बोध्यम् ॥

'मम' इत्युक्तिस्तु 'यद्वनडान्' इत्यनन्तरम् 'एवं स देवो भगवान् वरेण्यः' (श्वे. उ. ५-४) इत्युक्त्या यदुवृषभस्य कृष्णस्य देवाभेदेन कृष्णमायायाः पूर्वं चिदचिदुभयस्वामित्वेनोक्तकृष्णस्वामिकतया कृष्णं प्रपन्नानां मायातरणसम्भवप्रदर्शनाय। 'मामेव' (गी. ७–१४) इत्यत्र अस्मच्छब्देन प्रकारतया बोधितार्थान्ययोगव्यवच्छेदबोधनासमर्थेन एवकारेण 'क्षरात्मानावीशते देव एकः' (श्वे. उ. १)—

तमीश्वराणां परमं महेश्वरं
तं दैवतानां परमं च दैवतम् ॥ (श्वे. ६-७.)

इत्युक्तमायास्वामिपरदैवतव्यतिरिक्तस्य—

अस्मान्मायी सृजते विश्वमेत-
त्तस्मिंश्चान्यो मायया सन्निरुद्धः ॥ (श्वे. उ. ४-९)

**भावप्रकाशः**

इति मायया बद्धत्वेनोक्तस्य देवतान्तरस्य प्रपत्त्या न मायातरणमिति बोधितम् । अयमर्थः—

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ॥ (गी. ७-२०)

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥ (गी. ७-२३)

इत्युत्तरत्र स्फुटीकरिष्यते ।

'मायामेताम्' (गी. ७-१४) इत्यत्र 'एताम्' इत्यस्य पूर्वमष्टधा संगृहीतां मत्कर्तृकसृष्टिलयकर्मभूतां मत्स्वामिकां प्रकृतिमित्यर्थः । एतेन भगवतस्संहारसङ्कल्पमन्तरा जीवज्ञानेन न कदाऽपि मायाया नाशस्सम्भवतीति सूच्यते ।

'मायां तु प्रकृतिं विद्यात्' (श्वे.) इति पूर्वमन्त्रस्थमायाशब्दार्थविवरणवाक्यम् । प्रकृतिशब्दरूढ्यर्थ एव मायाशब्दार्थः ; न तु मिथ्येति । यद्वा 'प्रकृतिं' इत्यस्य विचित्रार्थकारिणीमित्यर्थः । प्रकृतिशब्दयोगार्थो मायाशब्दार्थः । 'मायिनं तु महेश्वरम्' इति प्रत्ययार्थविवरणम् ।

एतेन 'मायाशब्दो मिथ्यार्थकः निर्विशेषाचितो मययाऽऽवरणम् । ततो विक्षेपस्सृष्टिः' इति च व्युदस्तम् ।

'एताम्' इत्यस्य संहारकाले नाशवतीमित्यर्थमुखेन प्रपत्त्यनन्तरं न नाश' इति बोधितम् ।

'ये' इत्यत्र बहुवचनेन एकस्य मुक्तिकाले अन्यस्य बद्धस्य सत्त्वेन प्रपत्त्या एकमायानाशः परसंमतो न सम्भवतीति सूचितम् ।

श्रुत्यन्तरेषु ज्ञानेन पापनाशादेः प्रतिपादनेन पुरुषभेदेन भ्रमजनकपापानामनन्तत्वेन ज्ञानेन पापनाशस्य सिद्ध्या तेन भ्रमादिनाशस्यानुभवासिद्धत्वेन प्रकृतिपरिणामदेशातिरिक्तपापादेर्नाशातिरिक्तातिक्रमणासम्भवेन च (ब्र. आ. गि.)—

**भावप्रकाशः**

'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यति '। (गी. ४-३६)

. . . . . . . .

'बुद्धिर्व्यतितरिष्यति । (गी. २-५२)

'सर्वं पाप्मानं तरति' (बृ. उ. ६-४-२३)तरति ब्रह्महत्याम्'

'तरति शोकमात्मवित्' (छा. उ. ७-१-३)

इति गीताश्रुतिषु उदाहृतासु (वें. ना.) अतिक्रमणार्थकतॄधातौ नाशविवक्षासम्भवेऽपि अत्र (गी) अष्टमवक्ष्यमाणगतिद्वारकश्रुत्युक्तमुक्तिकालिकप्रकृतिदेशातिक्रमणरूपमुख्यार्थसम्भवेन नाशविवक्षा असङ्गतैवेति बोध्यम् ॥

एतेन वेङ्कटनाथादेः (ब्र. आ. गि.) निर्विशेषनिष्ठमायानाशपरत्वस्यात्र श्लोके आरोपणं न घटते; किन्तु 'ये प्रपद्यन्ते शरणमुपगच्छन्ति त एतां मायां तरन्ति मायया नाभिभूयन्ते' मायैव तु तेभ्यो भयेनापसर्पति वारवनितेव क्रोधनतपोधनात्। तेषां च अतिसुलभं तत्त्वज्ञानं' इति (वे. ना.) योजनं 'चतुर्विधा भजन्ते माम्' (गी. ७-१६)इति श्लोके ज्ञानीत्यस्य सगुणविषयकोपासनरूपज्ञानवन्मात्रपरत्वे नासङ्गतमिति बोध्यम्।

ज्ञानी इत्यत्र प्रशंसायामिनिः। प्राशस्त्यं च ज्ञाने भगवत्प्राप्तीच्छाफलकत्वम्। उपायभूतस्य भगवत एव इष्टफलताविषयकत्वमिति यावत्। चतुर्णां भगवतः स्वामित्वपितृत्वपर्यवसितकारणत्वधारकत्वादिविषयकज्ञाने समानेऽप्यार्तादीनां त्रयाणां पितृस्वाम्यतिरिक्तफलेच्छाभिधानेन फलप्रदत्वमात्रावगाह्येव ज्ञानं, न तु पितुः स्वामिन एव फलतावगाहि। चतुर्थस्यातिशयितसुकृतशालिनो 'येषां त्वन्तगतं

भावप्रकाशः

पापम्' (गी. ७-२८) इति वक्ष्यमाणादिशा स्वामिनः पितुः फलताधी-प्रतिबन्धकपापक्षयेण ज्ञानं प्रशस्तम् ।

अत एव ज्ञानिनो नित्ययुक्तत्वैकभक्तित्वे ज्ञानिभगवतोरेव परस्परमत्यर्थप्रीतिविषयता च ।

त्रयाणां स्वामिनि फलप्रदतया प्रीतिः, स्वामिव्यतिरिक्तेषु फलेषु चेत्युभयत्र प्रीत्या स्वामिनि नात्यर्थप्रीतिः । चतुर्थस्य तु स्वामिन उपायस्यैव फलतया अत्यर्थप्रीतिः । पूर्वं भगवतः स्वामित्वकारणत्वधारकत्वादिभिः परत्वमभिधाय 'एकभक्तिः' (गी. ७-१७) 'प्रियो हि' (गी. ७-१७) इत्याद्युक्त्या महनीयविषयकप्रीतिरेव भक्तिः, सा च चतुर्णां साधारणी, निरतिशया सा तु ज्ञानिन इत्युक्तं भवति ।

एतेन 'तमेव विदित्वाऽतिमृत्युमेति' इत्यत्र (श्वे. ६) 'तमीश्वराणां परमम्, (श्वे. ६) इत्याद्युक्तपरदैवतभक्त एव ज्ञानी विवक्षित इति निर्णीतम् ।

अथापरदेवताभक्तेभ्यः परदेवताभक्तानां तेष्वपि निरतिशयभक्तस्य वैलक्षण्यमाह (गी. ७-१८)—उदारा इत्यादिना । पूर्वं जीवपरयोर्धारकत्वोक्त्या 'ज्ञानी त्वात्मैव' इत्यत्र आत्मन्शब्दो धारणार्थमादत्त इति व्युत्पत्त्या धारकपरः । ययोः पितापुत्रयोः परस्परं निरतिशयप्रीतिः तयोरेकतरस्य विश्लेषेऽन्यतरस्य धारणालाभः संश्लेषे धारणलाभ इति लोकानुभवसिद्धम् । तद्वत् मयि ज्ञानिनो निरतिशयप्रीतिसत्त्वात् सर्वधारकस्यापि मम धारक एव ज्ञानीति भावः ।

अत एव 'भूतभृन्न च भूतस्थः' (गी. ९-५) इत्यादौ परस्य भूतस्थत्वनिषेधेऽपि ;—

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् । (गी. ९-२९)

इत्युक्तिः सङ्गच्छते ।

भावप्रकाशः

ज्ञानिनिष्ठे भगवतो धारकत्वे हेतुभूतात्यर्थप्रीतिं साधयति—(गी. ९-१८)आस्थित इत्यादिना। भगवदतिरिक्तप्राप्तीच्छाविरहसंवलित-भगवत्प्राप्तीच्छया ज्ञानिनो भगवत्यत्यर्थप्रीतिः, तया ज्ञानिनि भगवतोऽत्यर्थप्रीतिरिति उभयोः परस्परसत्ताप्रयोजकतेति भावः।

अत्र 'अनुत्तमाम्' इत्यनेन 'मत्तः परतरं नान्यत्किञ्चदस्ति' (गी. ७-७) इत्युक्तपरतत्वस्य ज्ञानिप्राप्यत्वबोधनमुखेन इतरेषां त्रयाणां प्रागुक्तचिदचिद्रूपावरतत्त्वप्राप्तीच्छा सूच्यते। तेन उपक्रमोक्तपरावर-तत्त्वत्रयरूपफलभेदेन भक्तित्रयमेव पर्यवस्यति।

एतेन 'वासुदेवस्सर्वमिति'(गी. ७-१९) इत्युत्तरत्र इतरेषां त्रयाणां प्रापकमात्रं वासुदेवः, प्राप्यमन्यत्; ज्ञानिनस्तु प्रापकप्राप्योभयं वासुदेव इति विवक्षितमिति बोध्यम्। सर्वाधारसर्वव्यापकदेवबोधकवासुदेवशब्दे (नायकसरे) उत्तरत्र वक्ष्यमाणा दिव्यमङ्गलविग्रहविवक्षाऽप्यन्यत्र (ह. शि. र. भू. दी.) उपपादिता।

'ज्ञानी त्वात्मैव' (गी. ७-१८) इत्यत्र ज्ञानिनः परमात्माभेदः; 'वासुदेवस्सर्वम्' (गी. ७-१९) इत्यत्र वासुदेवव्यतिरिक्तं किञ्चिन्नास्तीति सर्वमिथ्यात्वं च प्रतिपाद्यत इति परमतं न गीताचार्यसम्मतम्।

बहवो ज्ञानतपसा पूता मद्भावमागताः। (गी. ४-१०)
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥(गी. ४-३६)
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा॥ (गी. ४-३७)
न हि ज्ञानेन सदृशं पवित्रं . . . . (गी. ४-३८)

इत्युक्तार्थस्य अनौपाधिकजीवबहुत्वादेः—

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥ (गी. ५-१६)

भावप्रकाशः

इति विशदीकरणात् । आत्मन इति ज्ञानेनेत्यत्रान्वेति । अत्र निवृत्ताज्ञानानां बहुत्वोक्त्या प्रागुक्तं बहुत्वमनौपाधिकमिति स्फुटम् ।

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः । (गी. ५-१५)

इति पूर्वत्रापि जन्तुशब्दस्य जनिविशिष्टवाचित्वेन परसम्मतोपाधिविशिष्टावाचित्वात् । जीवे जनेर्धर्मभूतज्ञानप्रलयकालिकात्यन्तसंकोचनिवृत्तिरूपयत्किञ्चिद्विकासनिबन्धनतया कर्मणा भगवन्निग्रहेण ज्ञानावरणसत्त्वेन ज्ञानपूर्णविकासाभावेन मोहः ; ज्ञानेन तन्निवृत्तौ पूर्णविकासस्स्वाभाविक इति भगवज्ज्ञानतुल्यज्ञानवत्त्वेन 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' (गी. १४-२) इति वक्ष्यमाणदिशा प्रागुक्तं (गी. ४-१०) 'मद्भावमागताः' इत्येतदुपपादितं भवति । आत्मन्शब्दस्य 'यच्चास्य सन्ततो भावः' इति स्मृत्या सर्वव्याप्तियोग्य(सन्तत)धर्मभूतज्ञानवत्परतया 'ज्ञानी त्वात्मैव' (गी. ७-२८) इत्यत्र धर्मभूतज्ञानपूर्णविकासरूपमुक्त्यवश्यम्भावाभिप्रायेण सोऽप्यर्थस्सम्भवति । अतः 'न त्वेवाहं जातु नासम्' (गी. २-१२) इत्युपक्रम एवाहमर्थनित्यतोक्त्या अनौपाधिकजीवभेदसिद्धेश्च न जीवब्रह्मैक्यविवक्षा युक्ता । 'वासुदेवस्सर्वम्' (गी. ७-१९) इत्यत्र सर्वशब्दस्य चिदचित्सामान्यवाचित्वाङ्गीकारे सामानाधिकरण्यं धारणादिसम्पतितव्याप्तिनिबन्धनमेव ।

एतच्च—

अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ (गी. ११-४०)

इत्युत्तरत्रार्जुन एव कथयति । अत्र समित्युपसर्गेण प्राप्तौ वीर्यादिमूलकत्वं बोध्यते ।

भावप्रकाशः

द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ (म. भा. मी.)

इति वक्ष्यमाणदिशा धारणमत्र विवक्षितम् । अत्रैवोपक्रमे—

अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ।
त्वमादिदेवः पुरुषः पुराणः
त्वमस्य विश्वस्य परं निधानम् ॥
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ (गी. ११–३७–३८)

इत्यत्र पुरुषशब्दः 'स वा एष सर्वासु पूर्षु पुरिशयः' (बृ-उ ४) इत्युक्तरीत्या सर्वशरीरीत्यर्थकः । तदर्थः 'देवेश जगन्निवास विश्वस्य परं निधानम्' इति पदैः प्रकाशितः । 'जगन्निवास' इति व्याप्तिः । निधानमित्यत्राधारत्वमुक्तमिति समित्यत्रापि तद्विवक्षा युक्ता ।

किञ्च उपक्रमे 'देवेश' इत्यत्र नियमनसंवलितस्वामित्वमुक्तमिति तदपि समित्यत्र विवक्षितम् । एवंच धारणानियमनस्वामित्वान्यतमविशिष्टव्यापकत्वं शरीरितारूपसामानाधिकरण्यनिमित्तमिति पर्यवसन्नम् । 'त्वया ततं विश्वमनन्तरूप' इति मध्येऽप्येतदेव विवक्षितम् ।

अत्र 'सर्वं समाप्नोषि' (गी. ११-४०) इत्यत्र आप्लृधातुप्रयोगेण 'अथैष उ एव अकार आप्ततमार्थे आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते एष ह्यवाप्ततम एष साक्ष्येष ईश्वरोऽतस्सर्वगतो न हीदं सर्वमेष हि व्याप्ततम इदं सर्वं यदयमात्मा' (नृ. उ. ता. ५ खं.) इति नृसिंहोत्तरतापनीयपञ्चमखण्डश्रुतिर्मूलभूतेति ज्ञापितम् । अत्र व्याप्तिरेव सामानाधिकरण्यबीजम्, न त्वन्यत् । तत्र तमबर्थातिशयश्च ईश्वरशब्दार्थनियमनस्वामित्वरूप इति स्फुटं विदुषाम् ।

भावप्रकाशः

एतेन—

'सर्वं समाप्नोषि ततोऽसि सर्वः' (गी. ११—४०) इत्यर्जुनोक्ति-मूलभूतकृष्णोक्तौ—

अहमात्मा गुडाकेश सर्वभूताशयस्थितः॥ (गी. १०—२०)

न तदस्ति विना यत्स्यान्मया भूतं चराचरम्॥ (गी. १०—३९)

इत्युपक्रमोपसंहारावप्युक्तार्थपरौ, अविनाभावस्य व्याप्तिरूपत्वादिति बोध्यम्।

एवं च 'वासुदेवस्सर्वम्' (गी. ७-१९) इत्यत्र सर्वशब्दस्य जगद्वाचित्वाभ्युपगमे सर्वशरीरित्वमेव प्रतिपिपादयिषितमित्यास्थेयम्।

असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात्।

सर्वस्य च सदा ज्ञानात् सर्वमेतं प्रचक्षते॥ (म-भा-उद्यो ६८-११)

इति उद्योगपर्वनिर्वचनानुसारेण तु चिदचिदुपादानतानिबन्धनमेव सामा-नाधिकरण्यं न त्वध्यासबाधानिबन्धनम्।

दशमैकादशयोः सामानाधिकरण्यबीजं यदुक्तं तदेव 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३—२) इति त्रयोदशेऽपि बीजम्, अन्यस्य कल्पने मानाभावात्।

'न त्वेवाहम्' (गी. २—१२) इत्युपक्रमोक्तमहमर्थस्य जीवस्य नित्यत्वं सप्तमादावुक्तं भगवच्छरीरत्वं समानाधिकरणवाक्येष्वभिप्रेत-मित्यादिकं दृढीकर्तुं प्रवृत्ते पूर्वषट्कद्वयशेषभूते तृतीयषट्कत्रयोदशेऽपि ब्रह्मण एव देहादिक्षेत्रोपाधिको जीवभाव इति भ्रमं व्युदस्य शरीरवज्जी-वस्य भगवत्पारतन्त्र्यमवगमय्य भगवति भक्तिः स्थिरीक्रियते। तत्र—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।

एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥ (गी. १३—१)

**भावप्रकाशः**

इत्यत्र क्षेत्रक्षेत्रज्ञयोः वेद्यवेदितृभावोक्त्या आध्यासिकसंबन्ध उभयोर्व्युदस्तः । एवं क्षेत्रस्य परसंमतोपाधिताऽप्यपास्ता ।

अन्ते—

यावत्संजायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।

क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ (गी. १३–२६)

इत्यत्र संबन्धशब्दं विहाय संयोगशब्दोपादानेन क्षेत्रक्षेत्रज्ञयोरनाध्यासिकस्समानसत्ताक एव संयोग इति दर्शितम् ।

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।

क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ (गी. १३–३३)

इत्यत्र तयोस्स्वस्वामिभावसंबन्ध उक्तः ॥

एतेन क्षेत्रसंयुक्तस्वामित्वरूपं शरीरित्वमपि शरीरशब्दयोगार्थमात्रस्यान्यशब्दे लाभसंभवेन अन्यशब्दं विहाय 'इदं शरीरं' (गी. १३–१) इत्यत्र शरीरशब्दनिर्देशेन सूचितं क्षेत्रज्ञस्य दर्शितं भवति ।

एवं रवेः प्रभाद्वारा लोकप्रकाशकत्ववत् जीवस्य ज्ञानद्वारा क्षेत्रप्रकाशकत्वोक्त्या जीवभावस्य क्षेत्रोपाधिकत्वव्युदासपूर्वकं क्षेत्रप्रकाशकज्ञानवत्त्वमेव क्षेत्रज्ञत्वमित्युक्तं भवति ।

'क्षेत्रक्षेत्रज्ञयोरेवमन्तरम्' (गी. १३–३४) इति क्षेत्रक्षेत्रज्ञयोरन्तरस्याध्यायार्थतयोपसंहारेण 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३–२) इत्युपक्रमेऽपि परसम्मतं शास्त्रप्रधानतात्पर्यविषयभूतं जीवब्रह्मणोरैक्यं न विवक्षितम्, किं तु क्षेत्रक्षेत्रज्ञयोरन्तरमेव । तच्च उभयोः परस्परभेदरूपं परब्रह्मभेदरूपं च । एतदुभयज्ञानमेव—

क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम । (गी. १३–२)

इत्युत्तरार्धेऽभिप्रेतम् ।

### भावप्रकाशः

'क्षेत्रज्ञं चापि' (गी. १३–२) इत्यत्र एको निपातः क्षेत्रसमुच्चायक., अपरो मामित्यनन्तरयोजनया उक्तस्यानुक्तस्य वा रूपस्य समुच्चायक इत्येव परैरपि वक्तुं युक्तम्। न तु "चापीति निपातौ जीवस्याक्षरत्वज्ञानस्य देहादन्यत्वज्ञानेन समुच्चयार्थौ भिन्नक्रमौ, न क्षेत्रज्ञं साङ्ख्यवद्दृश्यादन्यदेव विद्धि, किंतु मां चापि विद्धीति संबध्यते" (शं. भा. आ. गि.) इति; तथा सति एकनिपातस्य वैयर्थ्यप्रसङ्गात्। क्षेत्रज्ञं विद्धीति प्रागनुक्त्या ज्ञानसमुच्चयोक्तेरयोगाच्च।

"चकारः क्षेत्रज्ञज्ञानं समुच्चिनोति। अपिरेवार्थः। सर्वक्षेत्रेषु द्रष्टारं क्षेत्रज्ञमन्यं विद्धि। तं च माममसंसारिणं परमेश्वरमेव विद्धीत्यर्थः" (भा. उ. दी) इत्युभयसार्थक्यकल्पनमपि न घटते; समुच्चयार्थे स्वरसस्यापेरवधारणार्थकत्वस्यास्वरसत्वात्। समुच्चयपदोत्तरावधारणार्थकशब्दस्य समुच्चितार्थान्ययोगव्यवच्छेदबोधकतायाः रामं लक्ष्मणं चैव विद्धीत्यादौ संमतत्वेऽपि उक्तावधारणस्यापिना बोधनासंभवात्। 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानम्' (गी. १३–२) 'क्षेत्रक्षेत्रज्ञयोरेवमन्तरम्' (गी. १३–३४) इत्युपक्रमोपसंहारगीतावचनविरुद्धत्वाच्च।

अतः 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३–२) इत्यत्रापि क्षेत्रक्षेत्रज्ञयोरन्तरमेव विवक्षितम्। उपसंहारे क्षेत्रक्षेत्रज्ञयोस्संयोगक्षेत्रस्वामिभावसंबन्धयोरभिधानेन तयोरेव इदं शरीरमित्यत्र सूचितशरीरशरीरिभावरूपतया क्षेत्रस्य शरीरत्वेन ज्ञानमेव—

'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' (गी. १३–१) इत्यत्रापि विवक्षितमिति 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३–२) इत्यत्रापि अस्मच्छब्दार्थस्य तदुभयशरीरसंबन्धितया ज्ञानमेवाभिप्रेतम्। अभेदव्यपदेशस्य एतत्संबन्धनिबन्धनताया गीतायां पूर्वमेव

भावप्रकाशः

स्थापनात् । क्षेत्रोपाधिक एव ब्रह्मणो जीवभाव इति भ्रमापनोदनाय प्रागुक्तार्थो विवेचितः ।

'सर्वक्षेत्रेषु' (गी. १३–२) इत्यस्य 'माम्' इत्यत्रैवान्वयेन 'बहवो ज्ञानतपसा' (गी. ४–१०) 'तेषामादित्यवज्ज्ञानं' (गी. ५–१–६) इति प्रागुक्तबहुजीवसिद्धान्तस्य न विरोधः ।

यद्वा 'इदं शरीरं' (गी. १३–१) इत्यादावेकत्वं न विवक्षितम्, ०वचनं जात्येकत्वपरं वा । तेन 'सर्वक्षेत्रेषु' (गी. १३–२) इत्यस्य 'क्षेत्रज्ञं' 'इत्यत्राप्यन्वये न विरोधः ।

वेङ्कटनाथादिभिः परैर्यद्यपि क्षेत्रज्ञ इत्यत्रैकत्व विवक्षितम् । 'सर्वक्षेत्रेषु' इत्यस्यापि तत्रैवान्वय इति निर्बन्धः कृतः, तथाऽपि न परेष्टार्थस्य सिद्धिः । तथा सति 'इदं शरीरं' (गी. १३–१) इत्यत्राप्येकत्वविवक्षाऽऽवश्यकीति 'एतद्यो वेत्ति' (गी. १३–१) इत्यत्र एकशरीरवेत्ता जीवः 'क्षेत्रज्ञं चापि' (गी. १३–२) इत्यत्र सर्वशरीरवेदिता परो विवक्षित इत्युभावपि क्षेत्रज्ञावत्र विवक्षितौ । 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानम्' (गी. १३–२) इत्यत्र क्षेत्रत्वक्षेत्रज्ञत्वधर्माभिप्रायको द्वित्वव्यपदेश इत्येव युक्तम् । 'क्षेत्रज्ञं चापि' (गी. १३–२) इति वाक्यस्य क्षेत्रज्ञशब्दयोगार्थनिरूपणानन्तरत्वेनेत्थं विवक्षाया विदुषां स्फुटत्वात् ।

एवं च गीताया क्वापि जीवब्रह्मैक्यं न प्रतिपिपादयिषितम् । चतुर्दशे 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' (गी. १४–२) इत्यत्राक्षरसरूपत्वं मुक्तस्य निश्चितमिति 'अक्षरात्परतः परः' इति श्रुतेः (वे. सा.) उक्तार्थानुसारेण 'कूटस्थोऽक्षर उच्यते' (गी. १५-१६) इत्यत्र अक्षरो मुक्त एवेति निर्णयसंभवेन पञ्चदशे पुरुषोत्तमशब्दनिर्वचनस्य यथोक्त एवार्थः ।

**भावप्रकाशः**

अतश्च गीतोक्त एव श्रीभागवते निर्गुणात्यन्तिकभक्तियोगनिरूपणपरवाक्यस्थपुरुषोत्तमशब्दस्यार्थ इति निर्गुणभक्तियोगो निर्विशेषविषय इत्यत्र न कोऽपि शब्दस्तत्र साधकः; किं तु उपपादितरीत्या सगुणविषयक इति सिद्धम् ।

एवं-- क्वचित् भक्तिः ज्ञानरूपा इति, क्वचित्तु प्रेमरूपा, प्रेमरूपभक्तेर्ज्ञानरूपभक्तिद्वारैव मुक्तिहेतुतेति परेषां कल्पनाऽप्यनादरणीया । प्रेमस्नेहप्रीत्यादिशब्दव्यपदेश्यं ज्ञानमेव न ततोऽतिरिच्यत इति वेदार्थसंग्रहान्ते भगवतैव समर्थितत्वात् ।

एतेन "बृहन्नारदीयादौ अधममध्यमभक्तावुक्त्वा—

विधिसिद्ध्यै भजेद्यस्तु दासवच्चक्रपाणिनम् ।
भक्तानां प्रवरो ह्येष सर्वशास्त्रार्थकोविदः ॥

इत्यनेनोत्तमभक्तमुक्त्वा—

अहमेव परो विष्णुर्मत्तस्सर्वमिदं जगत् ।
इति यस्सततं पश्येत्तं विद्यादुत्तमोत्तमम् ॥

इत्यनेन उत्तमोत्तमभक्तेस्तत्वसाक्षात्काररूपत्वोक्तेः, गीतायां च— 'आर्तो जिज्ञासुः' (गी. ७–१६) इत्यादिना ज्ञानिनश्चतुर्थभक्तत्वोक्त्या तथोक्तेः 'ज्ञानस्यैव भक्तित्वेनाविरोधः' (ल. चं. ८९१) इति निर्विशेषज्ञानतात्पर्येण ब्रह्मानन्दोक्तिरप्यनवकाशा । उत्तमोत्तमभक्ते दासवद्भजननिषेधविरहेण सर्वशास्त्रार्थकोविदत्वस्य उत्तमभक्ते उक्तस्य उत्तमोत्तमभक्तेऽपि विवक्षावश्यम्भावेन भागवते निर्गुणात्यान्तिकभक्तियोगनिष्ठस्य भगवद्धिष्ण्यदर्शनस्पर्शपूजादेरुक्तिपूर्वकसेवनोक्त्या दासवद्भजनस्य उत्तमोत्तमभक्ते बृहन्नारदीयेऽपि विवक्षानिर्णयात् ।

## भावप्रकाशः

भागवते निर्गुणभक्तौ भगवतस्सर्वान्तर्यामिताया ज्ञानं समदर्शनहेतुभूतं यदभिहितम्, तदेव 'अहमेव परं ब्रह्म' (बृ. ना.) इति श्लोके विवक्षितम्।

प्रतर्दनविद्यायामुपक्रमे 'मामुपास्स्व (कौषी. उ. ३-१) इतीन्द्रोक्तौ अस्मच्छब्दार्थे उपसंहारे परमात्मनिरूपणानन्तरं 'स म आत्मेति विद्यात' (कौषी. उ. ३-९) इत्युक्तया इन्द्रेण स्वान्तर्यामीतिनिर्णयकरणेन अत्रापि स्वान्तर्यामिणस्सर्वान्तर्याम्यभेदविवक्षासंभवात्।

सर्वगत्वादनन्तस्य स एवाहमवस्थितः।
मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने॥ (वि. पु. १-१९-८५)

इतिवचनैकरस्याच्च।

एवं "साक्षात्कारस्य प्रसादहेतुत्वकल्पनं तु मौढ्यादेव; न हि लोके तथा क्लृप्तम्। अविद्यानिवृत्तेः प्रसादजन्यताऽपि न लोके क्लृप्ता। निगडमोचनादेस्तत्त्वेन क्लृप्तावपि न तद्दृष्टान्तेन साऽनुमातुं शक्या; पक्ष-दृष्टान्तयोरेकरूपेण साध्यादर्शनात्। तस्मात् 'तस्य तावदेव' (छा. उ. ६-१६-७) इत्यादिश्रुत्येकवाक्यतया 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे. उ. १-१०) इत्यत्र अन्तपदं भोगान्तपरम्" (ल. चं. ८९१ पृ.) इत्याद्युक्तिरपि नादर्तव्या।

उक्तभक्तिरूपसाक्षात्कारस्य प्रसादजनकत्वं लोकानुभवसिद्धमेव। अत एव—

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' (गी. ७-१७) इत्यत्र ज्ञानिनिरतिशयप्रीतेर्भगवत्प्रीतिहेतुत्वोक्तिस्स्वरसतस्सङ्गच्छते। अविद्याशब्दस्य कर्मार्थकतया कर्मणो निग्रहरूपतया तन्निवृत्तावुक्त-भक्तेर्हेतुत्वं युक्तमेव।

'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः'

भावप्रकाशः

(श्वे.उ.१-१०) इत्यत्र पराभिप्रायात् सर्वमायातरणं विवक्षितमिति पूर्वमेवोक्तम् । स्थूलदेहवियोगकाले एतल्लोकात्मकप्रकृत्येकदेशतरणम्, प्रकृत्यवसान एव प्रकृतिसामान्यतरणं विवक्षितम् । एतेन 'त्रयं यदा विन्दते ब्रह्ममेतत्' (श्वे. उ.१-९) इति पूर्वश्रुत्युक्तब्रह्मप्राप्तिः प्रकृतिसामान्यतिक्रमणानन्तरमेवेति निर्धारितं भवति । एतेन 'तमेव विदित्वाऽति मृत्युमेति' (श्वे. उ. ३–८) इत्यत्र 'तमसः परस्तात्, इति पूर्ववाक्यानुसारेण 'मृत्युमति तमेवैति' इति योजनया मृत्युतमश्शब्दितप्रकृतिमतिक्रम्यैव प्राप्तिर्विवक्षितेति सिद्धम् ।

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छा. उ. ६ १४-२) इत्यत्र विशेषसमर्पकपञ्चम्यन्तपदाविरहेण संपत्तिप्रतिबन्धकसामान्यविमोक्ष एव विवक्षितः, कर्मणस्तद्वासनायास्सूक्ष्मशरीरस्य च संपत्तिप्रतिबन्धकत्वेन तत्सामान्यनिवृत्तेः 'पुण्यपापे विधूय निरञ्जनः' (मु. उ. ३-१-३)इति श्रुतितात्पर्यविषयत्वेन कर्मवासनानिवृत्तयोर्निग्रहनिवृत्तिरूपतया 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा. उ. ६-१४-२) इत्यत्रापि प्रसादद्वारकत्वं मुक्तेर्विदुषां स्फुटम् ।

प्रारब्धकर्मणः तद्भोगावच्छेदकशरीरस्य वा विमोक्ष एव एतच्छ्रुतिप्रतिपाद्य इत्यङ्गीकारेऽपि 'विमोक्षसम्पत्त्योरेककालिकत्वमेवात्र विवक्षितम्' (शां. उ. भा.) इति न घटते; अथशब्दवैयर्थ्यात् । अथशब्दार्थानन्तर्यं च व्यवधानसहम् । तथा हि—पूर्वं सुषुप्तौ सत्सम्पत्तिं प्रक्रम्य 'सन्मूलास्सोम्येमास्सर्वाः प्रजाः' (छा. ६-८-४) इति प्रजानां सन्मूलकत्वाभिधानेन पुत्रस्य पितृप्राप्तिवत् चेतनानां सुषुप्तौ सत्सम्पत्तिरिति सूचनेन सुषुप्तिप्रकरणान्तरानुरोधेन नाडीपुरीतद्गमनपूर्वकनायास्सत्सम्पत्तौ सिद्धायास्तत्रापि विवक्षावश्यकत्वेन च सत्सम्पत्तिर्गमनपूर्वि-

**भावप्रकाशः**

केत्यपि विवक्षितम् । अत्रोक्ता सत्सम्पत्तिरपि गमनपूर्विकेति निर्णयाय "तत्त्वमसि" (छा. उ. ६-८-६) इति वाक्योपक्रमात्पूर्वमेव "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते" (छा. उ. ६-८-६) इति उत्क्रान्तिमुक्त्वा "इमास्सर्वाः प्रजास्सति सम्पद्य न विदुः" (छा. उ. ६-९-२) इति सुषुप्तौ प्रजानां सम्पत्त्यज्ञानोक्त्या मुक्तौ सम्पत्तेस्तद्वैलक्षण्यं सूचयित्वा "यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः" (छा. उ. ६-१४-१) "तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति" (छा. उ. ६-१४-२) इत्यत्र ग्रामादिदृष्टान्तोक्त्या सत्सम्पत्तिरपि देशविशेषोपदेशानन्तरकालिकगमनपूर्विकेति निर्णीयानन्तरखण्डे पुनरुत्क्रान्त्यभिधानेनोक्तार्थो दृढीकृतः ।

एवं दहरविद्यायामपि 'त इमे सत्याः कामा अनृतापिधानाः' (छा. उ. ८-३-२) इत्युपक्रम्य 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' (छा. उ. ८-३-२) इत्यत्र सुषुप्तौ जीवस्य ब्रह्मगमनेऽपि अनृतशब्दवाच्यप्रतिबन्धककर्मणो नाशाभावेन सत्यानन्तगुणविशिष्टब्रह्मानुभवाभावमुक्त्वा "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" ( छा. उ. ८-३-४) इत्यादिनोत्क्रान्तिपूर्वकोपसंपत्तिः उपसंपत्तव्यस्य ब्रह्मणः नित्यानित्यचेतनाचेतननियामकत्वेन सत्यशब्दवाच्यताऽपि प्रतिपादिता ।

भावप्रकाशः

अत्रोपसंपत्तव्यस्य ब्रह्मणो नित्यानित्यनियामकत्वकथनेनोत्क्रान्त्यनन्तरकालिकसगुणब्रह्मानुभवः प्रतिबन्धककर्मादीनां निश्शेषक्षयादिति सिध्यति।

एतेन 'तस्य तावदेव चिरम्' (छा. उ. ६-१४-२) इत्यादिश्रुतावपि संपत्तिप्रतिबन्धकसामान्यनाशनिबन्धना सपत्तिः सगुणब्रह्मानुभवरूपैव। सुषुप्तौ जीवब्रह्मणोर्भेद इव मुक्तावपीति सिद्धम्।

अतएव "सुषुप्त्युत्क्रान्त्योर्भेदेन" (शा. सू. १-४-४४) इत्यत्र जीवपरयोर्भेदं साधयता सूत्रकारेण 'भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते' (शा. सू. ४-१-१९) इत्यत्र एतच्छ्रुत्युक्ता संपत्तिः उत्क्रान्तिगत्यनन्तरकालिकैव, सद्विद्यायामेवोत्क्रान्त्यभिधानात्। 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. उ. ८-३-४) इत्यत्र 'सम्' इत्युपसर्गसमभिव्याहारेण सूक्ष्मशरीरविश्लेषपर्यन्तस्य स्थूलशरीरादुत्थानस्य विवक्षितत्वेन सूक्ष्मशरीरविश्लेषस्य गतिमध्य एव संभवेन गतिमन्तरा अयोगेन उपसंपद्येत्यत्रापेत्युपसर्गेण च गत्यनन्तरकालिकसंपत्तेरेवाभिप्रेतत्वादित्याशयेन पादद्वयेनोत्क्रान्तिगत्योर्निरूपणेन 'अस्माच्छरीरात्समुत्थाय' (छा. उ. ८-३ ४) इति वाक्यार्थं निर्णीय 'संपद्याविर्भावः स्वेन शब्दात्' (शा. सू. ४-४-१)। इत्यादिना 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छां. उ. ८-३-४) इत्यादिश्रुत्यर्थं निर्धार्य 'अनावृत्तिश्शब्दात्' (शा. सू. ४-४-२२) इत्यन्तिमसूत्रे 'ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छां. ८-१५-१) इति श्रुत्युक्तसम्पत्त्यनन्तरकालमपुनरावृत्तिस्थापनेन सौषुप्तसंपत्तेर्वैलक्षण्यं मुक्तसंपत्तेरित्यपि दर्शितम्।

तत्वमुक्ताकलापः

तन्निष्पत्त्यै फलेच्छाद्युपाधिविरहितं कर्म वर्णाश्रमादेः ।

सर्वार्थसिद्धिः

'अपाम सोममसृता अभूम' इत्यादिदर्शनात्कर्मभिरेव मुक्तिः किं न स्यादित्यत्राह—तदिति। केवलधर्माणां क्षयिफलत्वनिश्चयात्तत्रामृतत्वादिवचनमन्यपरम् । विद्याङ्गेषु तु मुक्तिसाधनत्वश्रुतिः स्तुत्यर्था । अत 'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' *इत्यादिभिराभिप्रेतं संनिपत्योपकारकत्वमिहायुक्तमिति भावः ।

आनन्ददायिनी

**अपामेति**—चातुर्मास्यप्रकरणश्रुतस्य कर्मफलमात्रोपलक्षकत्वादिति भाव । **क्षयिफलत्वनिश्चयादिति**। आवृत्तिविधानादिभिरिति शेषः । **अन्यपरमिति** । बहुकालावस्थानरमित्यर्थः । अङ्गिफलमङ्ग उपचर्यत इति परिहारान्तरमाह—**विद्येति** । अङ्गिफलमङ्गे उपचर्यत इत्यत्र किं नियामकमित्यत्राह—**अत इति** । श्रुत्या विद्यां प्रत्यङ्गत्वेन कर्मणां विनियोगादिति भावः ।

भावप्रकाशः

एवं च "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" (छा. उ. ६-१४-२) इति श्रुतिः पराभिप्रेतमर्थं न साधयितुं प्रभवति । अतः—

"स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते ।"

इत्युक्तदिशा श्रुतिशतविहितध्यानं समाधिपर्यवसितं मुक्त्युपायो भक्तिरिति सुष्ठूक्तमिति दिक् ॥

*इत्यादिभिरिति—आदिशब्दे "कुर्वन्नेवेह कर्माणि" (ईश. उ. २) इति श्रुतिर्विवक्षिता । इयं च श्रुतिर्विद्याङ्गकर्मविधिपरेति ईशावास्यो-

## तत्त्वमुक्ताकलापः

# ज्ञानध्यानादिवाचां समफलविषया सैव युक्ता

## सर्वार्थसिद्धिः

फलशब्दोऽत्र स्वर्गादिविषयः। फलसङ्गकर्तृत्वाभिमानत्यागे हि स्वरूपानुरूपफलसाधनाङ्गत्वमित्यभिप्रायेण उपाधिरहितत्वोक्तिः। उत्तरेणादिशब्देन गुणनिमित्तादिसंग्रहः। ननु वेदनध्यानोपासनादिशब्दैर्मुक्त्युपायोक्तौ यथार्हं विकल्पः स्यादित्यत्राह—ज्ञानेति। समफलविषयेत्येकत्र विश्रमौचित्यप्रदर्शनम्। संभवति गत्यन्तरेऽष्टदोषविकल्पो न न्याय्यः। न चैकस्मिन्नधिकरणे गुरुलघुविधिः स्यात्। नापि ज्योति-

## आनन्ददायिनी

ननु फलेच्छाद्युपाधिरहितमित्ययुक्तम्, मुमुक्षापूर्वकविद्येच्छायास्सत्त्वादित्यत्राह—**फलशब्द इति**। ननु फलान्तरार्थभक्त्यङ्गकर्मानुष्ठाने फलेच्छाविरहो नास्तीत्यत्राह —**फलेति**। यदर्था भक्तिस्तदन्यफलेच्छाराहित्यं विवक्षितमिति भावः। आदिशब्देन वयोवस्थादिसंग्रहः। नन्विति। शब्दान्तरेण भेदप्रतीतेरिति भावः। ननु दहरादीनां विकल्पोऽङ्गीक्रियते, तद्वदत्राह—न चैकस्मिन्निति। युक्तं दहरादेर्विकल्प इति, तुल्यशिष्टत्वात्। न स्नानवदधिकारिभेदाद्विकल्पः, तद्भेदाश्रवणादिति भावः। ननु ज्योतिष्टोमादिवत् फलभेदाद्विकल्पोऽस्त्वित्यत्राह—**नापीति**। सर्वकर्मनिवृत्तौ तारतम्यासंभवादिति भावः।

## भावप्रकाशः

पनिषद्भाष्ये उक्तम्। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" (बृ. उ. ६-४-२२) इति श्रुतौ 'तदिह भक्तिरूपब्रह्मवेदनकामः शान्त्यादिसहितैर्यज्ञादिभिस्तद्भावयेदिति प्रयोगविधिर्विवक्षितः' (त. टी.)

तत्त्वमुक्ताकलापः

## प्रतिष्ठा सामान्योक्तिः

### सर्वार्थसिद्धिः

ष्टोमाग्निहोत्रादिवदिह फलतारतम्यसंभव इति भावः । प्रतिष्ठा तत्तत्सा-मान्याकारैः प्रतिपाद्येत्यर्थः ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इति कठवल्लीवाक्याद्भक्तेर्ज्ञानहेतुता गम्यते । गीयते च 'भक्त्या मामभिजानाति' इत्यादि । संजयश्चाह—

शुद्धभाव गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ।

इति । अतो भक्तिसाध्यज्ञानविशेषान्मुक्तिः स्यादित्यत्राह—सामान्येति । अय भाव. * भक्तेर्ज्ञानसाधनत्वश्रुतिः * पर्वभेदेनानेकफलतया स्यात् ।

### आनन्ददायिनी

तत्तत्सामान्येति । विशेष एव सामान्यशब्दविधेय इत्यर्थः । ननु सामान्यशब्दो विशेषे पर्यवस्यतु । तावता भक्तेर्ज्ञानसाधकत्वशङ्कायां कः परिहार इत्यत्राह—**अयं भाव** इति । अत्रापि भक्तिशब्दः पर्वविशेषविशिष्टभक्तिपर । भक्तिसाध्यज्ञानसाध्यपर्वविशेषविशिष्ट भक्तिरूपमेव ज्ञानं विवक्षितमिति सर्वमुपपन्नमिति भावः ॥

### भावप्रकाशः

इति स्पष्टम् । *भक्तेर्ज्ञानसाधनत्वश्रुतिरिति । कठवाल्ल्यामेत-च्छ्रुतिरिदानीं नोपलभ्यते । श्वेताश्वतरान्ते चोपलभ्यते । "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" (श्वे. उ. ६-२३) इत्यत्र परेति विशेषणेन अवरभक्तिः परभक्तिश्चेति भक्तौ तारतम्यं प्रतीयते । 'यथा देवे तथा गुरौ' (श्वे. उ. ६-२३) इत्यनेनापि परभक्तावपि केश्चित्तारतम्यं सूच्यत इत्यभिप्रेत्याह—* पर्वभेदेनेति । "पृथ-

### सर्वार्थसिद्धिः

अत एव हि 'भक्त्या त्वनन्यया शक्यः' इत्यादिना ज्ञानदर्शनप्राप्ति-साधनत्वोक्तिः ।

### आनन्ददायिनी

अत एवेति । यत एव भक्तिशब्दोऽनेकावस्थाविशिष्टभक्ति-रूपज्ञानपरः, अत एव भक्तित्वरूपसामान्येन ज्ञानसाधकत्वोक्तिः संगच्छत इति भावः ।

### भावप्रकाशः

गात्मानं प्रेरितारं च मत्वा" (श्वे. उ. १-६) "तपः प्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्" (श्वे. उ. ६-२१) इत्यादौ ज्ञान, "ध्याननिर्मथनाभ्यासाद्देवं पश्येत्" (श्वे. उ. १—१४) "तमक्रतुं पश्यति वीतशोको धातुः प्रसादात्" (श्वे. उ. ३-२०) इत्यादौ दर्शनं, "तमेव विदित्वाऽति मृत्युमेति, नान्यः पन्था विद्यतेऽयनाय" (श्वे. ६-१५) इत्यादावनुभवरूपा प्राप्तिः, इति पर्वभेदोऽवसेयः । "तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" (श्वे. उ. ६-२३) इत्यत्र कथितार्थप्रकाशः फलमित्युक्तम् । 'व्यक्ताव्यक्तं भरते विश्वमीशः' (श्वे. उ. १-८) 'क्षरात्मानावीशते देव एकः' (श्वे. उ. १-१०) 'युजे वां ब्रह्म पूर्व्यं नमोभिः' (श्वे. उ. २-५) 'अजं ध्रुवं सर्वतत्त्वैर्विशुद्धम्' 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' (श्वे. उ. ३-८) 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे. उ. ६-८) 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (श्वे. उ. ६-१३) 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' (श्वे. उ. ६-१३) 'प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसार-मोक्षस्थितिबन्धहेतुः' (श्वे. उ. ६-१६) 'य ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय' (श्वे. उ. ६-१७) 'तꣳह देवमात्म-

## तत्त्वमुक्ताकलापः

# समानप्रकरणपठिता पर्यवस्येद्विशेषे ॥ २९ ॥

## सर्वार्थसिद्धिः

'भक्त्या लभ्यस्त्वनन्यया' इति च नियम्यते। भक्तिसाध्यं प्रापकज्ञानमपि भक्तिलक्षणोपेतम्।

## आनन्ददायिनी

नियम्यत इति। भक्तिर्दर्शनाद्यवस्थापन्नैव मोक्षसाधनत्वेन नियम्यत इत्यर्थः।

## भावप्रकाशः

बुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे. उ. ६–१८) 'अमृतस्य परं सेतुम्' (श्वे. उ. ६–१९) इत्यादिना कथितानामर्थानां प्रकाशः, ज्ञानं, दर्शनं, प्राप्तिरनुभवरूपा, इति अनन्तफलसाधनभूता पर्वभेदविशिष्टा भक्तिरस्यां श्रुतौ विवक्षितेति भावः। *मूले समानप्रकरणेति। इदमुपलक्षणमुपक्रमोपसंहारयोः। इदं चोत्तरश्लोके मूल एव स्फुटम्। यत्र चोपक्रमोपसंहारादिकं विशेषनिर्णायकं नास्ति तत्रापि समानप्रकरणान्तरपठितविशेष एव पर्यवसानं युक्तमिति भावः। 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' (शा. सू. १–१–३२) इति सूत्रे ज्ञानसामान्यवाचिशब्द उपासनायां पर्यवस्यतीत्ययमर्थस्सूत्रकृतो विवक्षितः। अत एव परैः "उपासात्रैविध्यात्—एवं सति त्रिविधमुपासनं प्रसज्येत। जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति। न चैतदेतस्मिन्वाक्येऽभ्युपगन्तुं युक्तम्। उपक्रमोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते। 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञ आत्मा तं मामायुरमृत-

**भावप्रकाशः**

मित्युपास्स्व , इत्युक्त्वा अन्ते 'स एष प्राण एव प्रज्ञ आत्मा आनन्दोऽजरोऽमृतः' इत्येकरूपावुपक्रमोपसंहारौ दृश्येते " (शा. सू. शं. भा. १-१-३१) इति प्रथमव्याख्याने 'उपासात्रैविध्यात्' इत्यस्य उपासात्रैविध्यप्रसङ्गादित्यर्थवर्णनमनुचितमित्यभिप्रेत्य "अथवा न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते । कथम्? उपासात्रैविध्यात्—त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च" (शा. सू. शं. भा. १-१-३१) इति वृत्तिकारसिद्धान्तमवलम्ब्य सूत्रव्याख्यानात् । अत्र 'मामेव विजानीहि' (कौषी. उ. ३-१) 'स म आत्मेति विद्यात्' (कौषी. उ. ३-९) इत्युपक्रमोपसंहारयोर्वेदनं 'तं मामायुरमृतमित्युपास्स्व' (कौषी. उ. ३-१) इत्युक्तोपासनमेव हिततमं विवक्षितम् । यथैकवाक्यतादिनिर्वाहस्तथा निरूपितं प्राचां ग्रन्थेषु । पूर्वत्र 'अध्यात्मसम्बन्धभूमा ह्यस्मिन्' (शा. सू. १-१-२९) इत्यत्र सम्बन्धानां श्रुतितात्पर्यविषयत्वोक्त्या 'सम्बन्धानुपपत्तेश्च' (शा. सू. शं. भा. २-२-३८) इत्यत्र परैः "अपिचागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति नियमोऽस्ति" इत्युक्त्या च श्रुतितात्पर्यविषयसम्बन्धेऽनुपपत्त्युक्तेरयोगेन प्राणधर्मप्रज्ञाधर्म(अचेतनचेतन)स्वगतधर्मत्रयस्य पारमार्थिकत्वेन त्रिविधोपासनस्य निरतिशयपुरुषार्थसाधनत्वरूपहिततमत्वं संभवतीति 'शास्त्रदृष्ट्या—' (शा. सू. १-१-३०) इत्यत्र स्वशासनावबोधिशास्त्रशब्दसूचितोपासनाविधौ न काऽप्यनुपपत्तिरिति दिक् ॥

ननु परैः "द्विरूपं हि ब्रह्मावगम्यते, नामरूपविकारभेदोपाधिविशिष्टं, तद्विपरीतं च सर्वोपाधिविवर्जितम्" (शा. सू. शं. भा. १-१-१२) इत्युपक्रम्य श्रुतीरुदाहृत्य "एवं सहस्रशो विद्याऽविद्याविषयभेदेन ब्रह्मणो

**भावप्रकाशः**

द्विरूपतां दर्शयन्ति वाक्यानि। तत्राविद्यावस्थायां ब्रह्मण उपास्योपसकादिलक्षणः सर्वो व्यापारः। तत्र कानिचिद्ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित्क्रममुक्त्यर्थानि, कानिचित्कर्मसमृद्ध्यर्थानि। तेषां गुणविशेषोपाधिभेदेन भेदः। एक एव तु परमात्मेश्वरस्तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति, तथाऽपि यथागुणोपासनमेव फलानि भिद्यन्ते। 'तं यथायथोपासते तदेव भवति' (मुद्गलोपानिषत् ३–३) इति श्रुतेः, 'यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छा.उ. ३–१४–१) इति च। स्मृतेश्च—

'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥' (गी. ८–६)

इति। यद्यप्येक आत्मा सर्वभूतेषु स्थावरजङ्गमेषु गूढस्तथाऽपि चित्तोपाधिविशेषतारतम्यादात्मनः कूटस्थनित्यस्यैकरूपस्याप्युत्तरोत्तरमाविष्कृतस्य तारतम्यमैश्वर्यशक्तिविशेषैः श्रूयते—'तस्य य आत्मानमाविस्तरां वेद' (ऐ. आ. २, ३–२–१) इत्यत्र। स्मृतावपि--

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवागच्छ त्वं मम तेजोंऽशसंभवम्॥' (गी. १०–४३)

इति यत्र यत्र विभूत्याद्यातिशयः स स ईश्वर इत्युपास्यतया चोद्यते" (शा. सू. शं. भा. १–१–११) इत्युक्तम्। अत्र अविद्यावस्थायामेवापरब्रह्मविषयाण्युपासनानि क्रममुक्त्यर्थानि, न तु साक्षान्मुक्तिसाधनानि। तरतमभावापन्नफलानि जनयन्ति, न तु निरतिशयसमफलमित्यर्थः स्फुटः॥

एवं "तस्मादपरब्रह्मविषया गतिः। यत्र परापरब्रह्मविवेकानवधारणेनापरस्मिन्ब्रह्मणि वर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते। किं द्वे ब्रह्मणी परमपरं चेति?। बाढं द्वे। 'एतद्वै सत्यकाम परं चापरं च

**भावप्रकाशः**

ब्रह्म यदोङ्कारः' (प्र. उ. ५–२) इत्यादिदर्शनात्। किं पुनः परं ब्रह्म किमपरमिति—उच्यते। यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दैर्ब्रह्मोपदिश्यते तत्परम्। तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टमुपासनायोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' (छा. उ. ३-१४-२) इत्यादिशब्दैस्तदपरम्। नन्वेवमद्वितीयश्रुतिरुपरुध्येत। न। अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात्। तस्य चापरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाणं 'स यदि पितृलोककामो भवति' (छा. उ. ८-२-१) इत्यादिजगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति, अनिवर्तितत्वादविद्यायाः" (शा. सू. शं भा. ४–३–१४) इति चोक्तम्। अत्र अपरब्रह्मोपासनफलमेव गतिः। अपरब्रह्मोपासनफलमैश्वर्यादिकं सांसारिकफलमेव इति व्यक्तम्। अत्र ग्रन्थद्वये गुणविशिष्टोपासनं न विद्यारूपमिति स्फुटम्।

एवं "ननु ज्ञानं नाम मानसी क्रिया, न, वैलक्षण्यात्। क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च। यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति, 'संध्यां मनसा ध्यायेत्' (ऐ. ब्रा. ३–८–१) इति चैवमादिषु। ध्यानं चिन्तनं यद्यपि मानसं, तथाऽपि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं, पुरुषतन्त्रत्वात्। ज्ञानं तु प्रमाणजन्यम्। प्रमाणं च यथाभूतवस्तुविषयम्। अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यं केवलं वस्तुतन्त्रमेव तत्, न चोदनातन्त्रम्, नापि पुरुषतन्त्रम्। तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम्। यथा च 'पुरुषो वाव गौतमाग्निः' (छा. ५–७–१) 'योषा वाव गौतमाग्निः' (छा. ५–८–१) इत्यत्र योषित्पुरुषयो-

भावप्रकाशः

रग्निबुद्धिर्मानसी भवति। केवलचोदनाजन्यत्वात्क्रियैव सा पुरुषतन्त्रा च। या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा। नापि पुरुषतन्त्रा। किं तर्हि प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतन्न क्रिया। एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम्। तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम्। तद्विषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्। अहेयानुपादेयवस्तुविषयत्वात्। किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य.' इत्यादीनि विधिच्छायानि वचनानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः" (शा. सू. शं. भा. १-१-४) इति समन्वयाधिकरणे वृत्तिकारमतनिरसनावसरे उक्तम्। अत्रोपासनस्य चोदनातन्त्रत्वं पुरुषतन्त्रत्वं च, न वस्तुतन्त्रत्वम्। ज्ञानस्य तु न चोदनातन्त्रत्वपुरुषतन्त्रत्वे, किन्तु प्रमाणजन्यत्वं वस्तुतन्त्रत्वं चेति स्फुटमुक्त्या उपासनस्य ज्ञानत्वमेव नास्तीति सिध्यति। तेन मानसत्वाभ्युगममात्रेण नवीनसंमताविद्यावृत्तित्वाभावस्य प्रमाऽसाधारणान्तःकरणवृत्तित्वस्य च उपासने सिद्धिभ्रमो निरस्तः। क्रियारूपान्तःकरणवृत्तित्वाभ्युपगमेऽपि ज्ञानरूपान्तःकरणवृत्तित्वानङ्गीकारात्।

एवं सर्ववेदान्तप्रत्ययाधिकरणे "अविधिप्रधानैर्हि वस्तुपर्यवसायिभिर्ब्रह्मवाक्यैर्ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः 'तत्तु समन्वयात्' (ब्र. सू. १-१-४) इत्यत्र। तत्कथमिमां भेदाभेदचिन्तामारभत इति। तदुच्यते—सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञानभेदाभेदचिन्तेत्यदोषः। अत्र हि कर्मवदुपासनानां भेदाभेदौ संभवतः। कर्मवदेव चोपासनानि दृष्टफलान्यदृष्टफलानि चोच्यन्ते। क्रममुक्तिफलानि च कानिचित्सम्यज्ज्ञानोत्पत्तिद्वा-

भावप्रकाशः

रेण । तेष्वेषा चिन्ता संभवति" (शा. सू. शं भा. ३-३-१) इति । एवमेव "न तु मुक्तौ कश्चिदतिशयसंभवोऽस्ति । विद्याभेदाभावादपि तत्फलभेदनियमाभावः, कर्मफलवत् । न हि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्तीति । सगुणासु तु विद्यासु 'मनोमयः प्राणशरीरः' (छा. उ. ३-१४-२) इत्याद्यासु गुणावापोद्वापवशाद्भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः कर्मफलवत् । तथा च लिङ्गदर्शनम् 'तं यथायथोपसते तदेव भवति' (मुद्गलोपनि ३-३) इति । नैवं निर्गुणायां विद्यायाम्, गुणाभावात्" (शा. सू. शं भा. ३-४-५२) इति तृतीयाध्यायान्ते चोक्तम् । अत्राप्युपासनायां न समफलत्वम्, अपि तु विषमफलत्वमेवेति पूर्ववदेव सिद्धान्तः कृतः ।

"यत्तु—सगुणपरत्वं सर्वत्रैव वेदान्त इति निर्गुणत्वं नाद्यपि सिद्धमिति, तन्न । 'केवलो निर्गुणः' । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं । ततो यदुत्तरतरं तदरूपनामयम् । य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' (श्वे. उ. ३-९-१०) इति । 'द्वे विद्ये वेदितव्ये परा चैवापरा च' (मुं उ. १-१-४) 'तत्रापरा ऋग्वेद' (मुं. उ. १-१-५) इत्यादि । 'अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्' इत्यादिश्रुतेः ।

'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरम्'

इत्यदिगीतावाक्यात्,

'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसांज्ञितम् ॥'

इत्यादेः,

'न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः । अतः स्थूलं हरे

भावप्रकाशः

रूपं चिन्त्यम् ' इति विष्णुपुराणात्, ' संचिन्तयेद्भगवतश्चरणारविन्दं ' इत्यादेः,

'मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति मनस्सहसा यथाऽर्चिः। आत्मानमत्र पुरुषोऽव्यवधानमेकमन्वीक्षते '

इत्यादिसगुणभजनोपक्रमकात्—

'भक्त्या ह्यसङ्गः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः '

इत्यादेश्च भागवतात्,

" द्वे विद्ये वेदितव्ये इति चाथर्वणी श्रुतिः।
परया त्वक्षरप्राप्तिः ऋग्वेदादिमयी परा ॥
यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्।
अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम्।
विभुं सर्वगतं नित्यं भूतयोनिमकारणम्।
व्याप्यं यतस्सर्वमिदं तद्वै पश्यन्ति सूरयः ॥
तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिणाम् ॥ '

इति विष्णुपुराणाच्च निर्गुणस्य मुमुक्षुज्ञेयत्वेन श्रुतेस्तत्परत्वावश्यकत्वात्" (ल-चं ६८९ पृ.) इति।

" यद्यप्युक्तवाक्योत्तरं ' तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्। ' इत्युक्तम्, तथाऽपि तत्र तत्पदेनेश्वरमुक्त्वा ' ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ' इत्यनेन तत्र तत्पदं त्वयाऽपि विशेष्यमात्रपरं वाच्यम्। अन्यथा श्वेताश्वतर एव तृतीयाध्याये ' वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णम् ' इति, द्वितीयाध्यायेऽपि ' त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा

भावप्रकाशः

कुमारी' इत्यादिना शुद्धज्ञानस्यैव मोक्षहेतुत्वमित्यस्योक्तिविरोधात्। तमेव 'विदित्वाऽति मृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' इत्यस्य 'मुमुक्षुर्वै शरणमहं प्रपद्ये निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्, 'अमृतस्य परं सेतुम्' इत्यस्य च 'तमात्मस्थं' इत्याद्युक्तवाक्योत्तरवाक्यस्य विरोधापत्तेरिति भावः" (ल॰चं ७३६ पृ) इति च लघुचन्द्रिकायामुक्तम्। अत्र निर्गुणविद्यायाश्श्रुतितात्पर्यविषयत्वं निर्धारितम्।

'सर्वप्रमाणानां चाज्ञातज्ञापकत्वेनैव प्रामाण्यात्, अन्यथा स्मृतेरपि तदापत्तिः' (सि. वि. १२३ पृ) इति सिद्धान्तबिन्दुटीकायां "ननु कथमज्ञातज्ञापकत्वेन स्मृतेर्वारणम्। तज्जनकसंस्कारस्यानुद्बोधकत्वे स्मृतिपूर्वं तद्विषयेऽप्यज्ञातत्वसंभवात्। अज्ञातत्वाभावे तत्र भ्रमस्यानुभवसिद्धस्यानुपपत्तेरिति चेन्न। स्वकरणस्य यो व्यापारस्तदुत्पत्त्यव्यवहितपूर्वक्षणे स्वकरणाधिकरणक्षणे वा यदज्ञातं व्यवहारकाले चाबाधितं तद्विषयकज्ञानत्वस्यैव प्रमात्वरूपत्वात् स्मृतौ तदभावात्" (सि. बि. टी. १२३ पृ) इति "अथ ज्ञानान्तरेण योऽर्थो यस्मिन् क्षणे गृहीतस्तदव्यहितोत्तरक्षणोत्पन्नस्य तदर्थज्ञानस्य प्रमात्ववारणाय स्वोत्पत्त्यव्यवहितपूर्वक्षणे यदज्ञातं तद्घटितमेव प्रमात्वम्, न तु स्वकरणादिघटितमिति चेन्न। स्मृतौ प्रमात्वस्यावश्यवारणीयत्वेन स्वकरणादिघटितत्वस्याप्यावश्यकत्वात्। स्मृतिर्हि सर्वाऽप्यविद्यावृत्तित्वेन भ्रम इति वेदान्तसिद्धान्तः" (सि. बि. टी. १२६) इति, "ज्ञानत्वं त्वसत्त्वापादकत्वरूपजातिविशेषाश्रयाज्ञानविषयत्वाभावप्रयोजकविशिष्टचित्त्वम्" (सि. बि. टी. १२५ पृ.) इति "प्रयोजकत्वं चाखण्डाचिद्धर्मः कार्योत्पत्त्यादिनिष्ठप्रयोज्यत्वादिवत्, क्षेमसाधारणजनकत्वमेव वा। उक्तप्रयोजकवैशिष्ट्यं च उक्तप्रयोजकजन्यप्रतिबिम्बितत्वं ग्राह्यम्"

### सर्वार्थसिद्धिः

अतो वेदनादिसामान्यशब्दानामिह पश्वादिन्यायात्संनिहित-विहितविशेषपर्यवसानं सिद्धम् ॥ २९ ॥

### आनन्ददायिनी

एवं च भक्तिसाध्यत्वेऽपि मोक्षसाधनीभूतज्ञानस्य न ज्ञानमात्रत्वम्, अपि तु विशेषरूपत्वमिति 'भक्त्या मामभिजानाति' (गी. १८–५५) इत्युक्तेऽपि विशेषपरत्वं ज्ञानादिशब्दानां सिद्धमित्याह—**अतो वेदनादीति**॥ पशुना[1] यजेत' इति श्रुतपशुशब्दस्य 'छागस्य[2]'

### भावप्रकाशः

(सि. बि. टी. १२६ पृ.) इति " वस्तुतस्तु-तादृशाभावप्रयोजकविशिष्टचिदेव ज्ञानात्यर्थः । प्रयोजकत्वं च समानकालीनत्वे सति कारणत्वम् " (सि. बि. टी. १२६ पृ.) इति " किंच स्मृतौ प्रमात्वमुक्तरीत्या प्रमितविषयकत्वरूपलिङ्गेनैवमनुमीयत इत्यनुभवानुरोधेन संस्कारजन्यत्वस्य प्रमात्वनिष्ठसाक्षिग्राह्यताविरोधिदोषताकल्पनात् स्वतःप्रमात्वग्रहणरूपां प्रमासामान्यमर्यादामतिक्रान्तस्य स्मृतिसामान्यस्य प्रमाणलक्षणसंग्रहो न युक्त इत्यतोऽपि तद्व्यावृत्तं प्रमालक्षणम् । ननूक्तलिङ्गेनैव स्मृतौ प्रमात्वमनुमीयते, न तु साक्षिणा गृह्यत इति कथं निर्णीतम् । उच्यते–स्मृत्या नाव्यवहितोत्तरक्षणे प्रवृत्तिनियम, किंतु द्वितीयक्षणे प्रमात्वेऽनुमिते सत्येव प्रवृत्तिः । तत्समानविषयत्वेनानुमीयमानप्रमातृत्वकात्स्मृत्यन्तराद्वा सेति सर्वानुभाविकम् । अत एव या स्मृतिः स्वसमानविषयकभ्रममूलकत्वेन गृह्येत तस्या भ्रमत्वेनैव निश्चयान्न ततः प्रवृत्तिः " (सि. बि. टी. १२९ पृ.) इति चोक्तम् । एतेन ध्यानरूपस्मृतेरपि भ्रमत्ववेवेति निर्णीतं

---

1 यथा पशुना—ख. 2 छागस्य, वपाया इत्यादिना—ख.

### सर्वार्थसिद्धिः

* ये तु मन्यन्ते * 'तमेवं विद्वान्'

### आनन्ददायिनी

इत्यादिना मान्त्रवर्णिकच्छागविशेष[1]परत्ववदिति भावः । एवं च [2]स्तुतिनमस्कारादिषु भक्ति[3]शब्दप्रयोगस्तत्सबन्धादुपचारनिमित्त इति ध्येयम् ॥ २९ ॥

पूर्वपद्योक्तस्यैव प्रपञ्चात्मकत्वादत्र न पृथक्संगतिरित्यभिप्रायेणाह– ये त्वित्यादिना ॥ युक्त सामान्यशब्दस्य विशेषपरत्वं पश्वादौ, इह तु स कुत [4] इति न्यायविरोधान्न विशेषपरत्वमित्यधिकाशङ्केति भावः ॥

### भावप्रकाशः

भवति । एव च अनुध्यानरूपभक्तेरपरब्रह्मविषयिण्या उपासनरूपायाः समफलत्वासंभवात् निर्गुणविद्याभिन्नाया ज्ञानभिन्नत्वात् भ्रमत्वेन प्रमात्वस्याभावाच्च परमुक्तिहेतुता न घटत इति पूर्वोक्तवृत्तिकारादिसिद्धान्तोऽसंगत एवेति येऽभिप्रयन्ति तन्मतनुवदति—* ये तु मन्यन्त इत्यादिना ॥ यद्यपि 'तमेव विदित्वाऽति मृत्युमेति' (श्वे-उ. ३–८) इति श्रुतिरेवैवकारघटिता परैरुदाह्रियते । एवकारेण धर्मसामान्यप्रकारकत्वनिषेधेन निर्विशेषज्ञानस्य तत्र विवक्षितत्वात्स्वाभिमतसिद्धिरित्यपि वदन्ति। तथाऽपि 'आदित्यवर्णं तमसः परस्तात्' (श्वे-उ. ३–८) इति पूर्ववाक्यानुसारेण 'मृत्युमति तमेवैति' इति सिद्धान्तयोजनायां न पराभीष्टसिद्धिः । एवकारोऽपि न तच्छब्देनोपस्थितप्रकारव्युदासको भवितुमर्हतीत्यभिप्रेत्य ऐहिकफलप्रतिपादिकां श्रुतिमुदाहरति—

* तमेवं विद्वानिति ॥ 'अमृत इह भवति' (श्वे. उ. ३–८) इति समनन्तरवाक्य ऐहिकं फलं श्रूयते । एवमित्यपि श्रुत्यन्तरानुसारेणाव-

[1] परत्वं तथेत्यर्थः ख. [2] स्तुत्यादिषु–ख. [3] शब्दस्तत्सबन्धा–ख.
[4] इत्यादिन्या–ख.

## सर्वार्थसिद्धिः

'ब्रह्मविदाप्नोति परम्'

## भावप्रकाशः

धारणार्थकम्। ऐहिकफलसाधनं वेदनं च नोपासनात्मकम्, किं तु निर्गुणविद्यारूपमेव। एवं च 'तमेव विदित्वाऽति मृत्युमेति' (श्वे-उ. ३-८) इत्यत्रापि मृत्योरत्ययोऽविद्यानिवृत्तिरूपः समानार्थैकतच्छ्रुत्यनुसारेण विवक्षित इति भावः।

आनन्दमयस्य ब्रह्मतावादिवृत्तिकारसंमतं प्राप्तिफलसाधनभूतवेदनमुपासनरूपं न श्रुतौ विवक्षितमित्यभिप्रेत्य तां श्रुतिमुदाहरति— *ब्रह्मविदाप्नोति परमिति ॥ "ब्रह्मविदाप्नोति परम्' (तै-उ. २-१-१) इत्यादिषु तु सत्यप्याप्नोतेर्गत्यर्थत्वे वर्णितेन न्यायेन देशान्तरप्राप्त्यसम्भवात्स्वरूपप्रतिपत्तिरेवेयमविद्याध्यारोपितनामरूपप्रविलयापेक्षयाऽभिधीयते 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. उ. ४-४-६) इत्यादिवदिति द्रष्टव्यम्" (ब्र. सू. श भा. ४-३-१४) इत्यत्र प्राप्तिस्वरूपं निर्धारितत्। एवं—"ननु सर्वगतं सर्वस्य चात्मभूतं ब्रह्म वक्ष्यति। अतो नाप्यम्। आप्तिश्चान्यस्यान्येन परिच्छिन्नस्य च परिच्छिन्नेन दृष्टा। अपरिच्छिन्नं सर्वात्मकं ब्रह्मेति। अतः परिच्छिन्नवदनात्मवच्च तस्याप्तिरनुपपन्ना। नायं दोषः। कथम्। दर्शनादर्शनापेक्षत्वाद्ब्रह्मण आप्त्यनाप्त्योः" (तै.उ. आनन्दवल्लीशाङ्करभाष्ये) एवमुपनिषच्छाङ्करभाष्येऽपि। "देहान्तरप्रतिसंधानाभावमात्रेण तु 'ब्रह्माप्येति' (बृ. उ. ४-४-६) इत्युच्यते। भावान्तरापत्तौ हि मोक्षस्य सर्वोपनिषद्विवक्षितोऽर्थ आत्मैकत्वाख्यस्स बाधितो भवेत्" "अनित्यत्वं च मोक्षस्य प्राप्नोति" "न च निगडभङ्ग इवाभावभूतो मोक्षो बन्धनिवृत्तिरूप उपपद्यते। परमात्मैकत्वाभ्युपगमात्" "तस्मादविद्यानिवृत्तिमात्रे मोक्ष इत्यवोचाम" "विज्ञानसुखयोश्च प्रागभिव्यक्ते-

भावप्रकाशः

स्संसारित्वम्, अभिव्यक्त्युत्तरकालं च मुक्तत्वं यस्य सोऽन्यः परस्मान्नित्याभिव्यक्तज्ञानस्वरूपादत्यन्तवैलक्षण्याच्छैत्यामिवौष्ण्यात् । परमात्मभेदकल्पनायां च वैदिकः कृतान्तः परित्यक्तः स्यात्" (बृ. उ. शं. भा. ४-४-६) इति बृहदारण्यकोपनिषच्छाङ्करभाष्ये ब्रह्माप्ययपदार्थोऽपि निरूपितः । एतत्पूर्वं 'न तस्य प्राणा उत्क्रामन्ति' (बृ. उ. ४–७–६) इत्युत्क्रमणनिषेधेनात्र जीवब्रह्माभेदोक्त्या गतिद्वारकोऽप्ययो नात्र विवक्षित इति हृदयम् । 'उदरमन्तरं कुरुते' (तै. उ. २–७) इति भेदनिषेधकवाक्यं तथा 'सर्वतोऽनवच्छिन्नवस्तुपरानन्तब्रह्मशब्दौ च' (अ. सि. ६८८ पृ.) इत्यादिकं च 'ब्रह्मविदाप्नोति परम्' (तै. उ. २–१–१) इत्यस्य सगुणपरतां विघटयतीत्यपि हृदयम् ।

"'ब्रह्मविदाप्नोति परम्' (तै. उ. २–१–१) इत्यादाववाप्तेर्ब्रह्मरूपत्ववत् सायुज्यस्यापि तद्रूपताया अङ्गीकरणीयत्वाच्च" (अ. सि. ८९५ पृ.) इति वाक्यविवरणे—" ब्रह्मरूपत्ववदिति ॥ 'ब्रह्म वेद ब्रह्मैव भवति'

तद्भावभावमापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥

इत्यादिश्रुतिस्मृतिभिर्ज्ञानफलमुक्तश्रुत्युक्तं ब्रह्मैक्यमेवेति सायुज्यमपि तदेव । अत एव —

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥

इति भागवतादौ सायुज्यमेकत्वपदेनोक्तमिति भावः" इति लघुचन्द्रिकायां (ल. चं. ८९५ पृ.) ब्रह्मानन्दसरस्वतीभिरुक्तम् ॥

**सर्वार्थसिद्धिः**

इत्यादिषु यथाश्रुति वित्तिमात्रस्य मुक्तिसाधनत्वविधिः कल्प्यः * सकृत्कृतश्च शास्त्रार्थः " अतो न विशेषपर्यवसानं युक्तमिति, तान् प्रति

**भावप्रकाशः**

वित्तिमात्रस्येति ॥ मात्रपदेनावृत्तिर्व्यवच्छिद्यते । आवृत्तज्ञानस्योपासनस्य श्रमत्वेन तरतमभावापन्नफलसाधनत्वेन च निरतिशयफलरूपमुक्तिहेतुत्वासम्भवान्निर्गुणविद्याप्रकरणे वित्त्युपास्त्योर्व्यतिरेकेणोपसंहारेऽप्युपासनवाचकशब्दो लक्षणया वेदनपरो नोपासनपर इति भावः । यद्वा—मात्रपदेन ज्ञानानन्तरकालिकव्यापारसामान्यं व्यवच्छिद्यते । ज्ञानस्येश्वरप्रसादद्वारा मुक्तिहेतुत्वे मुक्तेरनित्यता स्यात् । एवं गतिद्वारकत्वेऽपीति दृष्टविधयैव हेतुत्वमिति भावः । अस्मिन् पक्षे मुक्तिरैहिकं फलं विवक्षितम् । पुरुषार्थाधिकरणे परैः 'अस्माद्वेदान्तविहितादात्मज्ञानात्स्वतन्त्रात्पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते' (ब्र. सू. शं. भा. ३–४–१) इत्यारभ्य 'ब्रह्मविदाप्नोति परम्' (तै. उ. २-१-१) इत्यादिश्रुतेरुदाहरणमभिप्रेत्य 'मुक्तिसाधनत्वविधिः' इत्युक्तम् । उदाहृतसमन्वयाधिकरणपरभाष्योक्तरीत्या वा (शं. ब्र. सू. भा. १-१-४) विधिशब्दार्थ ऊह्यः ॥

* सकृत्कृतश्च शास्त्रार्थ इति ॥ 'आवृत्तिरसकृदुपदेशात्' (ब्र. सू. ४-१-१) इति सूत्रं मन्दाधिकारिविषयतया परैस्तद्भाष्ये समर्थितमिति भावः ॥

पूर्वश्लोके 'स्नेहपूर्वमनुध्यानं' इति वचने 'उपासनं स्याद्ध्रुवानुस्मृतिः' इति वाक्यकारोक्त्या च अनु-इत्यस्य तात्पर्यानुसारेण भक्तेर्मुक्तिसाधनता सिद्धान्तिता । 'आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः' (छा. उ. ७-२६-२) इति निर्गुणविद्यात्वेन परसम्मत-

## सर्वार्थसिद्धिः

* समफलत्वाद्युक्त्या सूचितं व्यनक्ति—

### भावप्रकाशः

भूमविद्यावाक्यस्थ—'ध्रुवा स्मृतिः' इति पदद्वयतात्पर्येण समाधिरूपविशेषविवक्षया प्रयुक्तस्य 'ध्रुवानुस्मृतिः' इति वाक्यकारवचसः, 'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' इति वाक्यकारवाक्यस्य च विवरणपरे श्रीभाष्ये (श्री. भा. १-१-१) निर्णीतदिशा सिद्धान्तं स्थापयितुं 'ज्ञानध्यानादिवाचां समफलविषया' (तत्त्वमुक्ता. २–२९) इत्यादिना पूर्वश्लोके संगृहीतोऽर्थोऽस्मिन् श्लोके विशदीक्रियत इत्यभिप्रेत्याह—* समफलत्वाद्युक्त्येत्यादि ॥ आवृत्त्यधिकरणे परैर्यद्यपि "प्रत्ययावृत्तिः कर्तव्या, कुतः । असकृदुपदेशात् 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति । ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति । न । दर्शनपर्यवसितत्वादेषाम् । दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति । यथाऽवघातादीनि तण्डुलनिष्पत्तिपर्यवसानानि, तद्वत् । अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते । तथाहि—लोके 'गुरुमुपास्ते राजानमुपास्ते' इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते । तथा ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते । विद्युपास्त्योश्च वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते । क्वचिद्विदिनोपक्रम्योपासिनोपसंहरति, यथा—'यस्तद्वेद यत्स वेद स मयैतदुक्तः' (छा. उ. ४-१-१) इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' (छा. उ. ५-२-२) इति । क्वचिच्चोपासिनोपक्रम्य विदिनोपसंहरति, यथा—'मनो ब्रह्मेत्युपासीत' (छा. उ. २-१८-१) इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन,

तत्त्वमुक्ताकलापः

ध्यानाद्युक्त्या

सर्वार्थसिद्धिः

ध्यानादीति ॥ * अत्र हि मुक्तिसाधनवित्तेः * प्रत्ययावृत्तिरूपचिन्ता वा-

आनन्ददायिनी

अत्र हीति—'तमेवं विद्वान्' इत्यादौ वेदनं प्रतीयते, न

भावप्रकाशः

य एवं वेद' (छा. उ. ३-१८-३) इति । तस्मात्सकृदुपदेशेष्वप्यावृत्तिसिद्धिः" (शं. ब्र. सू. भा. ४-१-१) इत्युपक्रम्य, "तरतमभावापन्नफलेषु प्रत्ययेषु अपरब्रह्मविषयकेषु फलतारतम्यानुरोधेनावृत्तिर्निर्विशेषपरब्रह्मविषयकप्रत्ययेष्वपि यस्तत्त्वमसीति सकृदुक्तं ब्रह्मात्मत्वमनुभवितुं न शक्नोति, तं प्रत्युपयुज्यत एवावृत्तिरिति तत्त्वमसीति नवकृत्व उपदेशः" इति, "यस्तु स्वयमेव मन्दमतिरप्रतिभानात्तं वाक्यार्थं जिज्ञासेत्तस्यैतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचाऽभ्युपेयते । तस्मात्परब्रह्मविषयकेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः" (ब्र. सू. शं भा. ४-१-१) इति चोक्तम् । तत्र 'निदिध्यासितव्यः' इत्यत्रान्तर्णीतावृत्तिगुणक्रियार्थकत्वस्य ध्यानादिशब्दानां निरन्तरस्मरणार्थकत्वस्य 'आवृत्तिरसकृदुपदेशात्' (ब्र. सू. ४-१-१) इति सूत्रस्य 'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' 'सिद्धं तूपासनशब्दात्' इति वाक्यकारनिर्णीतार्थपरत्वस्य च परैरभ्युपगमेऽपि परब्रह्मप्रकरणे ध्यानोपासनादिकं ज्ञानरूपमेव विवक्षितम्, अपरब्रह्मप्रकरणे तु क्रियारूपम्, परब्रह्मप्रकरणे ध्यानार्थकत्वनिर्बन्धे क्रममुक्त्यर्थता, इत्यद्वैतसिद्ध्यादौ सिद्धान्तकरणेन आवृत्तज्ञानस्य मन्दाधिकारिकत्वोक्त्या च सिद्धान्तासामञ्जस्यं स्फुटं प्रतीयते, तथाऽपि नासमञ्जस्यमित्याह—* अत्र हीत्यादिना ॥ * प्रत्ययावृत्तिरूपचिन्तावाचिध्यानशब्दशक्त्येति ॥ अत्र चिन्ता

## तत्वमुक्ताकलापः

# ध्रुवानुस्मृतिरिह विहिता ग्रन्थिमोक्षाय सैव

## सर्वार्थसिद्धिः

चिध्यानशब्दशक्त्याऽनावृत्तिरूपत्वं निरस्तम्। न्यायस्तु न वचनविरोधे। आदिशब्देन ज्ञानवेदनादिशब्दसंग्रहः। ध्रुवानुस्मृतिशब्दस्तु चिन्ताया निरन्तरस्मृतिरूपत्वमाह। ग्रन्थिमोक्षायेति फलैक्यव्यञ्जनम्।

## आनन्ददायिनी

त्वनावृत्तत्वादिरूपम्। तथा च न्यायतोऽनावृत्तत्वं कल्प्यम्, तत्तु बाधितमिति भावः। आदिशब्देन मननादिशब्दसंग्रहः। ननु ध्यान-शब्देनैवानावृत्तत्वनिरासे 'ध्रुवा स्मृतिः' इति ध्रुवत्वकीर्तनं व्यर्थं स्यादित्यत्राह — **ध्रुवानुस्मृतीति**। आवृत्तिलाभेऽपि सान्तरत्वनिरासेनेति भावः। ननु ध्यान एव गुणविधिरिति किमर्थं वक्तव्यमित्यत्राह— **ग्रन्थीति**॥ मोक्षफलकश्रुत्यनुवादे सम्भवति विशिष्टविधिकल्पनस्य गौरवादिति भावः। केचित्तु—ननु 'भिद्यते हृदयग्रन्थिः' (मुं. उ. २-२९) इत्यादिवाक्ये फलप्रतिपादनमनुपपन्नं, गुणविधौ फलाभावा-दित्यत आह—ग्रन्थिमोक्षायेति॥ प्रधानफलस्यानुवाद इत्यर्थः। (ग्रन्थिमोक्षायेत्यर्थत उपादानमिति ध्येयम्)।

## भावप्रकाशः

ध्याधात्वर्थः। 'ध्यै चिन्तायाम्' इति धातुना ध्यानशब्दो निष्पन्नः। तत्र 'प्रत्ययैकतानता ध्यानम्' (यो. सू. ३—२) 'तद्रूपप्रत्यये चैका सन्ततिः' (वि. पु. ६-७-९१) इत्यादिना पतञ्जलिपराशरोक्तविशेषोऽपि प्रवृत्तिनिमित्तमिति भावः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' (अमर-कोश) इत्यादिकोशेन प्रत्ययशब्दो ज्ञानार्थकः। एवं च स्मृतेर्ज्ञानत्वं पतञ्जलिपराशराभ्यां स्थापितं भवति। '**मुक्तिसाधनवित्तेः प्रत्यया-**

भावप्रकाशः

**वृत्तिरूपचिन्तावाचि**' इत्यत्र मुक्तिद्वैविध्याभावेन मुक्तेरेकरूपतया तत्साधनस्य ध्यानस्य तत्त्वविषयकत्वमभिप्रेतम् ।

यद्यपि—"यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत, स एतस्माज्जीवघनात्परं पुरिशयं पुरुषमीक्षते' (प्र. उ. ५-२५) इति तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति, मनोरथकल्पितस्याप्यभिध्यायातिकर्मत्वात् । ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टम्" इति (शं. ब्र. सू. भा. १–३–१३) ईक्षतिकर्माधिकरणे परैरुक्तम्, तथाऽपि—'ईक्षतेस्तु, इत्यादिनियमो भामतीकारादिभिरेव परित्यक्तः । यथोक्तं भामत्याम्—(ब्र. सू. १–३–१३) 'न च तत्त्वाविषयमेव सर्वं दर्शनम्, अनृतविषयस्यापि तस्य दर्शनात्' इति पूर्वपक्षे । 'साक्षात्कारश्चोत्सर्गतस्तत्त्वविषयः' इति सिद्धान्ते । 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे. उ. १–३) इत्यत्र ध्यानं ब्रह्मविषयम्, ईक्षणमविद्याशक्तिविषयम्, अतस्तत्र 'ईक्षणं तत्त्वविषयम्' इति नियमस्य भङ्गः । "परब्रह्मसाक्षात्कारमेकं विना प्रपञ्चान्तर्गतवस्तुजातविषयस्य सर्वस्येक्षणस्यातत्त्वविषयत्वात्" इति परिमले, (ब्र. सू. १–३–१३) "स्यादेतदेवं यदीक्षणस्य तत्त्वविषयकत्वं नियतं स्यात्, न त्वेतदेवम् । तत्स्वप्नशुक्तिरजतभ्रमादिषु प्रातिभासिकानामपि साधारणं दृष्टम्" "ननु तथाऽपि ध्यानपूर्वकस्येक्षणस्य तत्त्वविषयकत्वं नियतमिति चेत्, विधुरपरिभावितकामिनीसाक्षात्कारे व्यभिचारात्, 'ते ध्यानयोगानुगताः' (श्वे. उ. १–३) इति मन्त्रोक्ताविद्याशक्तिदर्शने व्यभिचाराच्च" (न्यायरक्षा १६६ पृ.) इति न्यायरक्षामणौ च । एवं च साक्षात्कारे तत्त्वविषयकत्वनियमाभावेऽपि प्रमाणजन्यसाक्षात्कारस्य

भावप्रकाशः

प्रमात्ववत् प्रमाणजन्यानुभवमूलकस्मृतिसन्ततिरूपध्यानस्यापीत्युभयो-स्तुल्यतैव पर्यवस्यति ।

अत एव ब्रह्मसिद्धौ "केन पुनरुपायेनाविद्या निवर्तते" इत्युपक्रम्य "योऽयं श्रवणमननपूर्वको ध्यानाभ्यासः प्रतिषिद्धाखिल-भेदप्रपञ्चे 'स एष नेति नेति' आत्मनि स व्यक्तमेव भेददर्शन-प्रतियोगी तन्निवर्तयति" (ब्र. सि. १२ पु.) इत्युक्तिः 'उपासनादिना साक्षात्कृतात्मतत्वस्य तु विरोधात्सन्नपि प्रपञ्चावभासो नात्मसंस्पर्शः' (ब्र. सि. १३४ पु.) इत्युक्तिः 'साक्षात्करणफलं हि तत्तदनुचिन्तनं दृष्टार्थम् । दृष्टा च ज्ञानाभ्यासस्य सम्यग्ज्ञानप्रसादहेतुता लोके । भावनाविशेषाद्धयभूतमप्यनुभवमापद्येत । किं पुनर्भूतम्' (ब्र. सि. १५४ पु.) इत्युक्तिश्च प्राचीनमण्डनमिश्रस्य संगच्छते । अयमर्थः—

'वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः ।
मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥'

इति भामतीकल्पतरावमलानन्दसरस्वतीभिः स्थापितः । 'परात्परं पुरिशयं पुरुषमीक्षते' (प्र. उ. ५–५) इति परात्परत्वपुरिशयत्वप्रकारक-साक्षात्कारस्यैव श्रुत्या प्रतिपादनेन परमते सप्रकारकज्ञानत्वेन तस्य भ्रमतया तन्मतसिद्धपरममुक्तिरूपता नास्यां श्रुतौ प्रतिपिपादयिषि-ता । नापि परमतरीत्या निर्विशेषस्य परब्रह्मत्वमत्र प्रतिपिपादयिषि-तम् । कस्यापि पदस्यात्र निर्विशेषप्रतीतितात्पर्यकस्य विरहात् । मुक्तिरपि देशविशेषावच्छेदेन परब्रह्मसाक्षात्काररूपाऽत्र विवक्षिता । 'स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयति' (प्र. उ. ५–१) इत्युपक्रमे सत्यकाम-प्रश्नः । अत्रोङ्कारध्यानस्य लोकप्राप्तिरूपफलमेव पृष्टम् । ओङ्कार-

### भावप्रकाशः

ध्यानस्य नानालोकप्राप्तिरपि फलम् , ध्यानविषयोङ्कारार्थभेदादित्याभिप्रेत्य 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः, तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' (प्र. उ. ५–२) इति प्रतिवचनमुपक्रान्तम् । 'एतेनैवायतनेन' (प्र. उ. ५-२) इत्यत्रैतच्छब्दस्योङ्कार एवार्थः, 'तमोङ्कारेणैवायतनेनान्वेति विद्वान्' (प्र. उ. ५–२) इत्युपसंहारानुसारात् । अत्र 'विद्वान्' इत्युक्तया ध्यानस्य तत्त्वविषयकत्वं सिध्यति । अयमर्थो ब्रह्मसिद्धावप्यभ्युपगतः । अत्रोङ्कारस्य करणत्वोक्त्या परापरब्रह्मप्रतीतिकरणभूतोङ्कारध्यानमेव ओङ्कारध्यानं विवक्षितमिति प्रतीयते । प्रणवस्य परब्रह्मध्यानकरणत्वं श्रुत्यन्तरेषु प्रसिद्धम् । 'ओङ्कारमभिध्यायीत' (प्र. उ. ५–१) इति पूर्वत्रापि 'अभि' इत्युपसर्गेणार्थतो ध्यानं विवक्षितम् । 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः' (प्र. उ. ५–२) इत्यभेदनिर्देशो वाच्यवाचकभावनिबन्धन इत्येतेन सिद्धम् । 'स यद्येकमात्रमभिध्यायीत' (प्र. उ. ५–२) इत्यादिमनुष्यलोकप्राप्तिफलकपरब्रह्मविषयध्यानवाक्येऽप्येकमात्रस्य तदर्थप्रतीतिकरणतया ध्यानमेव विवक्षितम् । एतेनैव ध्यानवाक्यद्वये द्वितीयानिर्देशोपपत्तौ ओङ्कारब्रह्मणोरभेदेन ध्यानविवक्षणं निरवकाशम् । आरोपेण मुख्यत्वसम्भवे गौणताया अन्याय्यत्वात् । न च गौण्युच्छेदः, यत्रोपासनाया अश्रवणं तत्रारोपस्य निष्प्रयोजनत्वेन गौण्युपपत्तेरिति सिद्धान्तः । गौणवृत्तिमन्तरा शक्यार्थभ्रमरूपारोपतात्पर्येण यद्यपि तत्रतत्राद्वैतसिद्धिकारैरुच्यते, तथाऽपि 'सिंहो देवदत्तः' इत्यत्रारोपनिराकरणपरवार्तिकग्रन्थपर्यालोचनायामारोपाङ्गीकारे वेदप्रामाण्यभङ्गः स्यादित्यारोपो नाङ्गीकरणीय इति सोमनाथाप्पयदीक्षिताभ्यां भट्टपादतात्पर्यवर्णनं कृतमिति पूर्वमेव

**भावप्रकाशः**

(२ सं. ३४० पृ) निरूपितम् । 'सिंहो देवदत्तः' इत्यत्र सदृशाभेद-सिद्धान्तस्थापनन्यायेनात्रापि श्रुतेरभेदारोपतात्पर्यवर्णनस्यानुचितत्वात् । 'सिंहो देवदत्तः' इतिवत् 'यजमानः प्रस्तरः' (तै. सं १-७-४, २-६-५) इत्यत्र बोधमुपपादयितुः शबरस्वामिनः 'गुणवादस्तु' (जै. सू. १-२-१०) 'रूपात्प्रायात्' (जै. सू. १-२-११) 'तत्सिद्धिजाति-सारूप्य' (जै. सू. १, ४, २२) इत्यादेश्च कर्तुर्जैमिनेरपि तात्पर्य—

असङ्कीर्णस्वभावं सद्वस्तु वस्त्वन्तरात्मना ।
आरोप्यतेऽभिधानार्थं कथं नु भ्रान्तिवर्जितैः ॥
द्वावपि प्रतिपद्येते सिंहपुंसोर्विविक्तताम् ।
नाध्यारोपयितुं शक्तिस्तेनैकस्यापि विद्यते ॥
यद्यध्यासेन वक्तॄणां गौणी वृत्तिः प्रकल्पते ।
वेदे सा न कथञ्चित्स्यादध्यारोपयितुर्विना ॥

इत्यादिना आरोपवादिमतनिरसनपूर्वकं (जै. सू. तं. वा. १-४-२२) निर्णीत भट्टपादैस्तत्सिद्धिसूत्रे। एतदनुसारेणैव 'तद्व्यपदेशं च' (जै. सू. १-४-५) इति सूत्र सिद्धान्ते खण्डदेवेन "वस्तुतस्तु—वेदे आरोप-कपुरुषाभावान्न क्वापि रूपकम् । अतस्साधारणधर्मवाचिपदाभावा-ल्लुप्तोपमारूपेयं गौणी(मी. कौ. २१६ पु.)" इति निष्कर्षः कृतः । एवं वदताऽपि खण्डदेवेन दीक्षिताद्युक्त्यभिनिवेशेन "यद्यपि चेयं काव्यातिरि-क्तेषु लोके वेदे वा बहुशो न दृश्यते, तथाऽपि काव्येष्वेव सम्भवन्त्या निराकर्तुमशक्यत्वात्, वेदेऽपि च 'योषा वा गौतमाग्निः' (छा. उ. ५-८-१) इत्यादौ यत्र विधिसम्भवस्तत्रारोपस्वीकारादुपन्यस्ता । वार्तिके तु प्राचुर्याभावादेवानुपन्यासः । न चैतावतैव सर्वत्रैवारोपप्रसङ्गः,

### भावप्रकाशः

सादृश्यमात्रविवक्षायामारोपकल्पने प्रमाणाभावात्'। 'यत्तु वार्तिके निरारोपगौणीस्थले आरोपवाद्युक्तारोपनिराकरणार्थं न क्वाप्यारोपः स्वोत्प्रेक्षाप्रभवः' इत्यारभ्य 'तन्निरारोपगौणीस्थलेऽप्रतीयमानारोपकल्पने प्रमाणाभावस्येव रूपकादौ सारोपगौणीस्थले प्रतीयमानारोपत्यागे प्रमाणाभावस्य तुल्यत्वादारोपनिराकरणायोगेन' इत्याद्युक्त्वा "प्रौढिमात्रमारोपवादिप्रसरनिराकरणार्थम्" इत्युक्तं तु नोपादेयम्। यस्य रूपकालंकारप्रयोजकीभूततद्रूप्यप्रतीत्यर्थमारोपानुभववासना तस्यैव वेदस्यापि काव्यतुल्यत्ववासनया आरोपविवक्षानिर्णयो नान्यस्येति वेदे रूपकालङ्कारस्य नावश्यकता। सादृश्यमात्रविवक्षयैवानुभवस्य वेदप्रामाण्यस्य च निर्वाहे वेदप्रामाण्यरक्षणार्थं 'गुणवादस्तु' (जै. सू. १-२-१०) इत्यादिसूत्रैः प्रत्यक्षविरुद्धार्थे गुणवादेनाविरोधमुपपादयतां जैमिन्यादीनामित्थमाशयवर्णनस्यानुचितत्वात्। एवमपि प्राचीनालङ्कारिकमते रूपके प्रथमतस्सदृशाभेदप्रतीतिस्सारोपलक्षणया, पश्चात्ताद्रूप्यप्रतीतिर्व्यञ्जनयेति वैलक्षण्यस्याङ्गीकारेऽपि अप्पयदीक्षितजगन्नाथादिभिर्नव्यैरालङ्कारिकैस्तन्निरसनपूर्वकं प्रथममाहार्यबोधश्शक्यार्थाभेदारोपरूप एव जायत इति सिद्धान्तस्थापनेन एतदनुभववासनावतां रूपके सारोपगौण्या एवाभावेन सर्वत्राप्येकरीतेरङ्गीकारस्योचिततया 'योषा वा गौतमाग्निः' (छा. उ. ५-८-१) इत्यादितुल्यत्वेन 'यजमानः प्रस्तरः' (तै. सं. १-७-४, २-६-५) इत्यादेः 'गुणवादस्तु' (जै. सू. १-२-१०) इत्यादिसूत्राणां निर्विषयत्वमेव स्यात्। विवक्षाविवक्षयोर्वैषम्यस्य तत्तत्पुरुषवासनानिबन्धनत्वेन सर्वसंप्रतिपत्त्यभावात्। अतो वेदाप्रामाण्यपर्यवसानकर आरोपाभ्युपगमो न युक्तः। 'योषा वा गौतमाग्निः' (छा. उ. ५-८-१) इत्यत्र शक्यार्थाभेदभ्रमो गौणवृत्ति-

भावप्रकाशः

मन्तरेत्युपासनाविधिव्यतिरिक्तस्थले गौणवृत्तिरित्यद्वैतसिद्धिकारमतमनभ्युपगच्छता खण्डदेवेन 'योषा वा गौतमाग्निः' (छा. उ. ५-८-१) इत्यत्रापि गौणवृत्त्या सदृशाभेदप्रतीतिरनुभवसिद्धेत्यङ्गीकारेण सदृशाभेदप्रतीतिस्सर्वसम्मतेति वक्तव्यम् ।

इत्थं च सदृशाभेदप्रतीतिमात्रेणैव सर्वसंमतेन रूपकव्यवहारोऽप्युपपद्यते ।

'यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात् ।
उपमेये भवेद्वृत्तिस्तदा तद्रूपकं भवेत् ॥' (स. कण्ठा. ४-२४)
'उपमैव तिरोभूतभेदा रूपकमुच्यते ॥'
(काव्यादर्शे २-६६)

इत्यादिप्राचीनोक्तदिशा सदृशाभेदप्रतीतिमात्रेण रूपकव्यवहारे बाधकाभावात् । रूपकालङ्कारे त्वारोपापेक्षा, न रूपकमात्रे । अत एव रसगङ्गाधरे जगन्नाथेन 'उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम् । तदेवोपस्कारकत्वविशिष्टमलङ्कारः' इति रूपकरूपकालङ्कारव्यवहारयोर्निमित्तभेदप्रदर्शनं संगच्छते ।

अतद्व्यपदेशाधिकरणे (जै. सू. १-४-५) 'वेदे न क्वापि रूपकालङ्कारः' इति खण्डदेवोक्तमेव जैमिनिशबरकुमारिलसिद्धान्तानुसारितया युक्तम् । एतेन "पूर्वमीमांसकैर्हि तत्सिद्धिपटिकायां 'यजमानः प्रस्तरः' (तै. १-७-४, सं. २-६-५) इत्यत्र प्रस्तरे यजमानशब्दस्य यजमानत्वारोपेण वृत्तिर्न भवति, किं तु तत्कार्यकरत्वरूपयजमानसादृश्येनेति महता यत्नेनोपपादितम् । वस्तुतस्त्वापि यजमानत्वारोपेण वृत्तिरित्येव युक्तम् । 'उत्तरं बर्हिषः प्रस्तरं सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवा-

### भावप्रकाशः

यजमानादुत्तरं करोति ' (तै. सं. २–६–५) इति सन्दर्भः, ' रोहितेन त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्वा यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानं स्वर्गं लोकं गमयति ' (तै. सं. १–७–४) इति सन्दर्भश्च संगच्छते । बर्हिष उपरि यत्प्रस्तरस्या- सादनं तदेव यजमानस्यायजमानादुत्तरीकरणमिति वचनं हि बर्हिषि प्रस्तरत्वारोपे प्रस्तरे यजमानत्वारोपे च सत्येव सङ्गच्छते । तथा ' रोहि- तेन त्वा ' इत्यादिभिर्मन्त्रैः प्रस्तरस्याहवनीये ' स्वर्गो लोक आहवनीयः ' इत्यर्थवादान्तरश्रुतेः प्रहरण प्रक्षेपणमिति वचनमपि मन्त्रेषु देवाश्व- त्वस्य प्रस्तरे यजमानत्वस्य आहवनीये स्वर्गत्वस्य चारोप एव संगच्छते " (ब्र. सू. ३-३-९) इति परिमले रूपकस्थले शाब्दारोपवक्तृत्वेक्षितोक्तिरपि निरवकाशा । वेदे अध्यासे सामानाधिकरण्य प्रसाध्य—

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।

इति सिद्धान्तस्थापनार्थं प्रवृत्ता एते दीक्षिता अभिनिविष्टा जैमिन्यादिसिद्धान्तं दूषयन्ति । ' उत्तरं बर्हिषः ' (तै. सं. २–६–५) इत्यादिषु सर्वत्र सादृश्यप्रतीतिर्निर्मत्सराणां स्फुटेति जैमिन्यादेराशयात् । अत एव ' मुखं चन्द्रः ' इत्यादौ सदृशाभेदशाब्दबोध एव नैयायिकै- रभ्युपगम्यते । स्पष्टं चेदं व्युत्पत्तिवादे । निर्विशेषस्य निर्धर्मक- निस्संसर्गकशाब्दबुद्धेर्दार्शनिकासंमतत्वेन अनुभवविरहेण चप्रामाणिक- तया बोधद्वयस्य संप्रतिपत्तौ तत्रैकतरबोधनिर्णयार्थमुपक्रमादिषड्विध- तात्पर्यलिङ्गानां निर्णायकत्वेऽपि अपूर्वबोधसाधकत्वं न केनाप्यभ्युपगम्यत इति षड्विधतात्पर्यलिङ्गैर्वेदस्य न निर्विशेषपरतेत्यात्मसिद्ध्यादौ भगवद्या- मुनमुनिभिर्निर्णीतोऽर्थः श्रीभाष्यादौ स्थापितः । विवेचयिष्यते चायं नायकसरे ।

**भावप्रकाशः**

अतः 'गुणवादस्तु' (जै. सू. १–२–१०) इति जैमिनिसूत्राणां प्रत्यक्षविरोधे वेदस्य गौणवृत्त्यङ्गीकारेणाबाधितार्थत्वं स्थापयतां उपपत्तिरूपतात्पर्यलिङ्गबोधनपरतया वेदस्य सर्वस्याप्येकविधप्रामाण्यसाधन एव तात्पर्यं सिद्धम् ।

अतः 'प्रायणान्तमोङ्कारमभिध्यायीत' (प्र. उ. ५–१) 'स यद्येकमात्रमभिध्यायीत' (प्र. उ. ५–३) इत्यत्र प्रणवस्य करणतया ध्यानमेव विवक्षितम् । 'द्विमात्रेण' 'त्रिमात्रेण' इति ध्यानवाक्यद्वये 'तेनैवायतनेन' (प्र. उ. ५–२) 'ओंकारेणैवायतनेन' (प्र. उ. ५–७) इति वाक्ययोः करणतृतीयाप्राचुर्याच्च । अभेदारोपस्य विवक्षितत्वे परब्रह्मध्यानमपि भ्रमरूपमिति तत्फलसाक्षात्कारोऽपि भ्रमरूपः स्यात् ।

न चात्र क्रममुक्त्यर्थत्वविवक्षा युक्ता; लोकप्राप्तेरेव पृष्टत्वेन एकमात्रद्वित्रिध्यानयोरिव त्रिमात्रध्यानस्यापि परब्रह्मविषयकस्य 'यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तस्स सामभिरुन्नीयते ब्रह्मलोकम्' (प्र. उ. ५-५) इति ब्रह्मलोकप्राप्तिः फलं श्रूयते। अत्र च ब्रह्मलोकः परब्रह्मलोक एव; 'परं पुरुषमभिध्यायीत' (प्र. उ. ५–५) इति परब्रह्मध्यानफलप्राप्तिकर्मत्वात् ।

पञ्चपादिकातद्विवरणयोः विवरणप्रमेयसङ्ग्रहे भामत्यां च 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छा. उ. ३-१३-७) इत्यादिश्रुत्या अविकृतदेशावच्छेदेन ब्रह्मप्राप्तिरेव गतिसाध्या उपासनफलभूता वृत्तिकाराभिमतेति प्रतिपादनेन प्रकृतिमण्डलाद्बहिर्ब्रह्मलोकप्राप्तिरेव वृत्तिकारसंमता परब्रह्मध्यानफलभूता गतिसाध्याऽत्र विवक्षिता । तथा सत्येव प्रश्नप्रतिवचनसामरस्यम् । 'स एतस्माज्जीवघनात्परात्परं पुरिशयं

## भावप्रकाशः

"रुषमीक्षते' (प्र. उ. ५—५) इति तु साक्षात्कारप्रतिबन्धकविगमस्य पाप्मना विनिर्मुक्तः' (प्र. ५—५) इति पूर्वं प्रतिपादनेन तत्रैव लोके साक्षात्कारपरम् ।

अत एव 'एष हि द्रष्टा—विज्ञानात्मा—स परेऽक्षरे—आत्मनि संप्रतिष्ठते' (प्र. उ. ४—९) 'स यो ह वै—शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञः सर्वो भवति' (प्र. उ. ४—१०) 'तदक्षरं वेदयते यस्तु सौम्य स सर्वज्ञस्सर्वमेवाविवेशेति' (प्र. उ. ४—११ इति पूर्वं गार्ग्यप्रश्नप्रतिवचनान्ते पराक्षरात्मनि प्रतिष्ठितस्य जीवस्य सर्वविषयक-ज्ञानवत्त्वरूपसर्वज्ञत्वोक्तिस्संगच्छते । 'विज्ञानसुखयोश्च प्रागभिव्यक्ते-स्संसारित्वम् । अभिव्यक्त्युत्तरकालं च मु[1]क्तत्वं य[2]स्य सोऽन्यः परस्मात्' (बृ. उ. शं. भा. ४—४—६) इत्यादिना शङ्कराचार्यैर्दूषणार्थं यदुपन्यस्तं तदेतेन समञ्जसम् । अयमेव साक्षा-त्कारः 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. उ. ८-३-४) इति श्रुतौ 'संपद्याविर्भावः स्वेन शब्दात्' (ब्र. सू. ४-४-१) इति सूत्रे च स्वरूपाविर्भावशब्दा-देना व्यपदिश्यते । अत्र 'परं पुरुषमभिध्यायीत' (प्र. उ. ५-५) 'एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' (प्र. उ ५-५) इति ध्यानेक्षणविषयशब्दवैलक्षण्यं दृश्यते । तेन च ध्यानेक्षणयोः कश्चन विशेषस्सूच्यते' सामान्यरूपेण ध्याने प्रतीतोऽर्थस्तत्फलेक्षणे विशिष्य विषयो भवतीति । 'पुरिशयं' (प्र. उ. ५-५) इत्यङ्को-चात् 'स वा अयं सर्वासु पूर्षु पुरिशयः' (बृ. उ. २-५-१८ इति बृहदारण्यकश्रुत्यनुसाराच्च सर्वशरीरान्तर्याम्यर्थकम् । । स एतस्माज्जीव-घनात्परात्परं' (प्र. उ. ५-५) इति च सर्वावधिकोत्कर्षपरम् । अत-

भावप्रकाशः

त्वस्य सर्वविद्यानुयायित्वेन तस्य च सर्वशरीरित्वगुणाधिकृतनिरतिशयोत्कर्षरूपतायाः श्रीभाष्ये श्रुतप्रकाशिकान्यायसिद्धाञ्जनयोश्च स्थापनेन मुक्तिसाधनध्यानसामान्ये तस्य च सामान्यतो विषयतया विशेषरूपेण च फलभूतेक्षणविषयत्वमिति सिद्धान्तोऽपि एतच्छ्रुत्या सुस्थो भवति। उपासनाविषयातिरिक्ताविषयकत्वमनुभवे तच्छ्रुतौ न विवक्षितम्। तेन च ध्यानस्य फलं क्रममुक्तिः, इति निर्विशेषसाक्षात्कारवादिनामभिप्रायो निरवकाश इति।

एतेन तत्क्रतुनयोऽपि समञ्जसो भवति। तदुक्तं श्रीभाष्ये "तत्क्रतुश्चेति तत्क्रतुः तथोपासीनः, तथैव प्राप्नोत्यीत्यर्थः। 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति, 'तं यथा यथोपासते' इति न्यायात्" इति। एतदेवाभिप्रेत्योक्तमाचार्यपादैः—

उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया।
सा तत्क्रतुनयप्राह्या नाकारान्तरवर्जनम्॥

(श्रीरहस्यत्रयसार उपायविभागाधिकारे)

इति। विशेषणसङ्गतैवकारस्य—

'धर्मस्थे त्वेवकारे त्रिविधमपि भवेत्तद्व्यवच्छेदकत्वम्' (अधि. सा. २३१ श्लो.) इति निष्कर्षदिशा तद्विरुद्धसम्बन्धव्यवच्छेदबोधकत्वेन 'शङ्खः पाण्डर एव' इत्यादौ पाण्डरत्वविरुद्धनैल्ययोगव्यवच्छेदबोधवदत्राप्युपासनाप्रकारविरुद्धनिर्विशेषव्यवच्छेदः फलरूपानुभवे प्रतिपिपादयिषित इति 'त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्र. उ. ५-५) इत्यत्र क्रममुक्तिफलविवक्षा न घटते। अयमर्थः, शाण्डिल्यविद्यायां 'यथाक्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवति'

भावप्रकाशः

(छा. उ. ३-१४-१) इत्यत्र विवक्षितः। तत्र च शाण्डिल्यविद्याया-मेतदनन्तरं 'स क्रतुं कुर्वीत। मनोमयः प्राणशरीरो भारूपस्सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धः' (छा. उ. ३-१४-२) इत्यादिना गुणानभिधाय 'एष म आत्माऽणीयान् व्रीहेर्वा' (छा. उ. ३-१४-३) इत्यादिना 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः' (छा. उ. ३-१४-४) इत्यादिना चाभ्यासेन गुणविशिष्टस्यैव हृदय-स्थितिमभिधाय तस्य सर्वस्योपासनं कुर्वतः प्राप्यत्वमुक्तगुणविशिष्टस्यै-वेति प्रतिपादनाय 'सर्वकर्मा सर्वकामस्सर्वगन्धः' (छा. उ. ३-१४-४) इत्यादिना प्राप्यत्वेन विवक्षितान् गुणान् प्रतिपाद्य 'एष म आत्माऽ-न्तर्हृदय एतद्ब्रह्म' (छा. उ. ३-१४-४) इति प्राप्यस्यैव हृदयस्थितिं 'एतमितः प्रेत्याभिसंभवितास्मि' (भा. उ. ३-१४-४) इति प्राप्तिं 'यस्य स्यादद्धा न विचिकित्साऽस्ति' (छा. उ. ३-१४-३) इत्युक्ता-र्थस्य तात्विकत्वनिश्चयेन प्राप्तौ संशयो नास्तीति प्रतिपादितम्। अभि-संभवितास्मि इत्यात्मनेपदिनो 'भू प्राप्तावात्मनेपदी' (चुरादि १८४५) इत्युक्तस्य धातोः परस्मैपदपक्षे लुट्। एतं—मनोमयत्वादिगुणकमुपा-स्यम्। अनुक्तगुणविभूत्यादिकस्य प्राप्तौ लाभायाभीत्युपसर्गः। समित्यनेन प्राप्तेः कदाऽप्यविगमो बोध्यते।

एतेन कतिपयगुणविशिष्टविषयकोपासनस्य सर्वगुणविभूत्यादि-विशिष्टब्रह्मप्राप्तिफलकत्वकथनेनोपासनस्य तरतमभावापन्नफलसाधनत्व-शङ्का व्यवच्छिद्यते। प्राप्तेः कदाऽप्यविगमप्रतिपादनेनोपासनस्य निर्वि-शेषप्राप्तिरूपकमुक्तिफलकत्वशङ्का व्यावर्तिता। 'एतमितः प्रेत्याभि-संभवितास्मि' इत्युपसंहारवाक्येन 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति, इत्युपक्रमवाक्यार्थोऽपि निर्णीतः। तत्र

## भावप्रकाशः

'भवति' इति प्राप्नोतीत्यर्थकम्। 'क्रतुः सङ्कल्पो ध्यानम्' (शं. भा. १–२–१) इति, "यो हि ब्रह्म क्रतुः स ब्राह्ममैश्वर्यमासीदिति श्लिष्यते। 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः" (शं. भा. ४–३–१५) इति च परैरप्युक्तम्। 'संपत्तेरिति जैमिनिस्तथा हि दर्शयति' (ब्र. सू. १-२-३१) इत्यत्रानन्दतीर्थभाष्यादौ 'तं यथा' इत्यादिश्रुतौ भूधातुः प्राप्त्यर्थक इत्येव व्यक्तम्। यथाक्रतुरिति बहुव्रीहिः यत्प्रकारकध्यानवानित्यर्थः। तथा भवतीत्यस्य तत्प्रकारकप्राप्तिमानित्यर्थः। तथा च भाष्यम् 'फलोपासनयोः प्रकारैक्यं यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवतीति श्रुत्यैव सिद्धम्' (१-१-१) इति। एतेन 'इह यद्ध्यायति मृत्वा ध्यानमहिम्ना तद्ध्येयरूपेण जायत इत्यर्थः' (र. प्र. १-२-१) इति क्वचित्, 'इह यादृशध्यानवान्भवति मृत्वा तादृशोपास्यरूपो भवति' (र. प्र. १-१-११) इति च क्वचिद्गोविन्दानन्दसंमतार्थो नास्यां श्रुतौ विवक्षितः। किन्तु 'यो यद्ध्यायति स तत्प्राप्नोति इति हि तत्क्रतुन्यायः श्रुतिमूलः' इति 'तत्क्रतुश्च' (ब्र. सू. ४-२-१५) इति सूत्रखण्डशङ्करभाष्यरत्नप्रभायामुक्तोऽर्थः। पूर्वोक्तरीत्याऽर्थविवक्षाङ्गीकारे 'एतमितः प्रेत्याभिसंभवितास्मि' इतिश्रुत्यर्थबाधप्रसङ्गात्। तथा च सूत्रम् 'कर्मकर्तृव्यपदेशाच्च' (ब्र. सू. १-२-४) इति। अत्र शङ्करभाष्यम्—"एतमिति प्रकृतं मनोमयत्वादिगुणकमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशति। 'अभिसंभवितास्मि' इति शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन। अभिसंभवितास्मीति प्राप्तास्मीत्यर्थः" इति। 'शब्दविशेषात्' (ब्र. सू. १–२–५) 'स्मृतेश्च' (ब्र. सू. १–२–६) इति तदनन्तरसूत्रद्वये 'एष म आत्मान्तर्हृदये' (छा. उ. ३–१४–३) 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'

**भावप्रकाशः**

(गी. १८–६१) इत्यादिश्रुतिस्मृतिभ्यां जीवब्रह्मभेदसाधनं परसंमतार्थप्रतीतिं निरुणद्धि। परसंमतार्थो नैतच्छ्रुतौ विवक्षित इति सूत्रत्रयेण व्यासेनैव निर्धारितं भवति। अत्रोक्ता हृदयस्थितिः 'स एतासां प्रतिबोधनायाभ्यन्तरं विविशामि' (मै. उ- २-६) 'यद्भूतेषु वसत्यपि, सर्वानुग्राहकत्वेन' (ब्रह्मबिन्दूपनिषदन्ते) इत्यत्र जीवात्मप्रतिबोधनार्था तदनुग्रहार्था चेति स्फुटम्।

'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च। (गी. १५-१५)

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (गी. १८-६१)

'तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यति शाश्वतम्' (गी. १८-३२) इति गीतावचनेषु,

'देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्' (श्वे. उ. ६-१)

'तमीश्वराणां परमं महेश्वरं' (श्वे. उ. ६-७)

'एको वशी' (श्वे. उ. ६-१२)

'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' (श्वे. उ. ६-१२)

'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' (श्वे. उ. ६-१६)

इत्यादिश्रुत्युपबृंहणेषु हृदयस्थितेः ज्ञानमोक्षोभयार्थत्वं स्फुटम्। 'परात्तु तच्छ्रुतेः' (ब्र. सू. २-३-४१) इति सूत्रे तत्पदाभावेऽपि कर्ता इत्यनुषङ्गेणोपपत्तौ तत्पदं कर्तृत्वपूर्वकालिकज्ञानादितात्पर्येणोपात्तम्। तेन च ज्ञानादिकमपि जीवस्य परायत्तमित्यर्थलाभः। परत्वं च स्वातन्त्र्यदया-

भावप्रकाशः

दिगुणवत्त्वमेव। अतस्सूत्रकृतोऽप्यन्तर्यामित्वं जीवानां ज्ञानाद्यर्थमिति विवक्षितम्। अयमर्थः परायत्ताधिकरणे प्रागुदाहृते (२७ पु.) 'काले दु खोपशान्तिम्' इत्याद्यधिकरणसारावलीश्लोके स्फुटः। 'हार्दानुगृहीतः शताधिकया' (ब्र. सू. ४-२-१७) इति हृदयस्थितिरनुग्रहार्थमिति स्फुटमाह सूत्रकारः। अत 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छा. उ. ३-१४-१) इत्युपक्रमे सृष्ट्यादिकथनेन राजकुमारन्यायसूचनेन पुत्रेषु निर्हेतुकदयाप्रतीत्या तदनन्तरोक्तहृदयस्थितेरपि तन्मूलकतया तज्ज्ञानेन परस्य सौलभ्यमनुसंधाय कतिपयगुणविशिष्टविषयोपासनं कुर्वतां सर्वेषां पुत्राणां तरतमभावानापन्ननिरतिशयफलप्रदानं निर्हेतुककृपामूलकोपासनानन्तरकालिकतज्जन्य--प्रसादेन संभवतीत्यत्र न कस्यापि संशयस्यावकाश इति 'इति यस्य स्याद्द्धा न विचिकित्साऽस्ति' इत्यत्र विवक्षितम्।

तदेतत्सर्वमभिप्रेत्याभाषि भगवता श्रीभाष्यकृता तृतीये पर्याये "एष म आत्माऽन्तर्हृदय एतद्ब्रह्मेत्येवंभूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीविषयाऽस्मद्धृदये संनिहितमितीदमनुसन्धानं विधाय" (श्रीभाष्ये १–२–७) इत्यादि। सूत्रकारश्च 'विवक्षितगुणोपपत्तेश्च' (ब्र. सू. १–२–२) इतीममर्थं प्रकाशयामास। 'अनुपपत्तेस्तु न शारीरः' (ब्र. सू. १–२–३) इत्यत्र शारीरपदेन शरीरपोषणार्थं जीवस्य यथा प्रवृत्तिस्तद्वद्भगवतोऽपि स्वशरीरभूतजीवपोषणार्थं प्रवृत्तिरित्यसूचयत्। 'न वक्तुरात्मोपदेशात्' (ब्र. सू. १–१–३०) इति सूत्रे 'स म आत्मेति विद्यात्' (कौ. उ. ३–९) इति श्रुतौ शरीरात्मभावरूपभेद एव विवक्षित इति प्रसाध्य 'एष म आत्माऽन्तर्हृदये' (छा. उ. ३-१४-३) ति त्रेधा अभ्यस्तशाण्डिल्यविद्याश्रुतौ जीवब्रह्मणोश्शरीरात्मभावरूप-

## भावप्रकाशः

भेदसम्बन्धमस्मिन् सर्वत्रप्रसिद्ध्यधिकरणे 'शब्दविशेषात्' (ब्र. सू. १-२-५) इत्यादौ साधयित्वाऽन्तर्याम्यधिकरणे 'शारीरश्च' (ब्र. सू. १-२-२०) इत्यनन्तरं 'उभयेऽपि हि भेदेनैनमधीयते' (ब्र. सू. १-२-२०) इत्यत्र 'स त (एष त) आत्माऽन्तर्याम्यमृतः' (बृ. उ. ३-७-३) इति द्वात्रिंशतिवारमभ्यस्तबृहदारण्यकश्रुतौ शरीरात्मभाव-रूपभेदसम्बन्धमेव जीवब्रह्मणोः स्थापयामास। इतरसूत्रेषु क्वाप्य-प्रयुक्तेन शारीरशब्देनाधिकरणद्वये जीवनिर्देशपूर्वकमर्थव्यवस्थापनेन शरीरजीवयोर्यस्सम्बन्धस्तस्य च यत्फलं तद्वदेव परजीवयोरित्यपि स्वतात्पर्यं प्रकाशयामास। एतेन—'स त (एष त) आत्मान्तर्याम्य-मृतः' (बृ. उ. ३-७-३) इत्यादिवाक्यस्य पूर्ववाक्यविरुद्धनिर्विशेष-परत्वाभिप्रायेण 'तत्त्वमसि' (छा. उ ६-८-७) इति वाक्यसमानार्थ-कत्वेनोदाहरणं (शां. ब्र. सू. ३ २-२७) (४-१-३) (प. पा. वि ११३६ पु. II) परेषां नानुकूलमिति सिद्धम्।

एवमेव 'अन्तः प्रविष्टः शास्ता जनानां' (तै. आ. ३–११) इत्यस्य (उ. स. शि. अ. प्र-वाक्य (२३–२७) उदाहरणमपि बोध्यम्। 'यथाक्रतुरस्मिन् लोके पुरुषो भवति' (छा. उ. ३-१४-१) इत्यादे-रनुभव उपासनप्रकारविषयकत्वमात्रपरत्वबोधकाय 'एतमितः प्रेत्याभि-सम्भाविताऽस्मि' (छा. उ. ३-१४-४) इत्यनेनोपासनप्रकारातिरिक्तविषय-कत्वस्य कदाऽप्युपासनप्रकारानवगाहित्वाभावस्य च प्रतिपादनेन 'तं यथा यथोपासते' (मुद्ग उ. ३) इति श्रुतिरप्येतदनुगुणार्थिकैव। 'तं यथायथो-पासते तदेव भवति' इति पाठश्शङ्कराचार्यैरानन्दतीर्थैश्चाभ्युपगतः। यथायथेत्येतत्प्रातिनिर्देशरूपता तथेत्यस्यैव युक्ता। 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छा. उ. ३-१४-१) इति समानार्थक-

**भावप्रकाशः**

च्छान्दोग्यश्रुतौ यथा तथा इत्येव निर्देश उपलभ्यत इत्यभिप्रेत्य 'तं यथा-यथोपासते तथैव भवति' इति पाठ आदृतो भगवता श्रीभाष्यकृता। एतत्पूर्वोत्तरवाक्यं क्वापि नोदाहृतं परैः। मुद्गलोपनिषदि तु 'एको देवो बहुधा निविष्टः अजायमानो बहुधा विजायते तमेतमग्निरित्यध्वर्यव उपासते' (मुद्ग. उ. ३) इत्यग्नयादिनानारूपकथनानन्तरं 'तं यथा-यथोपासते तथैव भवति' इत्येव श्रुतेः पाठ उपलभ्यते। एतत्पर्यालोचनायां अग्नयाद्युपासकस्याग्नयाद्यनुभव एकदेवपरब्रह्मोपासकस्य एकदेवपरब्रह्मानुभव इत्येवार्थः प्रतीयते। न तूपासनाविषयगुणाधिकगुणविषयकत्वास्यानुभवे व्यवच्छेदः॥

'एको देवो बहुधा निविष्टः' 'अजायमानो बहुधा विजायते' इति वाक्यद्वयार्थोऽपि मुद्गलोपनिषद्येव पूर्वं 'योऽयमुक्तः स पुरुषः' इत्यारभ्य 'भूम्यादिलोकं व्याप्यानन्तयोजनमत्यतिष्ठत्। पुरुषो नारायणो भूत भव्यं भविष्यच्चासीत्। स एष सर्वेषां मोक्षदश्चासीत्। स च सर्वस्मान्महिम्नो ज्यायान्। तस्मान्न कोऽपि ज्यायान्। महापुरुष आत्मानं चतुर्धा कृत्वा त्रिपादेन परमे व्योम्नि चासीत्। इतरेण चतुर्थेनानिरुद्धनारायणेन विश्वान्यासन्। स च पादनारायणो जगत्स्रष्टुं प्रकृतिं पुरुषं चाजनयत्।' इत्यादि। 'स भूमिं विश्वतो वृत्वा। अत्यतिष्ठद्दशाङ्गुलम्' इत्यादिपुरुषसूक्तार्थविवरणदशायां सप्रयोजनमभिहितः। 'एको देवो बहुधा निविष्टः' इति सर्वान्तर्यामिरूपाभिप्रायकम्। 'अजायमानो बहुधा विजायते' इति व्यूहविभवाभिप्रायकम्। उक्तरूपेषु सौलभ्यमनुसन्धाय भक्तिं कुर्वतां मोक्षपर्यन्तं प्रयोजनमिति छान्दोग्यवदेवात्राप्यर्थोऽनुसंहितो भवति। पुरुषसूक्तपूर्वस्वर्णघर्मानुवाके 'अन्तः प्रविष्टः शास्ता जनानाँ सर्वात्मा' इत्यत्रोक्त

**भावप्रकाशः**

एवान्तःप्रविश्यनियन्तृरूपार्थः 'पुरुष एवेदगूँ सर्वम्' इत्यत्र पुरुष पदार्थो विवक्षितः। 'शतगूँ शता अस्य युक्तहरीणाम्' इत्यादौ पूर्वानुवाके उक्तरूपाणि 'पादोऽस्य विश्वा भूतानि' इत्यादौ विवक्षितानि। चेतनानुग्रहार्थं स्वेच्छया भगवतोऽनन्तरूपवत्त्वप्रतिपादनेन 'उतामृतत्वस्येशानः' इत्यत्र विवक्षितं मोक्षदत्वं स्थापितं भवति। एतेन 'तं यथा यथोपासते तथैव भवति' इत्यत्रैकदेवोपासकस्य मोक्षरूपफलं विवक्षितम्। तदप्युपासनामूलकभगवत्सङ्कल्पहेतुकमेवेत्यर्थस्सिद्धः। अत्र 'एको देवः' इत्युपक्रम्य 'तं यथा यथोपासते' इत्युक्त्या देवशब्दे सृष्टेर्विवक्षितत्वेन यः स्रष्टा स एव मुक्तिद इत्यर्थसूचनेन राजकुमारनयेन पुत्राणां दायधनवत् सर्वेषामेकरूपमोक्ष एव 'स एव सर्वेषां मोक्षदश्चासीत्' इत्यत्र विवक्षितः। एवं च अग्नयाद्युपासकस्याग्नयादिप्राप्तिः, एकदेवोपासकस्यैकदेवप्राप्तिरित्ययमर्थ एव 'तथैव भवति' इत्यत्र विवक्षितो न तूपासनाविषयातिरिक्ताविषयकत्वं प्राप्ताविर्त्येव सिद्धम्।

अतः 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत' 'परात्परं पुरिशयं पुरुषमीक्षते' (प्र. उ. ५–५) इतिवाक्यद्वये ध्यानेक्षणयोरतत्त्वतत्त्वविषयकत्वोक्तिः 'तं यथा यथोपासते' (मुद्ग. उ. १–२) इति श्रुत्याऽपि विरुध्यते। तदेतदभिप्रेत्योक्तं भगवता श्रीभाष्ये "अत्र ध्यायतीक्षतिशब्दावेकविषयौ, ध्यानफलत्वादीक्षणस्य। 'यथाक्रतुरस्मिन् लोके पुरुषः' (छा. उ. ३–१४–१) इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात्" (श्रीभाष्ये १–३–१२) इति।

"यथावस्थितं च ब्रह्मोपास्यम्, अयथोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात् 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति न्यायात्" (श्रीभाष्ये ४–१–२) इति च।

### भावप्रकाशः

अत ईक्षणस्य तत्वविषयकत्ववद्ध्यानस्यापि तत्वविषयकत्वमेव। अत एव—'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे. उ. १–१०) इति श्रुतिस्सङ्गच्छते। अत्र 'ध्यानं ज्ञानमेव' 'ध्यानरूपत्वे क्रममुक्तिर्विवक्षिता' इति सिद्धिकारोक्तिः स्वोत्प्रेक्षामूलैव। श्रुतौ तच्छब्दाद्यर्थः पूर्वमेव निरूपितः।

एतेन—'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. ४–४–५) इति श्रुतौ निदिध्यासनं ध्यानमेव विवक्षितम्। 'अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते' (शं. ब्र. सू. भा. ४–१–१) इति परैरप्युक्तेः। स्मृतिरूपमपीदं ध्यानं ज्ञानरूपमेवेति 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदग्ँ सर्वं विदितम्' (बृ. उ. २–४–५) इत्येतदनन्तरवाक्ये निदिध्यासनस्य विज्ञानशब्देन बोधनात् 'इदग्ँ सर्वं विदितम्' (बृ. उ. २–४–५) इत्यत्र सिद्धिकारोक्तदिशा निर्विशेषं न विवक्षितम्। तृतीये 'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. उ. १–४–१) इत्यारभ्य पुरुषशब्दसमानार्थकतया आत्मन्शब्दे श्रुत्यैव निर्धारणेन आत्मन्शब्दस्य सर्वान्तर्यामिपरतया 'सर्वं विदितं' (बृ. उ. २–४–५) इत्यस्योपपत्तेः। अतो ध्यानमेवात्र सर्वत्र योगाङ्गभूतं स्मृतिसंततिरूपं ज्ञानं विवक्षितम्। तच्च सविशेषविषयकमेव। तत्र च विधिस्संभवतीति परेषामपि संमतम्। तस्य च गतिसाध्यं फलमित्यपि परसंमतमेव। तस्य तत्त्वविषयकत्वमिति श्रौतसिद्धान्तनिर्णयेन मुक्तिद्वैविध्याभावेन मुक्तिसाधनवित्तिसामान्याभिन्नप्रत्ययावृत्तिचिन्तावाचित्वं ध्यानशब्दस्य सुस्थम्।

अत्र 'मुक्तिसाधनवित्तेः' इत्याद्याचार्यपादोक्तौ 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' (ब्र. सू. ३–३–१) 'नानाशब्दादि

भावप्रकाशः

भेदात्' (ब्र. सू. ३–३–५६) 'विकल्पोऽविशिष्टफलत्वात्' (ब्र. सू. ३–३–५७) 'पुरुषार्थोऽतश्शब्दादिति बादरायणः' (ब्र. सू. ३–४–१) 'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः' (ब्र. सू. ३–४–५०) 'आवृत्तिरसकृदुपदेशात्' (ब्र. सू. ४–१–१) 'ध्यान च' (ब्र. सू. ४–१–८) इति सूत्राण्यभिप्रेतानि (२८५ पु) उदाहृतपरभाष्यप्रत्यभिज्ञापनार्थं 'प्रत्ययावृत्तिः' इत्युक्तया 'आवृत्तिरसकृदुपदेशात्' (ब्र. सू. ४–१–१) इति सूत्रे 'सर्ववेदान्तप्रत्ययं' (ब्र. सू. ३–३–१) इति सूत्रविवक्षितविहितप्रत्ययस्यैवावृत्तिरभिप्रेतेति बोधितम्। 'एवं मुक्तिफलानियमः' (ब्र. सू. ३-४-५०) इति पूर्वसूत्रस्थमुक्तिफलशब्दस्य आवृत्तिरसकृदुपदेशात्' (ब्र. सू. ४-१-१) इत्यत्रानुषङ्गः। विकल्पोऽविशिष्टफलत्वात्' (ब्र. सू. ३-३-५७) इत्यत्रेव मुक्तिफलेति बहुव्रीहिः। मुक्तिफलकत्वं च 'पुरुषार्थोऽतश्शब्दात्' (ब्र. सू. ३-४-१) इति सूत्रे निर्णीत विवक्षितमेकरूपमेवेति 'मुक्तिसाधनवित्तेः' इत्यत्राभिप्रेतम्। 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (ब्र. सू. ३-२-४) 'फलमत उपपत्तेः' (ब्र. सू. ३-२-३७) इति तृतीयाध्यायद्वितीय पादाद्यन्ताधिकरणसूत्रयोः फलसामान्यसाधनत्वप्रकार एकरूप एव विवक्षित इति न तिरोहितं विदुषाम्। अयमर्थः (द्वि. सं. ४१३ पु.) पूर्वमेवोपपादितः।

एवं 'प्रत्ययावृत्तिः' इत्यत्र 'देशबन्धश्चित्तस्य धारणा' (यो. सू. ३-१) इत्यनन्तरं 'तत्र प्रत्ययैकतानता ध्यानम्' (यो. सू. ३-२) इति योगसूत्रमपि विवक्षितम्। 'प्रत्ययस्यैकतानता सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टः ध्यानम्' (यो. भा. ३-२) इति भाष्यम्। अत्र ध्यानं चित्तवृत्तिरित्येव योगसूत्रकृतो विवक्षितमिति स्पष्टम्। एवमुप-

**भावप्रकाशः**

क्रमे 'योगश्चित्तवृत्तिनिरोधः' (यो. सू. १-२) 'वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः' (यो. सू. १-५) 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' (यो. सू. १-६) 'प्रत्यक्षानुमानागमाः प्रमाणानि' (यो. सू. १-७) 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' (यो. सू. १-८) 'अनुभूतविषयासंप्रमोषः स्मृतिः' (यो. सू. १-११) इत्यत्र विपर्ययस्य प्रमाणमूलकस्मृतेर्विपर्ययमूलकस्मृतेश्च चित्तवृत्तित्वरूपत्वमेवाभिप्रेतमिति स्फुटम् । अत्र 'कामस्संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृ. उ. १-५-३) इति श्रुतिर्विवक्षितेति योगभाष्यकाराणामाशयः । अत्र (यो. सू. १-१०) योगवार्तिके—

'जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः' (श्रीभाग. ११) इति वचनेन जाग्रदादीनां चित्तवृत्तित्वं साधितम् । अत्र श्रुतौ (बृ. उ १-५-३)धीरित्युक्तवृत्तिपञ्चकसाधारणश्शब्दः । भ्रमस्मृत्योर्ज्ञानत्वे सर्वेषां दार्शनिकानामविप्रतिपत्तेस्तथैवानुभवाच्च परैर्भ्रमसंशयस्मृतीनामविद्यावृत्तित्वस्य कल्पनमप्रामाणिकमेव ।

एतेन "ह्रीर्धीर्भीः' (बृ. उ. १-५-३) इति श्रुत्याऽनूद्यमानो धीत्वरूपो जातिविशेषः" (ल. चं. २३३ पृ.) इत्युपक्रम्य "उक्तश्रुतावविद्यावृत्तिसाधारण्येन धीमात्रस्य निर्देशेऽपि विशेष्यविशेषणाकारवृत्तिद्वयावच्छिन्नचित्यपि धीव्यवहारात्तस्याश्च विशेष्याकारमनोवृत्तिघटितत्वेन मन एवेति निर्देशसंभवात् । अत एव संशयरूपविचिकित्साया अप्युक्तश्रुतौ मनस्तादात्म्योक्तेरुक्तरीत्या निर्वाहः । एककोटिकस्यापातज्ञानस्यैव विचिकित्सापदेन निर्देशात् । द्विकोटिकस्यापि निर्देशे एकधर्मिणि कोटिद्वयाकारवृत्तिद्वयावच्छिन्नचित एव विचिकित्सात्वेन तस्या एककोट्याकारमनोवृत्तिघटितत्वेन मनस्तादात्म्यसंभवात्"

भावप्रकाशः

(ल. चं. २३३ पु.) इति ब्रह्मानन्दोक्तिरप्यभिनिवेशमूलैव। चिति धीत्वविचिकित्सात्वयोरङ्गीकारेणैव धीविचिकित्साव्यवहारोपपत्तौ अन्तःकरणपरिणामरूपवृत्तौ तद्व्यवहारकल्पनमनुचितमेव। एतन्निर्वाहादपि योगसूत्रभाष्याद्युक्तरीतेरेवोचितत्वेन तत्परित्यागस्यानुचितत्वात्। एवमेव कामादिस्थलेऽपि। वृत्तिव्यावर्तकं ज्ञानत्वं परिष्कृत्य वृत्तौ ज्ञानत्वस्यौपचारिकत्ववादिनां सर्वसंप्रतिपन्नज्ञानत्वपर्यायधीत्वस्यात्र वृत्तौ व्यवस्थापनमपि न घटते। तथा सति चित एव ज्ञानपदमुख्यार्थत्वमिति सिद्धान्तस्य भङ्गः। चितः तिङ्प्रकृत्यर्थधर्मभूतज्ञानादिबोधकधीविचीकित्साशब्दाभ्यामुपस्थितिर्न कस्यचिद्दार्शनिकस्य संमता। नाप्यनुभवसिद्धा। मनोवृत्तिघटितत्वेन 'एतत्सर्वं मन एव' (बृ. उ. १-५-३) इति समानाधिकरणनिर्देशस्यास्वरसानिर्वाहादपि (द्वि. सं १२८ पु.) प्रागुपदर्शितनिर्वाह एव युक्त इति कामादीनामन्तःकरणधर्मत्वस्यानया श्रुत्या स्थापनमेव न घटते। भ्रमस्मृत्योरविद्यावृत्तित्वं प्रबलप्रमाणप्रमितं यद्यभविष्यत्तदा कथंचिदित्थमुक्तिः समघटिष्यत। न च तयोरविद्यावृत्तित्वे किञ्चित्प्रमाणम्।

किं च—"मनोगतवासनानिमित्तत्वेन च क्वचिन्मनःपरिणामत्वव्यपदेशात्" इति बिन्दुटीकायां (सि. बि. टी. १९० पृ.) "क्वचित्—'स धीः स्वप्नो भूत्वा' (बृ. उ. ४-३-७) इत्यादिश्रुतौ" इति विवरणकरणेन तद्रीत्या धीत्वस्याविद्यावृत्तिसाधारण्याङ्गीकारेऽपि 'एतत्सर्वं मन एव' (बृ. उ. १-५-३) इति श्रुतिनिर्वाहस्संभवतीत्युक्तनिर्वाहादप्येतन्निर्वाह एव युक्तः। तथाऽऽदरे च कामादीनामन्तःकरणधर्मत्वस्यैव विलयप्रसङ्गः।

एतेन—"वृत्तित्वं च 'धीर्भीः' (बृ. उ. १-५-३) इत्यादि-

### भावप्रकाशः

श्रुत्यनूद्यमानः संस्कारेच्छादिजनकतावच्छेदकतया सिद्धो धीत्वरूपो जातिविशेषः, प्रमाभ्रमान्यतरत्वं वा। भ्रमप्रमात्वे बाधोद्धारे वक्ष्यमाणे" (गुरुचन्द्रिका १२० पृ.) इति गुरुचन्द्रिकोक्तरीत्या भ्रमस्मृतिसाधारण-धीत्वस्यादरेऽपि तत्रापि 'एतत्सर्वं मन एव' (बृ. उ. १–५–३) इति श्रुतिपीडनं सममेव। बाधोद्धारे स्मृतिसाधारणं संवादिप्रवृत्त्युप-युक्तं तद्वति तत्प्रकारकत्वं (आ. बा. उ.) व्यवहारकालाबाध्यार्थविषय-कत्वं (प्र. बा. उ.) प्रामाण्यं मधुसूदनसरस्वतीभिरुक्तम्। अतस्तद्वति तत्प्रकारकत्वरूपप्रामाण्यस्य साक्षिग्राह्यत्वेऽपि विरोधविरहस्य मधुसूद-नोक्ततया बिन्दुटीकायां लिङ्गेनैव स्मृतौ प्रमात्वानुमितिव्यवस्थापनं न घटते। स्मृतेरविद्यावृत्तित्वे साधकाभावेन स्मृतिप्रामाण्यवारणाय अज्ञात-ज्ञापकत्वस्य 'स्वकारणस्य यो व्यापारः' इत्यादिना अन्यथापरिष्करण-मपि विफलम्।

एतेन 'स्मृतिसामान्यस्य भ्रमत्वे संस्कारत्वेन स्मृतिरूपभ्रम-हेतुत्वसिद्ध्या संस्काररूपदोषजन्यत्वनिश्चयः' इत्युक्तिरपि विफलैव, तद्वति तत्प्रकारकत्वरूपप्रमात्वग्रहविरोधाभावात्। प्रत्यक्षभासकसामग्री यथा प्रत्यक्षगतप्रामाण्यं भासयति तद्वत्स्मृतिभासकसामग्री स्मृतिगत-प्रामाण्यं भासयत्येवेति प्रमात्वानुमित्या स्मृतिस्थले एकक्षणविलम्बेन प्रवृत्त्युपपादनमपि न युक्तम्। विषयबाधेन भ्रमत्वनिश्चयानन्तरमेवो-भयत्राप्यप्रवृत्तेरविशेषात्। संस्कारस्तु नैवं भ्रमत्वधियं संपादयितु-मलम्। स्मृतिमूलानुभवे विषयाबाधे स्मृतिः प्रमा, तद्बाधे तु स्मृति-र्भ्रम इत्येव प्रामाणिकानां पन्थाः। सगुणोपासनरूपस्मृतिमूलभूतानु-भवस्य प्रमात्वं 'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः .... ज्योतिषमिति' (मुण्ड. उ. १–१–५) इत्यादिश्रुत्यैव

भावप्रकाशः

स्थाप्यते । अत्रेतिशब्दो हेतुपरः । षडङ्गवेदहेतुका अपरविद्येत्युक्तं भवति ।

निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥

(वि. पु. ६-५-५९)

इति भगवत्प्राप्तिं प्रस्तुत्य—

तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ।

(वि. पु. ६-५-६०)

आगमोत्थं विवेकाच्च द्विधा ज्ञानं तदुच्यते ।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥

(वि. पु. ६-५-६१)

इत्यभिधाय 'द्वे विद्ये वेदितव्ये' इत्युपक्रम्य 'तद्ध्येयं मोक्षकाङ्क्षिभिः' (वि. पु. ६-५-६८) इत्यत्र मोक्षकाङ्क्षिणामदृश्यत्वादिगुणकसूरिदृश्यपरब्रह्मध्यानं विधाय—

तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ।
वाचको भगवच्छब्दस्तस्यान्यस्याक्षयात्मनः ॥

(वि. पु. ६-५-६९)

एवं निगदितार्थस्य तत्वं सत्यस्य तत्वतः ।
ज्ञायते येन तज्ज्ञानं परमन्यत्त्रयीमयम् ॥

(वि. पु. ६-५-७०)

इति परविद्यायाः सगुणभगवच्छब्दवाच्यविषयकत्वं निर्धार्य 'शुद्धे महाविभूत्याख्ये' (वि. पु. ६-५-७२) इत्यादिना परब्रह्मणो वासुदेवस्य हेयगुणरहितस्य ज्ञानादिगुणषट्कवतो भगवच्छब्दवाच्यत्वं स्थापितम् ।

**भावप्रकाशः**

अत्र निर्गुणश्रुतेर्हेयगुणशून्यविषयकत्वं व्यक्तं निर्मत्सराणाम्। अतः 'अथ परा यया तदक्षरमधिगम्यते' (मुण्ड. उ. १-१-५) इत्यत्र अक्षरं सगुणं परं ब्रह्म 'यत्तदद्रेश्यं' (मुण्ड. उ. १-१-६) इत्यादिना निषेधानन्तरं 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यत् भूतयोनिं (मुण्ड. उ. १-१-६) 'यस्सर्वज्ञः सर्ववित्' (मुण्ड. उ. १-१-९) इत्यादिना गुणानां प्रतिपादनात् तदेव भगवच्छब्दवाच्यम्। तत्प्राप्तिरेव मुक्तिः। तत्साधनं च 'ओमित्येवात्मानं ध्यायथ' (मुण्ड. उ. २-२-६) इति वक्ष्यमाणं ध्यानमित्येव पराशरेण निर्धारितं भवति।

'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते' (गी. १२-१) इत्यत्र सततयुक्तशब्देन भक्तशब्दोपादानेन च 'तेषां ज्ञानी नित्य-युक्त एकभक्तिः' (गी. ७-१७) इति वाक्यैकार्थ्यज्ञापनेन उत्तर-श्लोके नित्ययुक्तपदोपादानेन चोत्तमभक्तस्य परब्रह्मोपासनमेव विवक्षि-तम्।

'अनन्येनैव योगेन मां ध्यायन्त उपासते' (गी. १२-६) इत्यत्र 'अनन्यचेताः सततं यो मां स्मरति' (गी. ८-२४) 'नित्ययु-क्तस्य योगिनः' (गी. ८-१४)।

'पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' (गी. ८-२२)

'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते' (गी. ९-२२) इत्यैकार्थ्यस्य स्फुटत्वाच्च। 'ये चाप्यक्षरमव्यक्तम्' (गी. १२-१) इत्यत्र सप्तमोक्तजिज्ञासूपास्यं 'अव्यक्तोऽक्षर इत्युक्तः' (गी. ८-२९) इत्यष्टमे प्रस्तुतं परिशुद्धात्मस्वरूपं ब्रह्मप्राप्तिफलकपञ्चाग्निविद्याविषय-भूतमुपास्यतया विवक्षितम्। कूटस्थशब्दसमभिव्याहारेण पञ्चदशे 'कूटस्थोऽक्षर उच्यते' (गी. १५-१६) इत्यैकार्थ्यबोधनेन पञ्चदशे

### भावप्रकाशः

कूटस्थाक्षरस्य पुरुषोत्तमनियाम्यतायाः स्फुटमभिधानेन तस्य परब्रह्मरूपता न गीताचार्यसम्मतेति 'ये चाप्यक्षरमव्यक्तम्' (गी. १२-१) इत्यत्र भगवन्नियाम्याक्षरोपासनमेव विवक्षितम्, न तु परसम्मतपरब्रह्मोपासनमिति स्फुटं प्रतीयते । उदाहरिष्यमाणविष्णुपुराणवचनेष्वप्यक्षरशब्दः परनियाम्यशुद्धजीवे प्रयुक्त इति यथोक्त एवार्थः ।

उक्तध्यानं समाधिपर्यवासितमेव मुक्तिसाधनमिति सिद्धान्तयितुं पराशरेण योगस्वरूपं निरूप्य—

विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात् ॥

(वि. पु. ६-७-३५)

इत्यत्र समाधिरूपयोगस्य भगवत्प्राप्तिरूपमुक्तौ कर्मक्षयद्वारा हेतुत्वमभिधाय योगाङ्गधारणाविषयभूतं 'अक्षरात्परतः परः' (मुण्ड. उ. २-१-२) 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड. उ. ३-२-८) इति श्रुत्यभिप्रेतं बद्धमुक्तविलक्षणं 'स्वस्ति वः पाराय तमसः परस्तात्' (मुण्ड उ. २-२-६) इत्यादिश्रुत्यनुरोधेन दिव्यशब्देन च सूचितं 'तमेव भान्तमनुभाति सर्वम्' (श्वे. उ. ६-१४, मु. उ २-२-१०) इत्यत्र विवक्षितं दिव्यमङ्गलविग्रहविशिष्टं भगवत्स्वरूपमिति निर्धारणाय—

आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः ।
भूपमूर्तममूर्तं च परं चापरमेव च ॥ (वि. पु. ६-७-४७)

इत्युपक्रम्य—अमूर्तस्य परस्य 'प्रत्यस्तमितभेदं' (वि. पु. ६-७-५३) इत्यनेन 'नामरूपाद्विमुक्तः' (मुण्ड. उ. ३-२-८) इति श्रुत्यर्थाभिधानमुखेन 'तच्च विष्णोः परं रूपं' (वि. पु. ६-७-५४) इत्यनेन

**भावप्रकाशः**

'परात्परं' (मुण्ड. उ. इति ३-२-८) इति श्रुतितात्पर्यानुरोधेन परस्यापि नामरूपविमुक्तस्य विष्णुस्वामिकत्वपारतन्त्र्यरूपसम्बन्धमभिधाय, तस्यापि ब्रह्मप्राप्तिकाले प्राप्यत्वेन—

'द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते ।
अमूर्तं ब्रह्मणो रूपं, (वि. पु. ६-७-६९)

इति वक्ष्यमाणदिशा योगिध्येयत्वमेव, न तु योगयुजा ध्यातुं शक्यतेति 'न तद्योगयुजा शक्यम्' (वि. पु. ६-७-५५) इत्यत्राभिधानमुखेन मूर्तस्यैव हिरण्यगर्भादिस्थूलरूपस्य चिन्त्यत्वम् । तस्य च—

'मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम्' ।
(वि. पु. ६-७-४७)

इति बद्धत्वेन भावनात्रयसम्बन्धमुक्त्वा—

'समस्ताश्शक्तयश्चैताः' (वि. पु. ६-७-७०)

इति भगवतो दिव्यमङ्गलविग्रहं निरूप्य—

'तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप ।
चिन्त्यमात्मविशुद्ध्यर्थं' (वि. पु. ६-७-७३)

इत्यादिना मोक्षहेतुध्यानविषयत्वं तद्रूपविशिष्टविष्णोरेव सर्वकर्मनाशकत्वं धारणाविषयत्वादिकं च प्रसाध्य 'तद्रूपप्रत्यये चैका तद्ध्यानं' (वि. पु. ६-७-९१) इति तादृशदिव्यमङ्गलविग्रहध्यानमभिधाय—

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि तत् ।
मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ॥
(वि. पु. ६-७-९२)

इति निरतिशयानन्दस्वरूपावगाहित्वेन ज्ञानस्य समाधिरूपतामभिधाय—

विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ।

### भावप्रकाशः

प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥

(वि. पु. ६-७-९३)

इत्यनेन 'तत्प्राप्तिहेतुर्ज्ञानं च' (वि. पु. ६-५-६०) 'आगमोत्थं विवेकाच्च द्विधा ज्ञानं' (वि. पु. ६-५-६१) 'परया त्वक्षरप्राप्तिः' (वि. पु. ६-५-६५) 'तद्ध्येयं मोक्षकाङ्क्षिभिः' (वि. पु. ६-५-६८) इत्याद्युपक्रमोक्तविवेकजपरविद्याशब्दव्यपदेश्यध्यानात्मकज्ञानविषयत्वेन सर्वकारणत्वेन सर्वव्यापकत्वेन सूरिदृश्यत्वेन अरूपत्वादिमत्तया प्रतिपादितस्य परब्रह्मण एव प्रतिपादनेन सगुणत्वं [illegible] सगुणध्यानजन्यसमाधेः स्वरूपज्ञानरूपस्य भगवच्छब्दवाच्यपरब्रह्मप्राप्तिसाधनत्वकथनमुखेनोपक्रमोक्तध्यानस्य समाधिपर्यवसितस्यैव ज्ञानादिगुणषट्कविशिष्टवासुदेवाख्यभगवत्प्राप्तिरूपमुक्तिहेतुत्वं निर्धार्य पूर्वोक्तामूर्तपररूपध्यानस्य नामरूपविमुक्तविषयकस्य फलं भगवत्प्राप्तिकालिकं स्वप्राप्तिरूपं विशदीकृतम् ।

एतेन लघुचन्द्रिकोदाहृत (ल. चं. ६८९ पु.) विष्णुपुराणवचनानि पर्यालोचितानि । 'अथ परा यया तदक्षरमधिगम्यते' (मुण्ड-उ. १-१-१५) इत्युपक्रमोक्ता अक्षरप्राप्तिः 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड-उ ३-२-८) इति श्रुतितात्पर्यानुरोधेन पूर्वोक्तदिशा भगवत्प्राप्तिरूपैवेति निर्णीय—

तद्भावभावमापन्नस्ततोऽसौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥

(वि. पु. ६-७-९५)

इत्यत्र 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ ३-२-९) इति श्रुतितात्पर्यं निर्णीयते । 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ ३-२-९) इत्यत्र ब्रह्म-

### भावप्रकाशः

वृत्तिधर्मत्वमेव विवक्षितम् । ब्रह्मवृत्तिधर्मश्च अक्षरत्वरूपः, तत्प्रयोजकप्रक्षीणाशेषभावनत्वरूपश्च । अक्षरत्वधर्मश्च 'अक्षरत्वं निगच्छेत' (भा. शा. मो. ३१२-४०) इति वसिष्ठजनकसंवादे स्पष्टमुक्तः । स च ज्ञानस्य सर्वथा संकोचराहित्यरूपः । बन्धदशायां 'अविद्याकर्मसंज्ञाऽन्या' (वि. पु. ६-७-६१) 'संसारतापानखिलानवाप्नोति' (वि. पु. ६-७-६२) इत्युक्तदिशा कर्मणा, 'देहयोगाद्वा सोऽपि' (ब्र. सू. ३-२-८) इति सूत्रोक्तदिशा देहसंबन्धेन च ज्ञानसंकोचेन 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मुण्ड. उ. ३-१-३) इति श्रुतिविवक्षित उक्ताक्षरत्वधर्मो जीवस्य न संभवति । यदा प्रक्षीणाशेषभावनत्वं तदैवायं धर्मस्संभवतीति 'तद्भावभावमापन्नः' 'भवत्यभेदी' (वि. पु. ६-७-९५) इत्यन्तग्रन्थस्याशयः । 'पुण्यपापे विधूय निरञ्जनः' (मुण्ड. उ. ३-१-३) 'नामरूपाद्विमुक्तः' (मुण्ड. उ. ३-२-८) 'तरति शोकं तरति पाप्मानं' (मुण्ड. उ. ३-२-९) इत्यनुसारेण —

'पुमान्न देवो न नरो न पशुर्न च पादपः ।
शरीराकृतिभेदात्तु भूप ते कर्मयोनयः॥' (वि. पु. २-१३-९४)
'एकस्वरूपभेदश्च बाह्यकर्मावृतिप्रजः ।
देवादिभेदोऽपध्वस्ते नास्त्येवावरणो हि सः ॥'

(वि. पु. २-१४-३३)

'अविद्याकर्मसंज्ञाऽन्या' (वि. पु. ६-७-६१) इत्युक्तकर्ममूलको देवादिभेद इति 'भेदश्च तस्याज्ञानकृतो भवेत्' (वि. पु. ६-७-९५) इत्यस्यार्थः ।

एतेन यदा कर्मक्षयस्तन्निबन्धनदेवादिदेहक्षयश्च भवति तदा पूर्णज्ञानविकासप्रतिबन्धकविगमेन 'यस्सर्वज्ञः' (मुण्ड. उ १-१-९)

भावप्रकाशः

इति श्रुत्यभिप्रेतसर्वज्ञत्वरूपधर्मः 'परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड. उ ३-२-८) इति श्रुत्युक्तभगवत्प्राप्तिरूपस्सम्भवतीत्युपक्रमाद्युक्तप्राप्तिस्वारस्यमनुरुध्य 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. ३-२-९) इति श्रुत्याशयो निर्णीतो भवति ।

प्राप्तिस्थानं च—

एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये ।
तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥
(वि. पु. १-६-३८)

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥
(वि. पु. १-६-३९)

इत्यत्रोक्तम् । अत्रापुनरावृत्त्युक्त्या 'एतद्विष्णुपदं दिव्यम्' (वि. पु. २-८-९८) इत्युक्तस्थानं ध्रुवादुपरिविद्यमानं व्यावर्तितम् ।

एतेन—'न तस्य प्राणा उत्क्रामन्ति, ब्रह्मैव सन् ब्रह्माप्येति' (बृ. उ. ४-४-८) इति श्रुतौ परसम्मतार्थो न विवक्षितः; तदुत्तरं 'अणुः पन्था विततः पुराणः' (बृ. उ. ४-४-८) 'तेन धीरा अपियन्ति ब्रह्मविदः' (बृ. उ. ४-४-८) इति गतिद्वारकप्राप्त्यभिधानादिति बोधितम् । प्रथमांशान्तेऽपि—

समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ।
(वि. पु. १-२२-५३)

इति प्राप्यस्वरूपमुपक्रम्य—

'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते (वि. पु. १-२२-५५)

**भावप्रकाशः**

अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ।
स परस्सर्वशक्तीनां ब्रह्मणस्समनन्तरः ॥
मूर्तं ब्रह्म महाभाग सर्वब्रह्ममयो हरिः ॥

(वि. पु. १-२२-६३)

इति बद्धमुक्तदिव्यमङ्गलविग्रहानभिधाय—

अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जितः ।
बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः ॥

(वि. पु. १-२२-७६)

इत्याश्चर्यरूपस्य मुक्तिपर्यन्तश्रेयोर्थत्वमभिधाय—

यानि मूर्तान्यमूर्तानि यान्यत्रान्यत्र वा क्वचित् ।
सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः ॥

(वि. पु. १-२२-८६)

इति 'द्वे रूपे ब्रह्मणस्तस्य' (वि. पु. १-२२-५५) इत्युपक्रमोक्तबद्धमुक्तयोर्वस्तुनोर्भगवच्छरीरत्वमभिधाय—

अहं हरिस्सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥

(वि. पु. १-२२-८७)

इति सर्वशरीर्यभेदनिबन्धनस्सर्वाभेद इति प्रतिपादनमुखेन 'तत्त्वमसि' (छा. उ. ६-९-४) 'अहं ब्रह्मास्मि' (बृ. उ. १-४-१०) इत्यादिसमानाधिकरणश्रुतितात्पर्यमिति निर्णीतम् ।

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ॥

(वि. पु. १-२-१२)

## भावप्रकाशः

'तद्ब्रह्म परमं नित्यं' (वि. पु. १-२-१३) 'तदेव सर्वमेवैतत्' (वि. पु. १-२-१४) इत्यनेन--

सर्वभूताधिवासं च यद्भूतेषु वसत्यपि ।
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवस्तदस्म्यहं वासुदेवः ॥

(ब्रह्मबिन्दूपनिषदन्ते)

इति श्रुत्युक्तदिशा सर्वाधारत्वसर्वव्यापकत्वाभ्यां सर्वशरीरित्वेन सर्वभेद- इति च स्थापितम् । तत्रैव द्वादशे--

सर्वात्मकोऽसि सर्वेश सर्वभूतस्थितो यतः ।

(वि. पु. १-१२-७२)

इत्यनेन, एकोनविंशे--

चिन्तयन् सर्वभूतस्थमात्मन्यपि च केशवम् ।

(वि. पु. १-१९-७)

'योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशश्शुभाशुभम्' ॥

(वि. पु. १-१९-८१)

इत्युत्तरं—

सर्वगत्वादनन्तस्य स एवाहमिति स्थितः ।

(वि. पु. १–१९–८५)

इत्यनेन च 'व्याप्य नारायणः स्थितः' (महानारा. ११–६) 'सर्वभूतस्थमेकं नारायणम्' (ना. उ. ५) इति श्रुत्यर्थाभिधानमुखेन 'एको वशी' (क. उ. ५–१२, श्वे. उ. ६–१२) 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' (श्वे. उ. ६–१२, क. उ. ५-१२) इति निर्गुणश्रुति (श्वे. उ. ६–११) समनन्तरश्रुतौ 'वशी' 'तमात्मस्थं' इत्यनेन 'तत्त्वमसि' (छा. उ. ६–९–४) 'अहं ब्रह्मास्मि'

### भावप्रकाशः

(बृ. उ. १–४–१०) इत्यादौ जीवव्यापकत्वविशिष्टनियामकत्वनिबन्धनोऽभेदव्यपदेश इति निश्चयेन जीवान्तर्यामिसाक्षात्कारवतामेव मोक्षरूपं शाश्वतं सुखं विवक्षितमिति निर्णयमुखेन 'निर्गुणः' इत्यत्र हेयगुणशून्यः 'पराऽस्य शक्तिः' (श्वे. उ. ६–८) इति पूर्वश्रुत्युक्तज्ञानादिगुणषट्कवांश्च वासुदेव एवेति निर्धारितम् । कठोपनिषदि 'एको वशी' (क. उ. ६–१२, श्वे. उ. ६-७२) 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' (क. उ. ५-१२, श्वे. उ. ६-१२) 'नित्यो नित्यानां' (क. उ. ५-१३, श्वे. उ. ६-१३) 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषाम्' (क. उ. ५-१३. 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्' (क. उ. ५-१४) इत्यत्राभ्यासेन आत्मस्थसाक्षात्कारवतां शाश्वतपरमसुखलाभोक्त्या श्वेताश्वतरोपनिषदर्थो दृढीकृतः ।

श्वेताश्वतरोपनिषदि 'एको वशी' (श्वे. उ. ६-१२) 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां विदधाति कामान्, तत्कारणं' (श्वे. उ. ६-१३) इत्यत्र मोक्षपर्यन्तकामनाविषयफलदातृत्वं पूर्वमन्त्रोक्तवशिनः प्रतिपाद्यते । 'तमेव विदित्वा' (श्वे. उ. ६-१५) इत्यनन्तरं—

स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः ॥

(श्वे. उ. ६–१६)

इति श्रुतौ सृष्ट्यादिवाक्यानां राजकुमारन्यायेन मोक्षपर्यन्तसर्वफलदातृत्वस्य जगत्कारणे सर्वगुणपूर्णे सर्वनियन्तरि प्रतिपादनमुखेन सफलत्वं स्थापितम् । 'तमेव विदित्वा' (श्वे. उ. ६–१५) इत्येतत्पूर्वार्धे 'एको हगँसो भुवनस्य मध्ये' (श्वे. उ. ६–१५)

## भावप्रकाशः

इत्यादिनाऽवतारमुखेनोपकारकत्वं प्रदर्शितमिति 'तमेव विदित्वा' (श्वे. उ. ७–१५) इत्यत्रोपकारकज्ञानमेव विवक्षितमिति तदपि मोक्षदातृत्वस्यात्यन्तमनुकूलमेव। अत एव 'नान्यः पन्था विद्यतेऽयनाय' (श्वे. उ. ६-१५) इत्यत्र ब्रह्मप्राप्तौ परमात्मव्यतिरिक्तोपायनिषेधोऽपि सङ्गच्छते। तदुत्तरं— 'यो ब्रह्माणं विदधाति पूर्वम्' (श्वे. उ. ६-१८) इत्यादिपूर्वार्धे ब्रह्मजनकत्वतद्वेददातृत्वे अभिधाय 'तँ ह देवमात्म बुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे. उ. ६-१८) इत्यत्र शरणशब्दार्थः आत्मबुद्धिप्रसादमित्युक्तजीवधर्मभूतज्ञानप्रतिबन्धककर्मक्षयहेतुत्वरूपः 'निष्कलं निष्क्रियं' (श्वे. उ. ६-१९) 'अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्' (श्वे. उ. ६-१९) इत्यत्र विशदीकृतः।

'अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम्' (गर्भोपनिषत्)

इति गर्भोपनिषदैकार्थ्येन 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि' (गी. १८–६६) इति गीतोपबृंहणानुगुण्येन च तत्रापि मुक्तिहेतुसङ्कल्पाश्रयत्वमेव विवक्षितम्।

तदुत्तरं—

'तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्' (श्वे. उ. ६-२१) इत्यत्र देवप्रसादाद्विद्वानित्यस्यार्थः 'यस्य देवे परा भक्तिः' (श्वे. उ. ६-२३) इति श्रुतौ विशदीकृतः। तत्र गीतैकार्थ्येन मोक्षरूपार्थप्रकाशोऽपि जीवज्ञानविकासरूपो विवक्षित इति पूर्वमेव निरूपितम्। अतश्च निर्गुणश्रुत्युत्तरं—'त्वं स्त्री त्वं पुमानसि' (श्वे. उ. ४-३) इत्यादिजीवब्रह्माभेदश्रुतितात्पर्यं निर्णीय प्रसादद्वारकमुक्तिहेतुत्वस्य वासुदेवे स्थापनमभिप्रेत्य 'विष्णुर्मुक्तिफलप्रदः' (वि. पु. ६–४–४२) इत्यत्र विष्णोर्मुक्तिफलप्रदत्वं वदता पराशरेण

### भावप्रकाशः

'क्षेत्रज्ञः करणी ज्ञानं करणं' (वि. पु. ६-७-९४) इत्यत्र समाधिरूपज्ञानस्य व्यापारवत्कारणत्वमुक्त्वा 'यद्विमुक्तिप्रदो योगः' (वि. पु. ६-७-१०१) इत्यत्र योगस्य मुक्तिप्रदत्वं प्रसादद्वारकमुपसंहृतम् ।

एतेन—लघुचन्द्रिकोदाहृतश्रुतयोऽपि (ल. चं. ७३६ पु.) पर्यालोचिताः। श्वेताश्वतरीयतृतीयाध्यायगतश्रुतयः पर्यालोचयिष्यन्ते—परब्रह्मण एव भगवच्छब्दवाच्यज्ञानादिगुणषट्कवत्त्वं तद्विषयकध्यानस्य समाधिरूपज्ञानपर्यवसितस्य परब्रह्मप्राप्तिरूपपरमुक्तिकरणत्वं विष्णोर्मुक्तिरूपफलप्रदत्वं च वदता पराशरेण—

बृहत्त्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम् । (वि. पु. १-१२-५५)

इति प्रागुक्तबृंहणत्वमुपपादितं भवति । अत एव 'ब्रह्मविदाप्नोति परम्' (तै. उ. २-१-१) इति श्रुत्युक्तब्रह्मप्राप्तेः 'सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चितेति' (तै. उ. २-१-२) इति विशदीकरणं ब्रह्मशब्दार्थबृंहणत्वानुगुणं सङ्गच्छते ।

एतेन 'सालोक्यसार्ष्टि' (श्री. भा. ३-२९-१३) इति श्रीभागवतश्लोके सायुज्यस्थाने प्रयुक्त एकत्वशब्दोऽपि न परसम्मतार्थं बोधयति, तस्य भगवद्देयत्वाभावेन 'दीयमानं' (श्री. भा. ३-२९-१३) इत्युक्तेरसङ्गतत्वापत्तेः, किं तु—

स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥

(श्री, भा. ३-२९-१४)

इत्यनन्तरश्लोकोक्तमद्भावपरः । सालोक्यादिशब्देषु यथा सादृश्यं तद्वत्सायुज्यशब्देऽपि । सारूप्यं विग्रहसाम्यम्, सायुज्यं ज्ञानसाम्यमिति भिदा । सायुज्यस्य एकत्वशब्देन निर्देशपूर्वकं मद्भावशब्देन

## भावप्रकाशः

विवरणात् 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड-उ ३-२-९) इति श्रुति-तात्पर्यं निर्णीतं भवति। मद्भावशब्दार्थं उक्तसाम्यमेव। आत्यन्तिक भक्तियोगः सगुणविषयक एव। तस्य निर्गुणत्वमपि गुणत्रयवदति-वृत्तिहेतुत्वेनेत्यादिकं प्रागेव निरूपितम्। अतः 'तद्भावभावमापन्नः' (वि. पु. ६-७-९५) 'सालोक्यसार्ष्टि' (श्री. भा. ३-२९-१३) इत्याद्यनुसारेण 'ब्रह्मविदाप्नोति परम्' (तै. उ. २-१-१) इत्यत्र ब्रह्मप्राप्तिर्ब्रह्मस्वरूपेति साधनं निरवकाशम्। 'आनन्दं ब्रह्मणो विद्वान्, न बिभेति' (तै-उ. २-४-१, २-९-१) इति पूर्वं परत्र चानन्द-ब्रह्मणोर्भेदज्ञानस्य भयनिवृत्तिहेतुत्वाभिधानात्। 'रसो वै सः। रसग्ं ह्येवायं लब्ध्वाऽऽनन्दी भवति' (तै. उ. २-७-१) इत्युत्तरत्र 'ब्रह्मविदा-प्नोति परं' (तै. उ. २-१-१) इत्याद्युपक्रमोक्तब्रह्मप्राप्तिसमयजीवा-नन्दमभिधाय ब्रह्मणस्तद्धेतुत्वस्य 'एष ह्येवानन्दयाति' (तै. उ. २-७-१) इत्यत्र कथनेन ब्रह्मशब्दार्थभूतबृंहणत्वप्रतिपादनाच्च। एतेन 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भय भवति' (तै. उ. २ ७-२) इत्यत्र भेदज्ञानस्य भयहेतुता न विवक्षिता, अन्तरशब्दस्य नानार्थकस्य भेदार्थकत्वेऽत्र विनिगमकाभावात्। 'द्वितीयाद्वै भयं भवति' (बृ. उ. १-४-२) इति श्रुतिः परसम्मतार्थं नाभिप्रैतीति व्यास-सम्मतोऽर्थो हयशिरोरत्नभूषणदीधितौ निरूपितः। अन्तरं कुरुत इत्यस्य जानातीति (ल, चं. ६८८) विवरणमपि न स्वरसम्। 'यदा ह्येवैष एतस्मिन्—अभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति' (तै. उ. २-७-२) इति तदव्यवहितपूर्ववाक्ये ब्रह्मणि प्रतिष्ठायाः प्राप्तिर्ज्ञानमन्तरा नोपपादयितुं शक्यते। अतोऽविच्छिन्नज्ञानरूपैव सा वाच्येति 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते' (तै. उ. २-७-२)

## भावप्रकाशः

इत्यत्र ब्रह्मण्यन्तरकरणमपि ब्रह्मज्ञानविच्छेदकरणमेवेति प्रतीयते। एतेन—'ब्रह्मविदाप्नोति परम्' (तै. उ. २-१-१) इत्युपक्रमोक्तब्रह्मवेदनस्य ध्यानरूपता प्रतिपादिता भवति। 'बृह बृहि वृद्धौ' इति धातुना निष्पन्नो ब्रह्मशब्दः। वृद्धिश्च उत्कृष्टमहत्त्वरूपा 'अतिशयरूपा' (भामती-प. पा.) इति, दोषहीनं गुणभूयिष्ठं च महान्तं कथयन्ति इति विवरणं च। एवं च ब्रह्मशब्दवाच्यमप्यविद्याद्यवद्यशून्यं सगुणमेव भगवच्छब्दवाच्यमिति सिद्धम्। अनन्तशब्दस्य परिच्छेदत्रयशून्यत्वमर्थः। तत्र देशपरिच्छेदविरहस्सर्वव्यापकत्वरूपं विभुत्वं, कालपरिच्छेदविरहस्सर्वकालसंबन्धित्वरूपं नित्यत्वं, वस्तुपरिच्छेदविरहो गुणैर्निरतिशयप्रकर्ष इत्यनन्तशब्दवाच्यमपि सगुणमेवेत्यादिकं श्रीभाष्यादिनिष्णातानां सुगमम्। अतः परविद्या सगुणविद्यैव, ध्यान समाधिपर्यवसितं यथार्थं ज्ञानं, तत्फलमपि सगुणप्राप्तिरूपा परमुक्तिरिति श्रीपराशरसिद्धान्तनिष्कर्षः॥

एतेन—

भूप पृच्छसि किं श्रेयः परमार्थं नु पृच्छसि।
श्रेयांस्यपरमार्थानि अशेषाण्येव (यान्यशेषाणि) भूपते॥
(वि. पु. २–१४–१२)

देवताराधनं कृत्वा धनं संपदमिच्छति।
पुत्रानिच्छति राज्यं च श्रेयस्तत्प्राप्तिलक्षणम्॥
(वि. पु. २–१४-१३)

आत्मा ध्येयस्सदा भूप योगयुक्तैस्तथा परम्।
श्रेयः —
(वि. पु. २–१४–१५)

भावप्रकाशः

इत्यादौ—

अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।

(वि. पु. २-१४-२४)

मुक्तिसाधनभूतत्वात्परमार्थो न साधनम् ।

(वि. पु. २-१४-२५)

ध्यानं नैवात्मनो भूप परमार्थार्थशब्दितम् ।
भेदकारि परेभ्यस्तत्परमार्थो न भेदवान् ॥

(वि. पु. २-१४-२६)

परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ।

(वि. पु. २-१४-२८)

एको व्यापी समश्शुद्धो निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥

(वि. पु. २-१४-२९)

पर (परम) ज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः ।
न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यते ॥

(वि. पु. २-१४-३०)

तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थो हि द्वैतिनोऽतत्त्वदर्शिनः ॥

(वि. पु. २-१४-३१)

एकस्वरूपभेदश्च बाह्यकर्मवृतिप्रजः ।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः ।

(वि. पु. २-१४-३३)

## भावप्रकाशः

इत्यत्र च ध्यानं षडङ्गनिष्पाद्यं समाधिपर्यवसितम् । आत्मनो निर्गुणत्वं प्रकृतिगतसत्वादिगुणत्रयशून्यत्वं विवक्षितमिति बोधितम् । अत्र परमार्थत्वं नित्यत्वरूपमिति स्फुटम्, अर्थे परमत्वस्य नित्यतारूपत्वात् । एवमनौपाधिकत्वरूपमपि । 'एको व्यापी' (वि. पु. २–१४–२९) इत्यत्र --

"यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः" (गी. १३–३३)

इत्यत्र रवेः प्रभाद्वारा व्याप्तया प्रकाशकत्ववद्धर्मभूतज्ञानद्वारा व्याप्तिर्विवक्षिता । अत एव 'सम' इत्युक्तिसंगतिः । आत्मनामेकत्वं यद्यत्र विवक्षितं तदा आत्मनां समत्वोक्तिर्न घटते । 'सर्वगतोऽव्ययः' (वि. पु. २-१४-२९) इत्यत्र 'नैनं छिन्दन्ति शस्त्राणि' (गी. २-२३) 'नित्यस्सर्वगतः' (गी. २-२४) इति गीतातात्पर्यपर्यालोचनया, आत्मव्यतिरिक्तनाशकारणशस्त्रादीनां नाशकारणत्वासंभावितत्वप्रदर्शनपरतया 'सर्वगतः' (वि. पु. २–१४–२९) इत्यस्य सर्वान्तःप्रवेशयोग्यसौक्ष्म्यपरत्वेनात्मव्यतिरिक्तानां शस्त्रादीनां मध्ये कस्याप्यात्मान्तःप्रवेशासभवेनात्मनो नित्यत्वं विवक्षितम् । मुक्तिसाधनस्य मुक्त्यर्थत्वेन परमार्थत्वं नास्तीत्युक्त्या अनन्यार्थत्वं परमार्थत्वमित्युक्तं भवति, अर्थे प्रयोजने परमत्वस्य अन्येच्छानधीनतारूपत्वात् । ध्यानस्य षडङ्गनिष्पाद्यत्वेन समाधिपर्यवसायितया च पूर्वापरकालयोर्ध्यानत्वावस्थाविरहेण परेभ्यो धारणासमाधिभ्यो भेदकारित्वेन सर्वकालसंबन्धित्वरूपनित्यत्वाभावेन न परमार्थत्वमित्येवात्रविवक्षितम्, न तु भिन्नस्यापरमार्थत्वमिति । तथाऽत्र परमार्थशब्देन तादृशार्थालाभात् 'तस्यात्मपरदेहेषु' (वि. पु. २–१४–३१) इत्यत्रात्मनो विज्ञानरूपमेव नित्यं देहास्त्वनित्या इति

## भावप्रकाशः

विवक्षितम् । 'द्वैतिनोऽतत्त्वदर्शिनः' (वि. पु. २–१४–३१) इत्यत्र द्वैतशब्दविवरणमेव 'एकस्वरूपभेदश्च' (वि. पु. २–१४–३३) इति श्लोकेन क्रियते । अतश्च देहसम्बन्धनिबन्धनदेवादिभेदः कर्ममूलको ज्ञानस्वरूपस्य जीवस्येति देहसम्बन्धोऽपि जीवस्य न स्वाभाविकः, अपि तु कर्ममूलकः । अतः स्वाभाविकदेहसम्बन्धो जीवस्य कदाऽपि नास्ति, देवादिवैषम्यमपि न जविस्वरूपगतमित्यास्मिन् प्रघट्टके विवक्षितम् । एवं च देवादिभेदस्य कर्मरूपोपाधिमूलकतया औपाधिकद्वैतस्वाभाविकताज्ञानवन्तो द्वैतिनः स्वाभाविकतत्त्वादर्शिन इत्येव 'द्वैतिनोऽतत्त्वदर्शिनः' ((वि. पु. २–१४–३१) इत्यस्यार्थो न तु मिथ्याकर्मदेहसम्बन्धज्ञानवन्त इत्यर्थः । कर्मदेहसम्बन्धादेर्मिथ्यात्वानुक्तेः । तदेतदभिप्रेत्योक्तं विष्णुचित्ताचार्यैः "पूर्वाध्यायेन देहादिव्यतिरिक्त आत्मेत्युक्तम् । अनन्तराध्यायेन स एव नित्यत्वानन्यार्थत्वानौपाधिकत्वादिभिः परमपुरुषार्थ इत्युच्यते" (वि. पु. वि. चि. व्या. २–१४–१) इति ॥

योगिनो मुक्तिकामस्य प्राणायामादिसाधनम् ।
साध्यं च परमं ब्रह्म पुनर्नावर्तते यतः ॥

(वि. पु. १–२२–४५)

साधनालम्बनं ज्ञानं मुक्तये योगिनां हि यत् ।
स भेदः प्रथमस्तस्य ज्ञानभूतस्य वै मुने ॥

(वि. पु. १–२२–४६)

युञ्जतः क्लेशमुक्त्यर्थं साध्यं यद्ब्रह्म योगिनः ।
तदालम्बनविज्ञानं द्वितीयांशो महामुने ॥

(वि. पु. १–२२–४७)

**भावप्रकाशः**

उभयोस्त्वविभागेन साध्यसाधनयोर्हि यत् ।
विज्ञानमद्वैतमयं तद्भागोऽन्यो मयोदितः ॥

(वि. पु. १-२२-४८)

ज्ञानत्रयस्य चैतस्य विशेषो यो महामुने ।
तन्निराकरणद्वारा दर्शितात्मस्वरूपवत् ॥

(वि. पु. १-२२-४९)

इत्येतेषु 'द्वे रूपे ब्रह्मणस्तस्य' (वि. पु. १-२२-५५) इत्यादिप्रागुदाहृतवचनपूर्ववचनेषु ज्ञानभेदा उक्ताः । अत्र श्रीधरीयं—"उभयोरिति । साध्यसाधनयोरुभयोरपि अविभागेन संयोगेन साध्यसाधनभावसम्बन्धेन अविच्छिन्नयोगेनेति यावत् , अद्वैतमयं देवमनुष्यादिद्वैतरहितात्मविषयतया तत्प्रचुरं विज्ञानं विशिष्टं ज्ञानं यत् ध्यानमिति यावत् , सोऽस्य तृतीयो भागो मयोदितः" इति ।

अत्राविभागशब्दो नैक्यवचनः, अद्वैतशब्दोऽपि न परसंमताद्वैतपरः, विष्णुपुराणे क्वापि तदर्थस्यास्फुटत्वात् । अत्र ध्यानस्य भेदोक्त्या 'ध्यानं नैवात्मनो भूप' (वि. पु. २-१४-२६) इति द्वितीयांशवचनेऽपि ज्ञानावस्थाभेद एव विवक्षित इति पराशरस्याशयो व्यक्तो निर्मत्सराणां विदुषाम् ।

एतेनैतच्छ्लोकमवलम्ब्य उमामहेश्वरेण रामानुजभाष्यभञ्जन्यपरनामतत्वचान्द्रिकायां पञ्चमोल्लासे 'ध्यानस्य मोक्षहेतुत्वप्रतिक्षेपात्' इत्याद्युक्तिरविचारितरमणीयेति बोध्यम् । एवं तृतीयोल्लासे 'अपूर्वाधिकरणतन्त्रवार्तिके भट्टपादैरणुजीववादनिरसनेनाणुजीववादो वेदबाह्यपक्ष इति गम्यते' इत्युक्तिरप्यविचारितरमणीयैव । अपूर्वाधिकरणे (पू.मी-सू.२-१-७) 'चैतन्यात्मकत्वाद्यविभागाच्चोपनिषत्स्वैकात्म्यव्यवहारः' इति

## भावप्रकाशः

भट्टपादैरेकात्मवादस्योमामहेश्वरसम्मतस्यावैदिकत्वप्रख्यापनात्, अविद्यावादस्यान्यत्र दूषणात्, सत्यद्वयनिराकरणात्, अहमर्थसगुणात्मसाधनाच्च। सर्वगतजीवनिराकरणं तु परमात्मानभ्युपगमपक्षाभिप्रायकमिति पूर्वमेव (सर्वार्थसिद्धि सं. १ पु. ३४०) निरूपितम्। अतः संमार्गाधिकरणव्याकरणाधिकरणादिसिद्धे परमात्माभ्युपगमपक्षे अणुजीववादस्य श्रौतत्वे न काऽपि क्षतिः।

इत्युक्ते मौनिनं भूयश्चिन्तयानं महीपतिम्।
प्रत्युवाचाथ विप्रोऽसावद्वैतान्तर्गतां कथाम्॥

(वि. पु. २-१५-१)

इत्युपक्रम्य ऋभुनिदाघसंवादमवतार्य निदाघपत्न्या दत्तं मृष्टमन्नं भुक्तवन्तमृभुं प्रति—'अपि ते परमा तृप्तिरुत्पन्ना' (वि. पु. २-१५-१७) 'क्व निवासो भवान्विप्र क्व वा गन्तुं समुद्यतः' (वि. पु. २-१५-१८) इत्यादिनिदाघप्रश्नस्य ऋभुप्रतिवचने—

क्षुत्तृषौ देहधर्माख्ये न ममैते यतो द्विज। (वि. पु. २-१५-२१) इत्यत्राहमर्थपरिशुद्धात्मस्वरूपस्य न क्षुत्तृट्संबन्ध इति 'सोऽहं न गन्ता नागन्ता' (वि. पु. २-१५-२५) इत्यादौ सर्वदेहेषु स्थितानामस्मद्युष्मदर्थभूतानामाकाशवत्स्वच्छस्वभावानां परिशुद्धात्मनां न गमनागमनादि, अपि तु देहानाम्। आत्मनां त्वौपाधिक एव गमनागमनादिव्यवहार इत्यभिधाय—

एवमेकमिदं विद्धि न भेदि सकलं जगत्।
वासुदेवाभिधेयस्य स्वरूपं परमात्मनः॥

(वि. पु. २-१५-३५)

**भावप्रकाशः**

इत्यन्ते ऋभुप्रतिवचने—

तदेतद्भवता ज्ञात्वा मृष्टामृष्टविचारि यत् ।
तन्मनस्समतालम्बि कार्यं साम्यं हि मुक्तये ॥

(वि. पु. २–१५–३१)

इति प्रागुपसंहारानुरोधेन 'तस्यात्मपरदेहेषु' (वि. पु. २-१४-३१) इति पूर्वोक्त्यनुरोधेन च देहगतक्षुत्तृष्णाशान्त्यौपाधिकदेह-भेदनिबन्धनदेवादिभेदवन्तो नात्मानः, किं तु ज्ञानस्वरूपत्वैकधर्मवन्तः। एवं ज्ञानेनैव मुक्तिफलकसमताज्ञानं पूर्वार्धे विवक्षितम्। उत्तरार्धे तु 'सर्वत्रासौ समस्तं च' (वि. पु. १–२–१२) इति वासुदेवाभिधेय-निरूपणानन्तर 'परस्य ब्रह्मणो रूपं पुरुषः' (वि. पु. १–२–१५) इति, सृष्ट्यादिनिरूपणावसरे 'तत्सर्वं वै हरेस्तनुः' (वि. पु. १–२२–८३) इति, मूर्तामूर्तनिरूपणपरिसमाप्तौ—

यानि मूर्तान्यमूर्तानि तानि सर्वाणि तद्वपुः। (वि. पु. १–२२–८६) इति व्याप्तिनिबन्धनवासुदेवशरीरत्वस्य प्रागभिधानेना-पृथक्सिद्धरूपमेव स्वरूपशब्दार्थः।

एवं च वासुदेवशरीरत्वेनात्मनां साम्यज्ञानमपि मुक्त्युपयुक्तं विवक्षितमुत्तरार्धे। पुनर्वर्षसहस्रानन्तरं निदाघबोधनार्थमृभुर्निदाघसमीप-मागत्य गजेन्द्रमारुह्य पुरं विशति सपरिवारे राज्ञि एकान्ते स्थितवन्तं निदाघं प्रति एकान्ते स्थितिकारणं पृष्ट्वा जनसंमर्दरूपकारणकथनानन्तरं गजराज्ञोर्विशेषप्रश्नस्य ऋभुमारुह्य निदाघेन—

उपर्यहं यथा राजा त्वमधः कुञ्जरो यथा ।
अवबोधाय ते ब्रह्मन् दृष्टान्तो दर्शितो मया ॥

(वि. पु. २–१६–१३)

**भावप्रकाशः**

इत्युक्ते, ऋभुः—

त्वं राजवद्द्विजश्रेष्ठ स्थितोऽहं गजवद्यदि ।
तदेव त्वं समाचक्ष्व कतमस्त्वमहं तथा ॥

(वि. पु. २–१६–१४)

इति ऋभूक्त्यनन्तरं—'क्षुत्तृषौ देहधर्माख्ये न ममैते' (वि. पु. १–१५–२१) इति पूर्वोपदिष्टार्थं स्मृत्वा अहमर्थयुष्मदर्थयोः परिशुद्धात्मस्वरूपत्वं निश्चित्य —

. . . . . . आचार्यस्त्वमृभुर्ध्रुवम् ॥ (वि. पु. २–१६–१५)
नान्यस्याद्वैतसंस्कारसंस्कृतं मानसं तथा ।
यथाऽऽचार्यस्य तेन त्वां मन्ये प्राप्तमहं गुरुम् ॥

(वि. पु. २–१६–१६)

इति निदाघोक्त्यादौ अद्वैतशब्दा अपि परिशुद्धस्वरूपास्मद्युष्मदर्थात्मसु देवादिद्वैतराहित्यपरा एव । एतेन भरतेन—

आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ।

(वि. पु. २–१३–८५)

इति रहूगणस्य प्रागुपदिष्टार्थः प्रतिष्ठापितो भवति । तेन—

सर्वभूतान्यभेदेन ददर्श स तदाऽऽत्मनः ।
तथा ब्रह्मपरो मुक्तिमवाप परमां द्विजः ॥

(वि. पु. २–१६–२०)

तथा त्वमपि धर्मज्ञ तुल्यात्मारिपुबान्धवः ।
भव सर्वगतं जानन्नात्मानमवनीपते ॥

(वि. पु. २–१६–२१)

**भावप्रकाशः**

इति तदुत्तरोक्तावपि निदाघस्य सर्वभूताभेददर्शनं देवादिभेदविरहेणात्मनां ज्ञानस्वरूपत्वदर्शनमेव, ज्ञानस्वरूपत्वेन सर्वगतत्वेनात्मनां साम्यस्योत्तरश्लोके प्रतिपादनात् ॥

एतेन गुरुचन्द्रिकायां "तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् । ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्ति । अथेतरे दुःखमेवापियन्ति" (श्वे. उ. ३-८-१०) इति श्वेताश्वतरश्रुत्याऽपि दृश्यमिथ्यात्वम् । अत्र हि तमेवेत्यादिना स्वान्याविषयकज्ञानस्य मुक्तिहेतुत्वमुक्त्वा जीवेशभेदादिज्ञानं मुक्तिहेतुरिति मताभासेन विरोधनिरासाय यस्मादित्यादिकमुक्तम् । परमिति तुशब्दसमानार्थकम् । यस्मादपरं तु नास्ति । परशब्देनापरज्ञानस्य मुक्तिहेतुत्वव्यवच्छेदः । जीवोऽणुः, ईशो महानिति तयोरखण्डैक्यज्ञानं न मोक्षहेतुरिति कथमुक्तमतविरोधो नेति भ्रान्तिं निरस्यति—यस्मान्नाणीयो न ज्यायोऽस्ति कश्चिदिति। किञ्चिदपि वस्तुस्वरूपं यस्मादात्मनो न ज्यायो न वाऽणीयोऽस्ति। यदात्मस्वरूपं मुमुक्षुभिर्ज्ञेयं तस्य ज्यायस्त्वमणीयस्त्वं वा औपाधिकं न स्वाभाविकमिति तस्मादणु ज्यायो वा वस्तुतो नास्तीति भावः । ईशज्ञानादेव मोक्ष इयि पाशुपतादयस्तान्निरस्यति—वृक्ष इवेत्यादि । ततः ईशरूपात् यदुत्तरतरं अधिष्ठानतया आनन्दघनसद्रूपतया च श्रेष्ठतरम् । अस्मिन्नर्थे चोपबृंहणानि—

सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्माऽपि तथैकस्सन् पृथक्पृथक् ॥

(वि. पु. २-१६-२२)

**भावप्रकाशः**

एकस्समस्तं यदिहास्ति किञ्चि-
तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम् ॥

(वि. पु. २-१६-२३)

इत्यादिविष्णुपुराणवाक्यानि" (गु. चं. २३९ पु. द्वि. सं.) इति ब्रह्मानन्दोक्तौ सितनीलादीत्यादिवचनद्वयस्य प्रागुदाहृतवचनद्वयोत्तरस्यार्थोऽपि परसम्मतो न विवक्षितः। अत्र प्रथमश्लोके आकाशे सितनीलादिभेदो यथौपाधिकस्तद्दर्शनं च भ्रान्तिस्तद्वदस्मद्युष्मदर्थपरिशुद्धात्मा देवादिदेहप्रवेशात्तद्रूपेण भ्रान्त्या पृथक्कृत इत्यर्थः । अत एव—'सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं' (वि. पु. २-१६-२३) इत्यस्मद्युष्मदर्थस्यात्मस्वरूपत्वोक्तिस्सङ्गच्छते । परमतेऽहमर्थस्य शुद्धात्मत्वाभावेन मिथ्यात्वेनैतदसङ्गतेः स्फुटत्वात्। 'भेदमोहं' (वि. पु. २–१६–२३) इत्यत्र देवादिदेहनिबन्धनास्मद्युष्मदर्थभेदमोह एव विवक्षित इति स्फुटं निर्मत्सराणां विदुषाम् । परमते जीवात्मनां भेदस्य देहभेदनिबन्धनत्वोक्त्याऽसाङ्गत्यं व्यक्तम् । एतेनोपसंहारेणापि 'आत्मन्येष न दोषाय शब्दोऽहं' (वि. पु. २-१३-८५) इति प्रागुपदिष्टार्थो रहूगणस्य भरतेन स्थिरीकृतो भवति। एतदुत्तरं—

इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः। (वि. पु. २–१६–२४) इत्यत्र अस्मद्युष्मदर्थपरमार्थात्मदर्शनं अस्मद्युष्मदर्थस्य देहनिबन्धनभेदत्यागोऽपि विवक्षित इत्येतेन सिद्धम् । द्वितीयश्लोके 'नास्ति परं ततोऽन्यत्' (वि. पु. २–१६–२३) इति परशब्दान्यशब्दयोः प्रयोगेणाच्युतादुत्कृष्टस्यैवान्यस्य निषेधो न त्वच्युतभिन्न-

### भावप्रकाशः

सामान्यस्य। आश्रितरक्षणान्न च्यवत इत्याद्यच्युतशब्दपर्यालोचनया लोके शरीररक्षणाद्यर्था न च्यवते पुमांस्तथाऽयं परमपुरुष इति प्रतीत्या सर्वशरीरत्वनिबन्धन एव प्रागुदाहृतवचनानुसारेण 'एकस्समस्तं यदिहास्ति किञ्चित्तदच्युतः' (वि. पु. २–१६–२३) इति समानाधिकरणनिर्देशः। तेन च भगवच्छरीरत्वेनात्मनां साम्यज्ञानम्

देवताराधनं कृत्वा—श्रेयस्तत्प्राप्तिलक्षणम्। (वि. पु. २-१४-१३) इति प्राग्भरतोक्तरीत्या—

सर्वत्र दैत्यास्समतामुपेत समत्वमाराधनमच्युतस्य।

(वि. पु. १-१७-९०)

तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते।
समाश्रिताद्ब्रह्मतरोरनन्तान्निस्संशयो मुक्तिफलप्रपातः॥

(वि. पु. १-१७-९१)

इति प्रह्लादोक्त्यनुसारेण चात्र प्रागुक्तसमताज्ञानेन मुक्तिरच्युतप्रसादेनैव नान्यथेत्ययमर्थ उपदिष्टो भवति।

एवं जगतो वासुदेवाभिधेयभगवत्स्वरूपत्वं वासुदेवप्रसादेन मुक्तिरित्यादि प्रह्लादचरिते विस्तरेण निरूपितम्। तथाहि—

सर्वव्यापिन् जगद्रूप सर्वस्रष्टर्जनार्दन।

(वि. पु. १-१८-३८)

इत्यत्र जगद्रूपित्वं सर्वव्यापित्वहेतुकमित्युक्तम्। 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. उ. २-७) इत्यादावनुप्रवेशः सृष्टिकालिको व्याप्तिरूप इत्येतेन बोधितम्।

यतितव्यं समत्वे च निर्वाणमपि चेच्छता।

(वि. पु. १-१९-४६)

**भावप्रकाशः**

देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥

(वि. पु. १-१९-४७)

एतद्विजानता सर्वं जगत्स्थावरजङ्गमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृत् ॥

(वि. पु. १-१९-४८)

एवं ज्ञाते स भगवाननादिः परमेश्वरः ।
प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः ॥

(वि. पु. १-१९-४९)

इत्यत्र देवादौ विष्णो रूपत्वं अनन्तशब्दार्थदेशापरिच्छेदरूपव्याप्तिनिबन्धनम् । एतज्ज्ञानवतोऽच्युतप्रसादेन क्लेशसंक्षय इत्युक्त्या परसम्मतरूपत्वं श्रुत्यादौ क्वापि न विवक्षार्हमिति सिध्यति ।

मय्यन्यत्र तथाऽशेषभूतेषु भुवनेषु च ।
तवैव व्याप्तिरैश्वर्यगुणसंसूचिका प्रभो ॥

(वि. पु. १-१९-७२)

त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च याजकाः ।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृत् ॥

(वि. पु. १-१९ ७३)

इत्यत्र व्याप्तैरैश्वर्यगुणसूचकत्वोक्त्या नियमनार्थत्वसिद्ध्या नियमनार्थव्याप्तिनिबन्धनमेव पितृदेवस्वरूपत्वमित्युक्तं भवति । एतेन —

" व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् ।
इति ज्ञाते परे तत्वे भेदस्यावसरः कुतः ? ॥ "

(शं. अपरोक्षानुभूतिः–४६ श्लो)

भावप्रकाशः

इत्युक्तिरनवकाशा । अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा (तै. आ. ३-२१) इति श्रुत्यैव व्याप्तिपूर्वकशास्तृत्वेन सर्वस्यात्मत्वस्य निर्धारणेन सर्वमात्मेति शासनस्य सर्वमिथ्यात्वबोधनाक्षमत्वात् ॥

ओं नमो वासुदेवाय तस्मै भगवते सदा ।
व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः ॥

(वि. पु. १-१९-७८)

इत्यत्र—सर्वभूताधिवासं च यद्भूतेषु वसत्यपि ।

सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः (ब्र. बि. उ.) इति ब्रह्मबिन्दूपनिषदेकार्थ्यानुरोधेन, 'व्याप्य नारायण स्थितः' इति श्रुत्यनुरोधेन च—

योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशश्शुभाशुभम् ।
तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम् ॥

(वि. पु. १-१९-८१)

इत्यत्रापि नियमनार्थव्याप्तिरेव स्थितिर्विवक्षिता ।

एतेन 'सर्वत्रासौ समस्तं च' (वि. पु. १-२-१२) इत्यादि-प्रागुदाहृतद्वितीयाध्यायोपक्रमवचनेषु प्रकृतिपुरुषयोः परब्रह्मरूपत्वं वासुदेवशब्दघटकवासुशब्दार्थभूतनियमनार्थव्याप्तिनिबन्धनमिति निर्धारितम् ।

एवं जगत्स्रष्टुर्जगतः पितुः सृष्टिकालिकानुप्रवेशो नियमनार्थव्याप्तिरूप इति निश्चयेन पितुर्बहूपकारकत्वज्ञानेन अत्यन्तपारतन्त्र्येण स्थितिः, एवं सर्वत्रापि परमात्मनः स्थित्या साम्यदर्शनेन रागद्वेषादिविरहेण सर्वत्र मैत्री च यस्य पुंसस्तस्यैवाच्युतप्रसादेन सर्वक्लेशक्षयो नान्यस्येत्येतेन निश्चितं भवति । एवं—

तदेवमतिदुःखानामास्पदे तु भवार्णवे ।

**भावप्रकाशः**

भवतां कथ्यते सत्यं विष्णुरेकः परायणम् ॥

(वि. पु. १-१७-७०)

इत्यत्र 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्। तिष्ठमानस्य तद्विदः' (बृ. उ. ३-९-२८) इति श्रुत्यर्थ,

तदस्मत्प्रीतये विष्णुः स्मर्यतां बन्धमुक्तिदः ।

(वि. पु. १-१७-७७)

आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ।

पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥

(वि. पु. १-१७-७८)

इत्यत्र निर्गुणश्रुत्युत्तरश्रुत्यर्थः,

तत्तत्त्ववेदिनो भूत्वा ज्ञानध्यानसमाधिभिः ।

अवापुर्मुक्तिमपरे पुरुषा ध्वस्तबन्धनाः ॥

(वि. पु. १-१८-३३)

सम्पदैश्वर्यमाहात्म्यज्ञानसन्ततिकर्मणाम् ।

विमुक्तेश्चैकतो लभ्यं मूलमाराधनं हरेः ॥

(वि. पु. १-१८-२४)

इत्यत्र 'तमेवैकं जानथात्मानम्' (मु. उ. २-२-५) 'ओमित्येवमात्मानं ध्यायथ' (मु. उ. २-२-६) 'आनन्दरूपममृतं यद्विभाति' (मु. उ. २-२-७) 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मु. उ. २-२-८) इति श्रुत्यर्थश्च निरूपितः। अन्ते प्रह्लादः—

कृतकृत्योऽस्मि भगवन् वरेणानेन यत्त्वयि ।

भवित्री त्वत्प्रसादेन भक्तिरव्यभिचारिणी ॥

(वि. पु. १-२०-२६)

भावप्रकाशः

धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि ॥
(वि. पु. १–२०–२७)

श्रीभगवानुवाच—

यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् ।
तथा त्वं मत्प्रसादेन निर्वाणं परमाप्स्यसि ॥
(वि. पु. १–२०–२८)

इत्युक्तम् । अत्र पूर्वं ज्ञानध्यानसमाधीनां क्रमिकाणां मुक्तिहेतुत्वोक्त्या समाध्यनन्तरकालं मुक्तिहेतुज्ञानं नापेक्षितम्, किं तु समाधिरेव मुक्तिहेतुरिति प्रागुदाहृतश्रुतितात्पर्यनिर्णयः कृतः । अन्ते भक्तेः परमुक्तिहेतुत्वोक्त्या समाधिर्भक्तिरेवेति सिद्धान्तः स्फुटः । भक्तेर्भगवत्प्रसादाधीनत्वं यथा तथैव भक्तिमूलकभगवत्प्रसादाधीनत्वं परमुक्तेरिति भक्तिरपि जगत्कारण एवेति च ।

'समस्तजगतां मूले' (वि. पु. १-२०-२७) इति चोक्त्या सृष्टिवाक्यानां परसम्मतात्मैक्यपरत्वं नास्ति, किंतु पितृप्राप्त्यर्थं सापराधस्य पुत्रस्य पितरीव जगत्पितरि भक्तिः परमात्मप्राप्तिरूपपरमुक्तिसाधनमिति सिद्ध्या 'परमुक्तेर्निर्विशेषज्ञानापरनामभक्तिः प्रसादमद्वारीकृत्य दृष्टद्वारा कारणम्, सविशेषभक्तिरपि निर्विशेषज्ञानद्वारा तथैव' इति परसिद्धान्तितार्थो न श्रुतितात्पर्यविषय इत्येतेन निर्णयः कृतो भवति ।

एतावता 'किं कारणं ब्रह्म' (श्वे. उ. १-१) इत्याद्युपनिषदुपक्रमश्रुतेः 'यस्य देवे परा भक्तिः' (श्वे. उ. ६-२३) इत्युपनिषदुपसंहारश्रुतेश्च सृष्टिश्रुतीनां परब्रह्मप्राप्तिरूपमुक्तिश्रुतीनां च सामरस्यं पर्यालोच्य 'यस्य देवे परा भक्तिः' (श्वे. उ. ६-२३) इति निर्गुणश्रुत्युत्तरोपसंहारश्रुतेः

## भावप्रकाशः

परभक्तेर्यावदर्थप्रकाशनरूपपरब्रह्मप्राप्तिरूपमुक्तिं प्रत्यपि प्रसादद्वारा साधनत्वप्रतिपादनपरतायाः पराशरेण निर्णीततया 'सगुणत्वे साधकाभावात्' (अ. सि. ७३४ पु.) इति मधुसूदनसरस्वत्युक्तिः निरवकाशा। निर्गुणश्रुतेः पराशरेण हेयगुणरहितत्वविषयकत्वस्थापनेन 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' (छा. उ. ८-७-१) इति श्रुतिस्सङ्गच्छते। इयं श्रुतिर्निर्गुणविद्यात्वेन पराभिमतायां प्रजापतिविद्यायां वर्तते। अत्र हेयनिषेधानन्तरं सत्यकामत्वसत्यसङ्कल्पत्वरूपगुणप्रतिपादनेन निर्गुणश्रुतिविषयविवेचनं कृतं भवति।

यद्यपि 'पूषाद्यनुमन्त्रणमन्त्रवत्प्रकरणादुत्कृष्टत्वस्य द्वादशोपसत्तावाक्यवत् स्तावकत्वस्य वा सम्भवात्' (अ. सि. ७३२ पृ.) इति मधुसूदनसरस्वतीभिरुक्तम्। "पूषाद्यनुमन्त्रणेति। पूषादिमन्त्रस्य दर्शपूर्णमासादिप्रकरणे पठितस्य दर्शादौ पूषादिदेवताविरहेण यथा पूषादिदेवताककर्मणि लिङ्गेन विनियोगः, तथा सत्यकामत्वादेर्ज्ञेयब्रह्मप्रकरणपठितस्य ज्ञानान्वयासम्भवेन सगुणोपासनायामन्वय इत्यर्थः। स्वप्रकरण एव स्तावकत्वेनान्वयसम्भवे उत्कर्षो न युक्तः, प्रतीतैकवाक्यताया भङ्गापत्तेरित्याशयेनाह—द्वादशेति। 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति वाक्ये अहर्गणरूपाहीनगतोपसदां द्वादशत्वेनानुष्ठानगौरवद्वारा निन्दया साह्नगतोपसत्त्रयस्य विधेयस्य यथा तदभावेन स्तुतिः सगुणब्रह्मणस्सत्यकामत्वादिना विधेयस्य निर्गुणात्मनः स्तुतिरिति भावः" (ल. चं. ७३२ पृ.) इत्यत्र विवरणं, तथाऽपि पूषादिमन्त्रस्य दर्शपूर्णमासादिप्रकरणपठितत्वं दर्शादौ पूषादिदेवताशून्यत्वं च सर्वसम्मतम्। सत्यकामत्वादेरनुपास्यज्ञेयब्रह्मप्रकरणपठितत्वं, उपास-

**भावप्रकाशः**

नातिरिक्तज्ञानान्वयासम्भवश्चेत्येतदुभयं न संप्रतिपन्नमिति न तद्दृष्टान्तसम्भवः। 'अथ यो वेदेदं जिघ्राणीति स आत्मा' (छा. उ.८-१२-४) इत्यादिनोपसंहारे सगुणात्मनः स्फुटं प्रतिपादनात्। 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. उ. ८-१२-२) 'जक्षत्क्रीडन् रममाणः' (छा. उ. ८-१२-३) इत्यादौ शरीरादुत्थानपूर्वकस्वरूपाविर्भावव्यापाराणां प्रतिपादनाच्च प्रजापतिविद्याया निर्गुणविषयत्वस्यैवासिद्धेः। उत्तरत्र 'अथ यो वेद' (छा. उ. ८-१२-५) इत्यत्र 'य आत्माऽपहतपाप्मा' (छा. उ. ८-७-१) इत्यत्र च प्रागुक्तं धर्मभूतज्ञानं सत्यकामत्वान्तं च रूपं 'स्वेन रूपेण' (छा. उ. ८-१२-२) इत्यत्र विवक्षितम्। कामानां सत्यत्वादेवान्ते—'मनसैतान् कामान् पश्यन् रमते' (छा. उ. ८-१२-५) इत्युक्तिः सङ्गच्छते। दहरविद्यायां 'एष आत्माऽपहतपाप्मा' (छा. उ. ८-१-५) इत्यादावपहतपाप्मत्वादिगुणाष्टकं परस्य श्रूयते। अत्र तु जीवस्य। अत एव 'निरञ्जनः परमं साम्यमुपैति' (मुण्ड. उ. १-३) इति श्रुतेः स्वरूपाविर्भावश्रुतेः 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' (ब्र. सू. ४-४-५) इति सूत्रस्य च सामरस्यम्। अयमेव वृत्तिकारसिद्धान्तः तदुक्तं दहराधिकरणे शङ्कराचार्यैः "अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्तेऽस्मदीयाश्च केचित्" इति। 'मतान्तरमाह—अपरे तु वादिनः' इति तत्र भामती। 'पारमार्थिकजीवब्रह्मविभागमतमाह—मतान्तरमिति' इति कल्पतरुः।

एवं 'तिस्र एव साह्नस्य' इत्यादिवाक्ये साह्नगतोपसत्त्रयवत्परसम्मतनिर्गुणात्मविधानं नैव दृश्यते। 'आत्मा अपहतपाप्मा' (छा. उ. ८-७-१) इत्येकवाक्य एव निषेधविध्योरुभयोर्दर्शनेन दृष्टान्त-

## भावप्रकाशः

वैषम्येण परसंमतार्थविवक्षाया अत्रासम्भवेन निर्गुणश्रुतिविषयविवेचनपरत्वमेवास्याश्श्रुतेर्युक्तम् । अत एव व्याकरणाधिकरणे (जै. सू. १-३-२५), तन्त्रवार्तिके --

" सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।
पराङ्ग चात्मविज्ञानादन्यत्रेत्यवधारणात् ॥

आत्मज्ञानं हि संयोगपृथक्त्वात् क्रत्वर्थं पुरुषार्थत्वेन ज्ञायते, तेन विना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसंभवात् । तथा--'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः' (छा. उ. ८-७-१) तथा 'मन्तव्यो बोद्धव्यः' (बृ. उ. २-४-५) तथा 'आत्मानमुपासीत' (बृ. उ. १-४-१५) इति कामवादलोकवादवचनविशेषैर्जिज्ञासामननसहितात्मज्ञानात्केवलावबोधपर्यन्तस्पष्टात्मतत्वज्ञानविधानापेक्षितवाक्या --न्तरोपात्तद्विविधाभ्युदयनिःश्रेयसरूपफलसम्बन्धः । 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' (छा. उ. ८-७-१) 'तरति शोकमात्मवित्' (छा. उ. ७-१-३) तथा 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते' (छा. उ. ८-२-१) इत्यादिना योगजन्याणिमाद्यष्टगुणैश्वर्यफलानि वर्णितानि । तथा 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते' (छा. उ. ८-१५-१) इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनम्" इति भट्टपादोक्तिस्सङ्गच्छते। 'सर्वत्रैव हि' इति श्लोको बृहदारण्यकवार्तिके (१ अ. ४ ब्रा. १२५४ श्लो.) उदाहृतः। तत्र 'अपहतपाप्मादिशास्त्रेण मोक्षहेतुं तज्ज्ञानमाचक्षाणेन तद्वर्जयित्वा ज्ञानान्तरमेव परार्थ-

भावप्रकाशः

मित्यवधारणात् तत् स्वतन्त्रमेव मुक्तिफलमित्यर्थः' इत्यानन्दगिरिविवरणम्।

'दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन'

इति प्रागुक्तार्थं स्थापयितुं पूर्वोपपादितदिशा अत्रोपनिषदि सगुणात्मैव विवक्षित इति प्रतिपादनाय 'य आत्माऽपहतपाप्मा' (छा.उ. ८-७-१) इत्यादिश्रुतेः प्रथमत उपन्यासः। तत्र पाप्मशब्दः 'न सुकृतं दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' (छा. उ. ८-४-१) इति च्छान्दोग्यश्रुत्यनुसारेण पुण्यमपि बोधयति। विशोक इत्यत्र दुःखमिश्रसुखराहित्यमपि विवक्षितम्। निर्गुणविद्यात्वेन परसम्मतप्रजापतिविद्यायां 'अथ यो वेदेदं जिघ्राणि' (छा. उ. ८-१२-४) इत्यादिना ज्ञातृत्वेन निर्धारित आत्मा 'य आत्मा' (छा. उ. ८-७-१) इत्युपक्रमे विवक्षित इति शबरस्वामिसिद्धान्तितज्ञानाश्रयाहमर्थात्मज्ञानदार्ढ्यं एतद्वेदान्तवाक्यनिषेवणेन भवति। यद्यपि प्रजापतिविद्या सगुणविद्या जीवविद्यैव परमात्मोपासनरूपदहरविद्याङ्गमिति पुरुषार्थत्वं कथमिति शङ्कोदेति, तथाऽपि 'पराङ्गं च' (जै--सू. १०३-२५-तन्त्रवा) इति वार्तिकवाक्ये उत्तरत्र क्रत्वर्थत्वोक्त्या क्रत्वङ्गत्वमेव विवक्षितं, नोपासनाङ्गत्वम्। दहरोपासनाफलस्यापि स्वरूपाविर्भावस्य प्रजापतिविद्यायां प्रतिपादनेन प्रजापतिविद्याफलत्वमपि विवक्षितम्। 'व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्' (ब्र. सू. ३-३-५२) इति सूत्रे, "अस्यात्मनस्संसारदशाया मोक्षदशाया यो व्यतिरेकस्सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः, तद्भावभावित्वात्तद्रूपापत्तेः। 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छा. उ ३-१४-१) इत्यादिश्रुतेः" इति अपहतपाप्मत्वादिगुणाविर्भावस्यापहतपाप्मत्वादिगुणानुसन्धानफलत्वस्य सिद्धान्तितत्वेन, 'य आत्मा'

## भावप्रकाशः

(छा. उ. ८–७–१) इत्यादिश्रुतिवाक्यस्याप्यपहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनपर्यवसायित्वविवक्षया तदुपपादनसम्भवात् । 'शारीरके वक्ष्यामः' इति वृत्तिकारोपवर्षवाक्यमेतच्छ्रुतिसूत्राभिप्रायकमपीत्याशयः ।

एवं 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' (छा. उ. ७-२६-२) इत्युपसंहारे मुक्तौ सर्वविषयकसाक्षात्कारे क्वापि दुःखतादर्शनं नास्तीत्युक्त्या 'तरति शोकमात्मवित्' (छा. उ. ७-१-३) इत्युपक्रमोक्तार्थो विशदीकृतः । एतेन विशोकत्वाविर्भावो विशदीकृतो भवति । एवं सर्वसाक्षात्कारोक्त्या सत्यकामत्वादिव्यक्तिरपि दृढीकृता । श्रुतिद्वयेन नित्यसुखाभिव्यक्तिस्सम्यक् स्थापिता भवति । 'सर्वं ह पश्यः' (छा-उ ७-२६-२) इत्यनन्तरं 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः (छा. उ. ७-२६-२) इति श्रुत्याऽपहतपाप्मत्वादिकं संगृहीतम् । धर्मभूतज्ञाननित्यता भट्टपादसम्मतेति नित्यसुखाभिव्यक्तिर्मुक्तिस्तन्मत इति च वार्तिकव्याख्यातृभिस्सुचरितमिश्रैस्सिद्धान्तितामिति प्राङ्निरूपितमित्यहमर्थ आत्मा सगुण एव 'तरति शोकमात्मवित्' (छा. उ. ७-१-३) इत्यत्र विवक्षित इति भट्टपादानामाशयः । अपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थायाः 'ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' (छा. उ. ८-१५-१) इति श्रुतिप्रतिपाद्याया गृहस्थस्यापि संभवन्त्याः प्रतिपादनेन गतिद्वारकं फलमिदमिति परेषामपि (शं. उ. भा.) सम्मतत्वेन तत्रापि सुगुणात्मैव विवक्षितः । 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. उ. ८-१२-२) इति श्रुतावुत्क्रान्त्यनन्तरमेव परमात्मप्राप्तिः अपहतपाप्मत्वादिस्वरूपस्यावि-

### भावप्रकाशः

भावश्च स्फुटं प्रतिपाद्यते । एतेन गतिद्वारकब्रह्मप्राप्तिमन्तरा अपहतपाप्मत्वादिविशिष्टस्वरूपाविर्भावो न घटत इति परमात्मप्राप्तिकाल एव स्वरूपाविर्भाव इति सिद्धम् । अयमर्थ उत्क्रान्तिगतिपादानन्तरपादे 'संपद्याविर्भावः स्वेन शब्दात्' (ब्र.सू. ४-४-२२) 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्, (ब्र. सू. ४-४-१) इत्युपक्रमोपसंहारसूत्राभ्यां व्यासेन स्फुटीकृतः । अतः परमात्मप्राप्त्यपहतपाप्मत्वादिविशिष्टस्वरूपप्राप्ती मुक्तिकालिक्यावेवेति भट्टपादानामाशयः । 'य आत्माऽपहतपाप्मा' (छा. उ. ८–७–१) इति श्रुतिमुपक्रम्य अन्ते 'ब्रह्मलोकमभिसंपद्यते' (छा. उ. ८–१५–१) इति श्रुत्युपादानेन श्रुतिद्वयैकार्थ्यं भट्टपादैर्बोधितम् । 'तरति शोकमात्मवित्' (छा. उं. ७–१–३) इत्याद्युपसंहारे 'सर्वं ह पश्यः पश्यति' (छा. उ. ७–२६–२) इत्युक्त्या मुक्तावात्मविदो वेदान्तिनः सर्ववस्तुसाक्षात्कारकथनेन—

अतीतेऽनागते चार्थे सूक्ष्मे व्यवहितेऽपि च ।
प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥

इति प्रत्यक्षसूत्रे (१-१-४ जै. सू. श्लो. वा. २६ श्लो) केचित्—वेदान्तिन एवेति भट्टपादविवक्षितमिति सिद्धम् ॥

अपूर्वाधिकरणे च 'चैतन्यात्मकत्वाद्यविभागाच्चोपनिषत्स्वैकात्म्यव्यवहारः' इति भट्टपादैर्वक्ष्यते । संबन्धाक्षेपपरिहारे च (जै. सू. १–१–५ श्लो. वा. ८४–८६ श्लो.) एकात्मवादिसम्मतोऽविद्यावादो दूषितः । तद्व्याख्याने च पार्थसारथिमिश्रैः 'निरस्तश्चायं पक्षो निरालम्बनवादेन' इत्युक्तम् । निरालम्बनवादान्ते 'प्राहं गतास्तत्र कथंचिदन्ये' (जै. सू. १–१–५ श्लो.वा.नि.वा. २०१–श्लो) इत्यत्रैकात्मवादिनो विवक्षिता इति पार्थसारथिमिश्राशयः । श्लोकस्यास्यार्थः पूर्वमेव

निरूपेतः । 'बाह्यार्थापह्नवे द्वैतम्' (जै. सू. १-१-५ श्लो. वा. नि. वा. १७ श्लो) इत्याद्युक्तयुक्तीनां परेषामपि सम्मतत्वात् । तदुक्तं 'नैतद्बुद्धेन भाषितम्' (माण्डूक्यकारिका) इति माण्डूक्यकारिकाशांकरभाष्ये 'यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्; इदं तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः' इति । अत्र बाह्यार्थनिराकरणमुभयसम्मतमिति स्फुटम् । अत एकात्मवादिसम्मतो निर्गुणवादो न भट्टपादसम्मतः । परमात्मस्वरूपं च 'एकत्वयुक्तमेकस्य श्रुतिसंयोगात्' (जै. सू. ३-१-१३) इति सूत्रतन्त्रवार्तिके निरूपितम् । तत्र हि—'दशापवित्रेण ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहैकत्वविवक्षाविचारोऽयुक्त इति—

"प्रतीतिव्यतिरेकेण विवक्षाऽन्या न विद्यते ।
नित्यत्वाद्वेदवाक्यानां श्रुतोऽतो नाविवक्षितः ॥"

इत्यादिना आक्षिप्य—

"तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः ।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥'
'शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते ।
तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥'
'अनादिनिधनेऽप्येवं वेदे वेदार्थगोचरे ॥
व्याख्यानं मुख्यवृत्त्याऽपि स्याद्विवक्षाविवक्षयोः ।
ततश्चैतद्ग्रहैकत्वं किं वेदेन विवक्षितम् ।
किं नेति न्यायमार्गेण विचार्य स्थापयिष्यति ॥"

इति समाहितम् । अत्र न्यायसुधा "कस्याः श्रुतेर्व्योमशरीरता श्रुतेत्यपेक्षायां 'खं ब्रह्म' (छा. उ. ४-१०-५) इति श्रुत्या व्योमशरीरतयोदित इत्युक्तम् । 'य आकाशे तिष्ठन्नाकाश-

भावप्रकाशः

मन्तरो यमयतीति य आकाशं वेत्ति यमाकाशं न वेद यस्याकाशश्शरीरमेष त आत्मा सर्वान्तर्याम्यमृतः ' (बृ. उ. ३-७-१२) इति श्रुत्यन्तरसूचनार्थश्चकारः । नित्यस्यापि नियम्यत्वलक्षणयोग्यत्वाद्देहत्वोपपत्तिसूचनार्था नित्यतोक्तिः । ' शब्दब्रह्मतादस्य च चेतनाचेतनयोर्ब्रह्मशब्दयोस्तादात्म्यानुपपत्तेः शब्दो ब्रह्माधिष्ठानमित्येवं व्याख्येयत्वात् शब्दात्मकानामपि वेदानां देहतां ब्रह्माख्यस्य च परमात्मनोऽपि देहाधिष्ठातृतां सूचयितुमाह—शब्देति । यद्वेदाख्यं शास्त्रं शब्दब्रह्मेत्युच्यते तत्परमात्मनाऽधिष्ठितमिति योज्यम् '' इति । उक्तं च खण्डदेवेनापि भाट्टरहस्ये ' जीवातिरिक्तेश्वरे नित्येच्छाङ्गीकारवद्वैदिके शब्देऽपि नित्येच्छाङ्गीकारे बाधकाभावात् । यदि त्विच्छात्वस्यात्मनिष्ठत्वमेवेत्याग्रहस्तदा लिङादिवैदिकशब्दे श्रौतात्मशब्दप्रयोगाभावेनेश्वर इवात्मत्वाङ्गीकारे मानाभावात् । उपनिषदादिप्रमाणगम्यमीश्वरमप्यङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थस्तात्पर्यरूपा च ' इति । अत्रेश्वरस्योपनिषदादिगम्यत्वे ' तं त्वौपानिषदं पुरुषम् ' (बृ. उ. ३-९-२६) इति बृहदारण्यकश्रुतिर्मूलम् । पुरुषशब्दश्च ' स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन औषत् । तस्मात्पुरुषः ' (बृ. उ. १-४-१) ' स वा अयं सर्वासु पूर्षु पुरिशयः ' (बृ. उ. २-५-१८) इति तत्रैव निरुक्तः । औपनिषदपुरुष एव ' विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्, तिष्ठमानस्य तद्विद इति ' (बृ. उ. ३-९-२७) इति तत्रत्यान्त्यश्रुतिप्रतिपाद्यं ब्रह्म । स एव परमात्मा प्रापकतया प्राप्यतया च विवक्षितः । अत्र निरुक्तित्रयपर्यालोचनायां जगत्कारणस्यान्तर्यामिणस्सर्वपापदाहकत्वस्य सिद्ध्या जगत्कारणस्यैव मुक्तिप्रदत्वमिति सिध्यति । अन्ते तस्यैव प्राप्य-

**भावप्रकाशः**

त्वोक्त्या सृष्टिवाक्यानां राजकुमारन्यायेन परमात्मप्राप्तिफलपर्यवसायित्वं सिद्धम् । एतदेव विवक्षितं 'परमात्मप्राप्त्यवस्था' (जै. सू. १-३-२५ तन्त्रवा.) इत्यत्र तन्त्रवार्तिके भट्टपादानाम् । एतेन 'प्राप्तिसाधनमात्मज्ञानमपि परमात्मज्ञानमेव विवक्षितम् । अप्रकरणगतत्वेनानैकान्तिकक्रतुसंबन्धासंभवाच्च नाञ्जनखादिरस्रुववाक्यादिफलश्रुतिवदर्थवादत्वम्' (जै. सू. १-३-२५ व्याकरणाधिकरणतन्त्रवार्तिके) इत्येतदनन्तरभट्टपादोक्त्या 'एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेणोपनिषदां नैराकाङ्क्ष्यं व्याख्यातम्' (जै. सू. २-१-१ भावार्थाधिकरणे तन्त्रवार्तिके) इति प्राक्स्वोक्तौ तात्पर्यं नास्तीति बोधितम् । उपनिषदां कर्मकर्तृजीवभिन्नपरमात्मपरत्वात् । एतेन संबन्धाक्षेपपरिहारे (जै. सू. १-१-१ श्लो. वा.) सृष्ट्यादिदूषणमपि प्रागुक्तपक्षाभिप्रायकम् । तत्रापि न स्वसंमतिरिति सिद्धम् । परमात्मप्राप्त्यवस्थेत्यत्रावस्थापदोपादानेन—

नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते ।
विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता ॥
स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ ।
न त्ववस्थान्तरप्राप्तौ लोके बाल्युवादिवत् ॥
अवस्थान्तरभाव्येतत्फलं मम शुभाशुभम् ।
इति ज्ञात्वाऽनुतिष्ठंश्च विजहच्चेष्टते जनः ।
अनवस्थान्तरप्राप्तिर्दृश्यते न च कस्यचित् ॥

(जै. सू. १-१-५ आत्मवादे २२–२५ श्लो. वा.)

इत्यात्मवादे बुद्धिजन्मविचारे आत्मनः परसंमतकूटस्थत्वानभ्युपगमेन नित्यत्वोपादानात्सगुणात्मवादः स्वाभीष्टः स्थापितो भवति ॥

एतेन न्यायसुधायां सगुणनिर्गुणात्मद्वयं व्याकरणाधिकरणे भट्ट-

भावप्रकाशः

पादविवक्षितमित्यभिप्रायेण ग्रन्थविवरणं खण्डदेवेन तस्यानुसरणं चाभिनिवेशमूलकमेव । एवं न्यायसुधायां ग्रहैकत्वविवक्षाविचारावसरे 'अनादिनिधनेऽप्येवं' (जै. सू. ३-१-१३ तन्त्रवा.) इति श्लोके 'मुख्यवृत्त्याऽपीत्यपिशब्दो मुख्यवृत्तिव्याख्यानस्याभ्युच्चयसूचनार्थः' इत्याद्युक्तिरपि तथैवेति बोध्यम्, व्याकरणाधिकरणात्मवादादिविरोधात्, निर्गुणात्मनः क्वापि भट्टपादैरनिरूपणात्। (श्लो. वा.) आत्मवादे परसंमतकूटस्थतां निराकृत्य अन्ते—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ॥

(आ. वा. १४८ श्लो. वा.)

इत्यत्र भाष्योदिताहमर्थसगुणात्मप्रबोधस्यैव व्याकरणाधिकरणसमार्गाधिकरणोदाहरिष्यमाणवेदान्तनिषेवणेन दृढत्वस्य स्फुटमभिधानात्। प्रत्यक्षसूत्रे 'कैश्चिन्मुक्तात्मनामपि' इत्यत्र सुचरितमिश्रकारिकोक्तदिशा वेदान्तिनां मुक्तानां सर्ववस्तुसाक्षात्कारस्य भट्टपादानामपि संमतत्वाच्च । अतः 'अपहातपाप्मा' (छा. उ. ८-७-१) इत्यादिश्रुतौ सत्यकामत्वादिकमात्मनो विवक्षितमेव । मधुसूदनोक्तरीत्या उत्कर्षः स्तुतिर्वा न घटत इत्येव भट्टपादानामाशयः। तदेतदभिप्रेत्य जिज्ञासाधिकरणे श्रीभाष्ये सगुणनिर्गुणश्रुतिविवेचकत्वमस्याः श्रुतेः प्रतिपादितम्। एवं च निर्गुणोक्त्यनन्तरं गुणोक्तिरेव ब्रह्मणस्सगुणत्वसाधिकेति बोध्यम्।

'यस्य देवे परा भक्तिः' (श्वे. उ. ६-२३) इत्याद्यन्तिमश्रुतिः पूर्वोक्तार्थपरा गुणश्रुतेः पुरुषार्थपर्यवसायितां द्रढयति।

'एतेन निर्गुणश्रुत्युत्तरसगुणश्रुतिवाक्यानां' गुणान् तटस्थीकृत्य तेषां ब्रह्मपरत्वेन गुणे तात्पर्याभावात्' (अ. सि. ७३६ पु) इत्याशयोऽपि

भावप्रकाशः

निरवकाशः। प्रकृतैतावत्त्वाधिकरणनयेन गुणेषु तात्पर्यस्य वेदार्थसंग्रहे भगवतैव साधितत्वात्। निर्गुणश्रुत्यनन्तरं 'एको वशी—तमात्मस्थं, (श्वे. उ. ६-१२) इत्यादिश्रुतेस्तदुत्तरश्रुतीनां चार्थः प्रागेवाभिहितः। अतः 'तमात्मस्थं' (श्वे. उ. ६-१२) इत्यस्य सगुणपरत्वे तदुत्तरश्रुतिविरोधस्य (ल. चं. ७३६ पु) नावकाशः। एवं 'एको वशी—तमात्मस्थं' (श्वे. उ. ६-१२) इति श्रुत्यैव 'तदेवाग्निस्तद्वायुः' (श्वे. उ. ४-२)' 'त्वं स्त्री त्वं पुमानसि' (श्वे. उ. ४-३) इति सामानाधिकरण्यनिर्वाहोऽपि प्रदर्शित इति—

'अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः।
तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः॥

(म. भा. शान्ति. मो. ३२३-५६)

इत्यत्र व्यासेनैव सिद्धान्तितमिति न्यायरक्षामणिमपि पर्यालोच्य हयशिरोरत्नभूषणदीधितौ निरूपितम्।

पूर्वं 'क्षरात्मानावीशते देव एकः' तस्याभिध्यानात्, (श्वे. उ. १-१०) इत्यादौ जगत्कारणत्वेनोक्तस्य पञ्चविंशतितत्वानियामकस्य ध्यानस्य संकल्पद्वारा प्रकृतितरणहेतुता 'तद्वोभयं वै प्रणवेन देहे' (श्वे. उ. १-१३) 'एवमात्माऽऽत्मनि जायतेऽसौ' (श्वे. उ. १-१५) 'सर्वव्यापिनमात्मानम्' (श्वे. उ. १-१६) इत्यत्र व्याप्यनियाम्यजीवस्य पञ्चविंशमवर्णार्थस्य पञ्चविंशस्य व्यापकस्य नियन्तुरीश्वरस्यावर्णार्थस्येत्युभयोः प्रणवार्थता,

'यदात्मतत्त्वेन तु ब्रह्मतत्वं दीपोपमेनेह युक्तः प्रपश्येत्।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपापैः॥

(श्वे. उ. २-१५)

भावप्रकाशः

इत्यत्र विभूतिसंबन्धेन राज्ञ इव पञ्चविंशतितत्वसंबन्धेन विशुद्धस्य ब्रह्मतत्त्वस्य ज्ञानस्य मुक्तिहेतुता,

ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वा अमृता भवन्ति ॥

(श्वे. उ. ३-७)

इत्यत्र 'परं ब्रह्म' इत्यस्य 'परं बृहन्तं' इति विवरणपूर्वकं सर्वव्यापकस्य नियन्तुः परब्रह्मणो ज्ञानस्य मुक्तिहेतुता,

'विश्वस्य स्रष्टारं तमनेकरूपम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति' (श्वे. उ. ४-१४) 'विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपापैः' (श्वे. उ. ४-१६) 'स्रष्टारमनेकरूपं विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपापैः' (श्वे. उ. ५-१३) इत्यत्र विश्वस्रष्टुरनेकरूपवतो विश्वव्यापकस्य देवस्य ज्ञानस्य मुक्तिहेतुता च प्रतिपादितेति 'एको वशी—तमात्मस्थम्' (श्वे. उ. ६-१२) इत्यादिश्रुतेः प्रागुक्तार्थ एव युक्तो न तु परसंमतार्थः ।

तृतीये—

'ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वा अमृता भवन्ति ।'

(श्वे. उ. ३–७)

इति श्रुतौ सर्वव्यापकनियन्तृपरब्रह्मज्ञानस्य मुक्तिहेतुतामभिधाय—

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥

(श्वे. उ. ३-८)

इत्यादौ तदेव दृढीक्रियते । 'तमेव विदित्वा' इत्यत्र तच्छब्दस्य

## भावप्रकाशः

पूर्वोक्तपरब्रह्मरूपमहत्त्वविशिष्टपुरुषोपस्थापकतया एवकारेण महत्त्वधर्मशून्यनिर्विशेषवस्तुज्ञानस्य मुक्तिहेतुता व्युदस्यते।

नन्वीशो महत्त्वविशिष्टः पुरुषः, अपरमेव ब्रह्म तत उत्कृष्टं निर्विशेषमेव परं ब्रह्मेति कथं व्यापकनियन्तृज्ञानस्य मुक्तिहेतुतेति शङ्कायामीशादुत्कृष्टस्यान्यस्य निषेधमुखेन पूर्वोक्तार्थः स्थिरीक्रियते—'यस्मात्परं' (श्वे. उ. ३-९) इत्यादिना। पूर्वं 'ततः परं ब्रह्म' (श्वे. उ. ३-७) इत्यादावुत्कृष्टरूपार्थस्योपस्थित्या अवधिवाचकपञ्चम्यन्तपदानन्तरतया च 'यस्मात्परं' (श्वे. उ. ३-९) इत्यत्र परशब्दस्योत्कृष्टार्थपरत्वमेव युक्तम्। 'ततो यदुत्तरतरं' (श्वे. उ. ३-१०) इत्युत्तरश्रुतौ पूर्ववदुत्कृष्टज्ञानस्य मुक्तिहेतुत्वोक्तेश्च। परमिति 'तुशब्दसमानार्थकं'(गु चं.)इत्युक्तिरभिनिवेशमूलैव, अप्रसिद्धेः। सर्वस्याभावे 'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे. उ. ३-९) इत्येतदन्तिमभागार्थासंभवेनान्तिमभाग एव तदुत्प्रेक्षितदिशा ब्रह्मव्यतिरिक्तमिथ्यात्वस्यैतच्छ्रुतौ विवक्षां निरुणद्धि। अत्र पुरुषशब्दः 'स वा अयं सर्वासु पूर्षु पुरिशयः' (बृ.उ. २-४-१८) इति निरुक्त्यनुसारेण 'विश्वस्यैकं परिवेष्टितारमीशं' (श्वे. उ. ३-७) इति प्रागुक्तसर्वव्यापकनियन्तृवचनः परशब्दे उत्कृष्टविवक्षां द्रढयति। 'किं कारणं ब्रह्म' (श्वे. उ. १-१) इत्याद्युपक्रमप्रभृत्युक्तानां ब्रह्मण उपकारकत्वप्रतीतिसंपादनमुखेन 'यस्य देवे परा भक्तिः' (श्वे. उ. ६-२३) इत्युपनिषदन्तोक्तपरभक्त्याद्यर्थतया ब्रह्मणो गुणादिनिबन्धनोत्कर्षज्ञानमपेक्षितम्। ईशपरब्रह्मणोऽन्यस्योत्कर्षसत्त्वे जगत्कारणेश्वरपरब्रह्मणि परभक्त्या सर्वार्थसाक्षात्काररूपमुक्तिर्न घटत इत्युक्तब्रह्मान्यस्मिन्नुत्कर्षनिषेधोऽप्यपेक्षितः। अत एव षष्ठे 'तमीश्वराणां परमं महेश्वरं'

### भावप्रकाशः

(श्वे. उ. ६-७) इत्याद्यनन्तरं 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे. उ. ६-८) 'न चास्य कश्चिज्जनिता न चाधिपः' (श्वे. उ. ६-९) इति सामान्यतो विशेषतश्च निषेधस्य साफल्यम्। अत एव गीतायां—

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। (गी. ७-६)

इति भगवतः परत्वमभिधाय—

मत्तः परतरं नान्यत्किञ्चिदस्ति धनंजय। (गी. ७-७)

इति तदन्यस्य परत्वं नास्तीति प्रतिपादितम्। एतदभिप्रायेणैवान्तर्यामिब्राह्मणे 'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ३-७-२३) इत्यादौ नियन्तुर्नियन्त्रन्तरं निषिध्यत इति वृत्तिकाराः प्राहुः॥

यद्यप्येतत्समानानुपूर्वीकतैत्तिरीयश्रुतिर्विद्यारण्यभाष्ये—'यस्मात् ब्रह्मतत्वात् परमुत्कृष्टं अपरमनुत्कृष्टं वा वस्तु किञ्चिदपि नास्ति' इति विवृतम्। तथाऽपि 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' (श्वे. उ. ३-९) इत्यनन्तरवाक्य इव नञ्द्वयं नास्ति, नापि वाकारः। वाकाराध्याहारेऽत्र पूर्वं परत्र च ब्रह्मण उत्कर्षप्रतिपादनं विरुध्यते।

न च 'यस्मान्नाणीयो न ज्यायोऽस्ति' (श्वे. उ. ३-९) इत्यादावुभयनिषेधो विफलः; ब्रह्मणि अणुत्वमहत्त्वरूपधर्मद्वयस्य विरोधेनासंभवादिति वाच्यम्। औपाधिकस्याणुत्वस्य तात्विकमहत्त्वस्य च ब्रह्मणि निर्णयसंभवेनोत्कर्षस्य तेनापि दृढीकरणात्। अस्मिन्नेवाध्याय उत्तरत्र—

'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः।
य एतद्विदुरमृतास्ते भवन्ति' (श्वे. उ. ३-१३) इत्यत्राङ्गुष्ठ-

भावप्रकाशः

परिमाणहृदयसंनिविष्टत्वेन ब्रह्मणोऽङ्गुष्ठपरिमाणत्वं प्रागुक्तदिशा सौलभ्यमनुसंधाय भक्तिं कुर्वतां मुक्तिरिति प्रतिपाद्य—

'अणोरणीयान्महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम्॥ (श्वे. उ. ३-२०)

इत्यत्र प्रागुक्तार्थो विशदीकृतः। अत्रेशस्य अणोरणीयस्त्वस्य महतो महीयस्त्वस्य च प्रतिपादनेन पूर्वं 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' (श्वे. उ. ३-९) इत्यत्र यच्छब्दार्थ ईश एवेति निर्धारितम्॥

एवं 'एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा—एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्' (छा. उ. ३-१४-३) इति सगुणविद्यात्वेन परसम्मतशाण्डिल्यविद्यायामप्युपाधिनिर्देशेनौपाधिकमणुत्वं स्वाभाविकं महत्त्वं च प्रतिपादितम्। तथा च सूत्रम्—'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' (ब्र. सू. १-२-७) इति। अत्र श्रुतिसूत्रभाष्ययोः (शं. भा.) परैरौपाधिकमणुत्वं स्वाभाविकं महत्त्वमित्येवोक्तम्।

एवं च 'ततः परं ब्रह्म—ईशं तं ज्ञात्वा अमृता भवन्ति' (श्वे. उ. ३-७) 'अणोरणीयान्—धातुः प्रसादान्महिमानमीशम्' (श्वे. उ. ३-२०) इति पूर्वं परत्र चेश्वरस्यैवोत्कर्षस्य अणोरणीयस्त्वस्यौपाधिकस्य महतो महीयस्त्वस्य स्वाभाविकस्योत्कर्षविशेषस्य च प्रतिपादनेन षष्ठे 'न तत्समश्चाभ्यधिकश्च दृश्यते (श्वे. उ. ६-८) 'न चास्य कश्चिज्जनिता जनाधिपः' (श्वे. उ. ६-९) इत्यत्रेश्वरा-

## भावप्रकाशः

कृष्टस्येश्वरजनकस्य तदधिपस्य च निषेधवत् ' यस्मात्परं नापरमस्ति चित् ' यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ' (श्वे. उ. ३-९) प्रत्रेशादन्यस्योत्कृष्टस्येशादणीयस ईशाज्ज्यायसश्च निषेध एव विव- तः। एतेन पूर्वं परत्र च प्रतिपादित ईशस्योत्कर्षो दृढीकृतो ति। 'वृक्ष इव स्तब्धो दिवि तिष्ठति' (श्वे. उ. ३-९) प्रत्र पूर्वं ' आदित्यवर्णं तमसः परस्तात् ' (श्वे. उ. ३-८) इत्यत्र तिमण्डलादूर्ध्वस्थानवर्तित्वं यदुक्तं तदेव 'दिवि तिष्ठति' . उ. ३-९) इत्यत्र विवाक्षितम्। स्तब्धत्वं तु परवासुदेवस्य कर्षणादिमुखेन सृष्टिकर्तृत्वतात्पर्यकम्। 'तेनेदं पुरुषेण सर्वं' . उ. ३-९) इत्यत्र ' विश्वस्यैकं परिवेष्टितारं ' (श्वे. उ. ३-७) गादौ बहुत्रोक्त एव वासुशब्दार्थ उक्तः। ईशादन्यस्यो- र्षनिषेधादिना ईशशब्दार्थस्य परवासुदेवस्योत्कर्षं स्थाप- वा तज्ज्ञानस्यैव मुक्तिहेतुत्वं प्रागुक्तं हेतुतो निगमयति—' ततो त्तरतरं ' (श्वे. उ. ३-१०) इत्यादिना। तत उत्तरमित्यादि- पपरित्यागेन ततो यदुत्तरतरमित्यादिक्रमेण तत इत्यत्रावधिपञ्चमी विवक्षितेति प्रतीयते। ततः ईशादन्यस्योत्कर्षनिषेधादितः उत्तरत्र ध्यनिर्देशेन यत्किञ्चिदवधिकोत्कर्षस्याविवक्षाप्रतीत्या स्वेतरसवा- केोत्कर्षवदित्यर्थः। यत् तत् इत्युक्त्या पूर्वमुत्कृष्टत्वेन प्रतिपादित- गरूपं यद्वस्तु तदेव अरूपमनामयं, न तु निर्विशेषमिति प्रतीयते।

'ततः परं ब्रह्म सर्वभूतेषु गूढं' (श्वे. उ. ३-७) इत्यादौ वत् स्थितिप्रतिपादनेन ' स विश्वरूपः—विश्वाधिपस्संचरति कर्मभिः ' (श्वे. उ. ५-७) ' कर्मानुगान्यनुक्रमेण देही स्थानेषु ण्यभिसंपद्यते ' (श्वे. उ. ५-११) इत्यत्र वक्ष्यमाणदिशा कर्ममूलक-

### भावप्रकाशः

रूपसंबन्धः प्रसक्तः प्रतिषिध्यते, न तु रूपसामान्यम्, 'विश्वस्य स्रष्टारमनेकरूपं–ज्ञात्वा देव मुच्यते सर्वपापैः' (श्वे. उ. ५-१३) 'विश्वस्य स्रष्टारमनेकरूपं–ज्ञात्वा शिवं शान्तिमत्यन्तमेति' (श्वे. उ. ४-१४) इत्यत्रानेकरूपवत्त्वज्ञानस्य मुक्तिहेतुत्वोक्तिविरोधात्। अतः 'यस्मात्परं' (श्वे. उ. ३-९) इत्यादेः 'तथाऽन्यप्रतिषेधात्' (ब्र. सू. ३-२-३६) इति सूत्र(शं)भाष्योक्तार्थस्य (तै. उ. विद्यारण्यभाष्ये गुरुचन्द्रिकालघुचन्द्रिकयोश्च) साधनं परेषां श्रुतितात्पर्याननुगुणमिति तत्सूत्रश्रीभाष्योक्त एवार्थस्साधीयानिति सिद्धम्।

एवं च श्वेताश्वतरीयतृतीयश्रुतीनां परोत्प्रेक्षितनिर्गुणपरत्वासंभवेन ब्रह्मान्यस्योत्कर्षनिषेधादिना परब्रह्मण ईशस्योत्कर्षतात्पर्यकतया श्वेताश्वतरीयषष्ठेऽपीश्वरादुत्कृष्टनिषेधोक्त्यनन्तरं 'एको वशी–तमात्मस्थं' (श्वे. उ. ६-१२) इत्यत्रापि प्रागुक्त एवार्थः श्रुतितात्पर्यविषयः। 'ततो यदुत्तरतरं' (श्वे. उ. ३-१०) इति श्रुत्युत्तरार्धे 'य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति' (श्वे. उ. ३-१०) इत्यत्र 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' (श्वे. उ. ६-१२) इत्यत्र चेशज्ञानेन मुक्तिरेव प्रतिपाद्यते। तेषां सुखमिति बहूनां सुखसंबन्धोक्त्याऽपि निर्गुणविवक्षा न घटते। एवं च निर्गुणविवक्षायां प्रमाणाभावेनौपनिषदी परविद्या सर्वाऽपि सगुणविद्येति सिद्धम्। अतश्च निर्गुणविद्या ज्ञानं, प्रमा परब्रह्मविषयिणी, सगुणविद्या उपासनं, भ्रमोऽवरब्रह्मविषयीत्यादिकमनादरणीयम्।

## सर्वार्थसिद्धिः

(*ग्रन्थिमोक्षायेति फलैक्यव्यञ्जनम् )

### भावप्रकाशः

***ग्रन्थिमोक्षायेत्यादि॥** 'आहारशुद्धौ सत्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः, (छा. उ. ७. २६-२) इति श्रीभाष्योदाहृतश्रुतिवाक्यमत्राभिप्रेतम् । अत्र हृदयशब्दपरित्याग-पूर्वकं सर्वशब्दोपादानेन—

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते (क. उ. २-६-१५)
'यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ' । (क.उ. २-६-१५)

इत्यत्रेव हृदयग्रन्थिशब्दार्थभूतकाममात्रं परोक्तदिशा (सिद्धान्त-सिद्धाञ्जनं प्र. भा. ११६) न विवक्षितमिति बोधितम् । कठश्रुतौ 'समाधिनिर्धूतमलस्य चेतसः—स्वयं तदन्तःकरणेन गृह्यते ' ( मै. उ. ६-३४) इति मैत्रायणीयश्रुत्युक्तदिशा 'तां योगामिति मन्यन्ते ' (क.उ. २-६-११) इति प्रागुक्तयोगात्मकासंप्रज्ञातसमाधिकालिको ब्रह्मानुभवो विवक्षित इति तावन्मात्रविवक्षा । तत्र पापनाशानुक्त्या सर्वग्रन्थिनाश-संभवात् । अत एवासंप्रज्ञातसमाधिफलभूतस्यामृतत्वस्य 'शतं चैका च —तयोर्ध्वमायन्नमृतत्वमेति ' (क. उ. २-६-१६) इति तदनन्तरमन्त्रे उक्तिस्संगच्छते ।

अत्र तु—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

(मुण्ड. उ. २-२-८)

भावप्रकाशः

इत्यत्र 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. ३-२-९) इत्यनन्तरं 'तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति' (मुण्ड. उ. ३-२-९) इत्यत्र च नाश्यतयोक्तास्सर्वेऽपि बन्धकास्सर्वग्रन्थिशब्देन संगृहीताः। अत्र 'ध्रुवा स्मृतिः ततस्सर्वग्रन्थीनां विप्रमोक्षः' इत्यनभिधाय 'स्मृतिलम्भे सर्वग्रन्थीनां' (छा. उ. ७–२६–२) इत्याद्युक्त्या लम्भशब्देन स्मृतेः परिपाकावस्थाया बोधनेन ध्रुवस्मृतिमात्रसमनन्तरं न सर्वग्रन्थीनां मोक्षः, किन्त्वसंप्रज्ञातसमाधिपर्यन्तपूर्णपरिपाकावस्थामापन्नायास्तस्या निष्पत्तावेवेति बोधितम्। 'तत्र प्रत्ययैकतानता ध्यानम्' (यो. सू. ३-२) 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' (यो. सू. ३-२) इत्यत्र ध्यानस्यैव समाधित्वोक्तेः समाधिः परिपाकदशापन्नस्मृतिरूपैव। एतदेवाभिप्रेत्य 'उपासन स्याद्ध्रुवानुस्मृतिः' इति वाक्ये ध्रुवा स्मृतिरिति श्रौतशब्दमात्रनिर्देशं विहाय ध्रुवानुस्मृतिरिति निर्देशः। इत्थं च वेदनध्यानदर्शनानां पापतत्कार्यबन्धकसामान्यक्षयरूपफलैक्यं सिद्धम्। 'क्षरात्मानावीशते देव एकः' (श्वे. उ. १-९) इत्यत्र नियाम्यनियामकभावेनोक्तयोर्जीवात्मदेवयोः 'तद्वोभयं प्रणवेन देहे' (श्वे. उ. १-१३) इति प्रणवप्रतिपाद्यत्वोक्त्यनन्तरं—

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्॥

(श्वे. उ. १-१४)

इत्यत्र ध्यानपरिपाकदशैवोक्ता। 'ऋतंभरा तत्र प्रज्ञा' (यो. सू. १-४८) इति सूत्रभाष्ये उदाहृतम्—

आगमेनानुमानेन ध्यानाभ्यासरसेन च।

भावप्रकाशः

त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥

(यो. सू. भा. १-४८)

इति वचनमसंप्रज्ञातसमाधिरूपोत्तमयोगस्य ध्यानाभ्याससाध्यत्वं प्रतिपादयतीत्यस्यां श्रुतावपि दर्शनमसंप्रज्ञातसमाधिरूपमेव विवक्षितम् । अत एव द्वितीये — 'त्रिरुन्नतं स्थाप्य शरीरं' (श्वे. उ. २-८) इत्युपक्रम्य 'योगाग्निमयं शरीरं' (श्वे. उ. २-१२) 'योगप्रवृत्तिः प्रथमां वदन्ति' (श्वे उ. २-१३) इत्याद्युक्त्यनन्तरं —

'यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ॥

(श्वे. उ. २-१५)

इति पूर्वार्धे समाधिरूपयोगकालिकदर्शनमभिधाय —

अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ।

(श्वे. उ. २-१५) इत्युत्तरार्धे समाधिज्ञानात्मवशापनिवृत्तिरूपमुक्त्युक्तिस्संगच्छते ॥

एतत्समाधावपि स्मृतित्वं वर्तत एव । 'तदेवार्थनिर्भासं स्वरूपशून्यमिव समाधि.' (यो. सू. ३३) इति समाधिलक्षणस्यात्राप्युपपादनीयत्वात् । तत्र स्वरूपशून्यमिवेत्यत्रेवेत्यनेन वस्तुतः स्मृतिरूपत्वं वर्तत एवेति बोधनात् । स्वरूपशून्यत्वं तु भावनाबलजस्मृतौ साक्षात्करोमीति प्रतीतिप्रयोजकविषयताविशेषरूपदर्शनसमानाकारत्वादेव । एततात्पर्येणैव श्रुतौ पश्येदित्युक्तम् ।

यद्यपि मणिकृता 'प्रत्यक्षस्य साक्षात्कारित्वं लक्षणं, चाक्षुषादिज्ञाने साक्षात्करोमीत्याद्यनुगतबुद्धबाधकं विना जातिविषयकत्वात्' इत्युक्तम् । तद्व्याख्याने मधुरानाथेन सुरभि चन्दनमित्यत्र सौरभं साक्षात्करोमीत्यनुव्यवसायवारणाय विषयिताविशेषस्यावश्यकत्वमाशङ्क्य लाघ-

## भावप्रकाशः

वात्साक्षात्कारत्वं जातिरूपमेवेति सिद्धान्तितम्; तथाऽपि गदाधरभट्टाचार्यैः सत्प्रतिपक्षे रत्नकोशकारमतपरिष्करणावसरे साक्षात्कारित्वव्यञ्जकविषयिताविशेषमङ्गीकृत्य लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धौ तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमिति प्रतिबध्यप्रतिबन्धकभावे लौकिकसंनिकर्षाजन्यदोषाविशेषाजन्यत्वस्थाने साक्षात्कारित्वव्यञ्जकविषयताविशेषशून्यत्वं निवेश्य दोषविशेषजन्यज्ञानेऽपि तां विषयतामङ्गीकृत्यानुपपत्तिपरिहारः कृतः।

एतेनात्र यदंशे दोषविशेषजन्यत्वं तदंशे ज्ञानलक्षणा प्रत्यासत्तिरूपाऽलौकिकसंनिकर्ष एव प्रयोजकः। लौकिकसंनिकर्षाजन्यज्ञानेऽपि साक्षात्कारित्वव्यञ्जकविषायिताविशेषोऽङ्गीकृतः। अन्यथाख्यातेः पूर्वं ग्रहणस्मरणात्मकज्ञानद्वयस्य सर्वसंमततया तेनैव निर्वाहेऽन्यथाख्यातिर्नादर्तव्येति वदतां मते रजतं साक्षात्करोमीत्यनुभवापलापासंभवेन स्मृतावपि साक्षात्कारित्वव्यञ्जकविषयिताऽवश्यमभ्युपेयैव।

एवं भावनाप्रकर्षजन्यस्मृतेस्सर्वसंमततया तत्र साक्षात्कारित्वव्यञ्जकविषयिताविशेषाङ्गीकारेणैव 'वृक्षे वृक्षे च पश्यामि' (श्रीवाल्मीकिरामायणे आरण्यकाण्डे—३९.-१४) इत्यादिप्रतीतिनिर्वाहे तदुत्तरप्रत्यक्षाङ्गीकारो विफल इति। अतो ध्रुवस्मृतेर्दर्शनसमानाकारत्वसंभवेन 'देवं पश्येत्' (श्वे. उ. १-१४) इति प्रागुदाहृतश्रुतिरुपपद्यते। एतेन-

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा।
ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः॥
(मुण्ड. उ. ३-२-८)

इति श्रुतिरपि निर्व्यूढा। अत्र ज्ञानप्रसादेन विशुद्धसत्वो निष्कलं ध्यायमानस्ततस्तं पश्यतीति योजना। 'तम् ह देवमात्मबुद्धिप्रसादं'

भावप्रकाशः

(श्वे. उ. ६-१८) इत्यत्रोक्तो देव एव ज्ञानप्रसादशब्दार्थः। 'महान् प्रभुर्वै पुरुषः सत्वस्यैष प्रवर्तकः' (श्वे. उ. ३-१२) इत्युक्त्या तेन विशुद्धसत्व इत्यर्थः, तत इत्यस्य ज्ञानप्रसादाद्देवादित्यर्थः। 'तपःप्रसादाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्' (श्वे. उ. ६-२१) इत्यत्र 'यदात्मतत्त्वेन तु ब्रह्मतत्त्वं ज्ञात्वा देवं' (श्वे. उ. २-१५) इत्यत्रोक्तयोगरूपज्ञानस्यापि देवप्रसादाधीनत्वोक्तेः। उपनिषदन्तरे (श्वे. उ. १-१४) देवं पश्येदिति श्रुतौ तत्रैव वक्ष्यमाणोऽर्थस्सर्वोऽपि विवक्षित इत्यनया श्रुत्या निर्धारितं भवति। अतश्च श्रुतिद्वयमेकार्थमेव।

एवमेव 'तमेवैकं जानथात्मानम्' (मुण्ड. उ. २–२–५) इत्युक्तज्ञानस्य 'ओमित्येवात्मानं ध्यायथ' (मुण्ड. उ. २–२–६) इति ध्यानरूपत्वमभिधाय—

'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति' (मुण्ड. उ. २-२ ७) इति ध्यानस्य दर्शनरूपताप्रकारोऽवधारितः।

एतदनन्तरं—'भिद्यते हृदयग्रन्थि —तस्मिन् दृष्टे परावरे' (मुण्ड. उ. २-२ ८) इत्यत्र कर्मसामान्यनाश एव पूर्वोक्तसमाधिरूपदर्शनस्य प्रधानं फलमिति, 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मुण्ड. उ. ३-१-३) इत्यत्र सर्वविषयकज्ञानवत्त्वेन साम्यं विवक्षितमिति च पूर्वमेवोपपादितम्। एतेन पुण्यपापरूपकर्मसामान्यक्षयसमनन्तरमेव सर्वविषयकज्ञानवत्त्वमिति सिद्धम्।

अतः 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा. उ. ७-२६-२) इत्यत्र सर्वकर्मक्षयो विवक्षितः। तदुक्तं शङ्कराचार्यैः—
"ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात्। तथाहि श्रुतिः—

### भावप्रकाशः

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

(मुण्ड. उ. २-२-८)

इति, 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा. उ. ७-२६-२) इति चैवमाद्या । स्मृतिरपि—

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥

(गी. ४-३७)

इति " (ब्र. सू. श्र भा. ३-२-३२) इति । अत्र स्मृतेर्ज्ञानत्वं 'भिद्यते— परावरे' (मुण्ड. उ. २-२-८) 'स्मृतिलम्भे' (छा. उ. ७-२६ २) इति श्रुत्योरैकार्थ्यं च स्फुटम् । कर्मणां ज्ञानावरणत्वं योगसूत्रे विवक्षितमिति पूर्वमेव (२२६ पु.) निरूपितम् । एवं च 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा. उ. ७-२६-२) इत्यत्र ज्ञानावरणसर्वकर्मक्षयस्य विवक्षितत्वेन सर्वं ह पश्यः पश्यति' (छा. उ. ७-२६-२) इति प्रागुक्तसर्वदर्शनं मुक्तिकालिकमुपपादितं भवति । इदं च दर्शनं मुक्तिकालिक मेव, 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्' (छा. उ. ७-१-३) 'सोऽहं भगवश्शोचामि तं मा भगवन् शोकस्य परं पारं तारयितासि' (छा. उ. ७-१-३) इति नारदप्रश्नः । तस्य च सनत्कुमारप्रतिवचने 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः (छा. उ. ७-२३-१) इत्यभिधाय तस्यैवाहमर्थजीवान्तर्याम्यात्मनस्सार्वात्म्यमुपदिश्य 'स वा एष एवं पश्यन्नात्मक्रीड आत्ममिथुन आत्मानन्दः' (छा. उ. ७-२५-२) इति निरतिशयसुखरूपजीवान्तर्याम्यात्मद्रष्टुः परमात्मस्वरूपानन्दवत्त्वमभिधाय 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति'

तत्त्वमुक्ताकलापः

**स्पष्टा दृष्टिस्तथैव श्रुतिफलविषया**

सर्वार्थसिद्धिः

तत्फलार्थे वाक्ये *दृष्टिशब्दस्तु स्मृतिमेव वैशद्येन विशिनष्टि। ननु चाक्षुषज्ञानं प्रत्यक्षमात्रं वा ब्रूयादित्याह– **तथैवेति**॥ विशद-

आनन्ददायिनी

ननु भिद्यते हृदयग्रन्थिरिति वाक्येन दर्शनस्य फलं प्रतीयते न स्मृतेः। एवं च स्मृतिफलतया ग्रन्थिविमोक्षणस्य फलैक्यव्यञ्जनमनुपन्नमित्यत्राह—**तत्फलार्थ इति**॥ ननूभयमपि प्रत्येकमेव साधनमस्तु, किमर्थं दर्शनसमानाकारता विधीयत इति चेत्। विकल्पस्य निरस्तत्वात्। उभयोः स्मृतिदर्शनयोरैक्यस्यासंभवात् अन्यतरशब्दस्यान्यपरत्वे वक्तव्ये स्मृतित्वप्रतिपादकानां बाहुल्यात् स्मृतिशब्दानां दर्शनपरत्वेऽतिशयितलक्ष्याकाराभावेन प्रयोजनाभावाद्दर्शनशब्दे मुख्यार्थस्य बाधेन लक्षणाया आवश्यकत्वाच्च दर्शनसमानाकारत्वमिति भावः। ननु दर्शनसमानाकारायामपि ध्रुवानुस्मृतौ क्रियावाच्युपास्तिशब्दः कथमित्यत्राह—**विशदेति**॥ ज्ञानात्मकत्वा-

भावप्रकाशः

(छा. उ. ७-२६-२) इत्याद्युक्तम्। अत्र जगत्स्रष्टुरानन्दरूपत्वमभिधाय ततो जगत्सृष्टिः तत्र क्वापि दुःखत्वासाक्षात्कारः सर्ववस्तुसाक्षात्कारश्चोक्तः। परमात्मनो निरतिशयानन्दरूपत्वेन सुखतया साक्षात्करोतीत्यर्थस्य विवक्षितत्वेन नारदप्रश्नस्य प्रतिवचनं समञ्जसं भवति। सर्ववस्तुनस्सुखतया साक्षात्कारस्य कर्मबन्धदशायामसंभवेन ज्ञानावरणकर्मसामान्यक्षय एव तत्संभव इति 'स्मृतिलम्भे' (छा. उ. ७-२६-२) इत्यादौ सर्वकर्मसामान्यक्षयोऽभिहितः। इत्थं च ज्ञानध्यानदर्शनानां फलैक्यं सुस्थम्॥

***दृष्टिशब्दस्त्विति**॥ 'तस्मिन् दृष्टे परावरे' (मुण्ड.

तत्त्वमुक्ताकलापः

**सेवनत्वादुपास्तिः ।**

सर्वार्थसिद्धिः

ध्रुवानुस्मृतावुपास्तिशब्दनिमित्तमाह—*सेवनत्वादिति ॥

आनन्ददायिनी

दिति भावः । ननु वेदनोपासनयोः शब्दभेदात्स्वविषयभेदकत्वं स्यादित्य-

भावप्रकाशः

उ. २-२-८) इत्यत्र दृष्टिवाचिशब्दः 'स्मृतिलम्भे (छा. उ. ७-२६-२) इति श्रुत्युक्तस्मृतिमेव वैशद्येन विशिनष्टीत्यर्थः । 'स्पष्टा दृष्टिः' इति मूलवाक्येन 'स्पष्टं प्रत्यक्षम्' (प्र. त. अलं. २-२) 'अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टम्' (प्र. त. अलं २-३) इति प्रत्यक्षसामान्यपरप्रमाणनयतत्त्वालोकालंकारजैनसूत्रद्वय प्रत्यभिज्ञापितम् । प्रमाणवार्तिके योगिप्रत्यक्षनिरूपणावसरे धर्मकीर्तिनाऽप्युक्तम्—

प्रागुक्तं योगिनां ज्ञानं तेषां तद्भावनामयम् ।
विधूतकल्पनाजालं स्पष्टमेवावभासते ॥ (२-२८१)
कामशोकभयोन्मादचोरस्वप्नाद्युपप्लुताः ।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥ (२-२८२)
तस्माद्भूतमभूतं वा यद्यदेव विभाव्यते ।
भावनापरिनिष्पत्तौ तत्स्पष्टं कल्पधीफलम् ॥ (२८५)
तत्र प्रमाणं संवादि यत्प्राङ्निर्णीतवस्तुवत् ।
तद्भावनाजं प्रत्यक्षमिष्टं शेषा उपप्लवाः ॥ (२८६)

इति । अत्र स्फुटार्थावभासित्वं प्रत्यक्षत्वमिति स्फुटम् । सिद्धान्तेऽपि योगिप्रत्यक्षमिष्यते । पूर्वानुभूतार्थविषयकं भावनाबलजं ज्ञानं तु स्मृतिरेव । वैशद्यातिशयाद्दर्शनसमानाकारमेव तत् । तत्र प्रत्यक्षत्वाङ्गीकारे मानाभावात् । अननुभूतातीतानागतातीन्द्रियार्थविषयकं योगिप्रत्यक्षमिति श्रीतत्त्वटीकायां स्फुटम् ।

*** सेवनत्वादितीति ॥ उदाहृतशङ्करभाष्ये (पु. २८५) गुरु-**

तत्त्वमुक्ताकलापः

## क्वाप्यैक्यं विद्युपास्योर्व्यतिकरितगिरा

सर्वार्थसिद्धिः

* यस्तद्वेदेत्यादिषु केषुचिद्वाक्येषु एकस्मिन्नेव विषये वेदनोपासनशब्दयोर्व्यतिकरेणोपक्रमोपसंहारदर्शनाच्च वेदनमेवोपासनतया विशेष्यत इत्याह—क्वापीति ।

आनन्ददायिनी

आह—यस्तद्वेदेत्यादि ॥ 'यस्तद्वेद यत्स वेद' इति वेदशब्दार्थ एव 'यां देवतामुपास्से' इति जानश्रुतिरुपासिनाऽन्ववददिति व्यतिरेकेण निर्देश इत्यर्थः । 'मनो ब्रह्मेत्युपासीत' इति विहितमेवोपासनं 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' इति फलविधानार्थं विदिनाऽनूदित इत्यादिरादिशब्दार्थः । एकत्वबोधकाभाव एव [1] शब्द-

भावप्रकाशः

मुपास्त इत्यादौ गुर्वादीननुवर्तेत इति विवरणेन उपास्तिस्सेवनमित्येव सिध्यतीति भावः । श्रीभाष्ये 'न स वेद—आत्मेत्येवोपासीत' (बृ. उ. १-४-७) इति वाक्यानन्तरं 'यस्तद्वेद' (छा. उ. ४-१-४) इत्यादिवाक्यमुपात्तमित्यत्रापि 'न स वेद' (बृ. उ. १-४-७) इत्यादेर्निर्देशौचित्येऽपि परैर्यस्तद्वेदेत्यादिवाक्यस्यैवोपादानेन आवृत्त्यधिकरणेऽस्यार्थस्य व्याससंमतत्वं परेषामपि संमतमिति बोधनाय 'यस्तद्वेद (छा. उ. ४ १-४) इत्यादिवाक्यमेव निर्दिशति—

* यस्तद्वेदेत्यादिष्विति ॥ विद्युपास्त्योरेकार्थकत्वस्य सूत्रकृत्तात्पर्यविषयकत्वस्य परेषामपि संमततया तेन परब्रह्मविषयकज्ञानस्या-

---

[1] शब्दो भेदक इति—क. ख.

**भावप्रकाशः**

व्यावृत्तेः परसंमततयाऽनावृत्तज्ञानस्य क्वचिदपि सूत्रकृता मुक्तिहेतुत्वाप्रतिपादनेन परब्रह्मज्ञानावृत्तेर्मन्दाधिकारिकत्वोक्तिर्न सूत्रकृत्तात्पर्यविषय इति सूचितम् ।

एवं परापरब्रह्मभेदेन ज्ञानोपासनाविभागोऽपि परेषां सूत्रकाराशयविरुद्ध एव । 'आत्मेत्येवोपासीत' (बृ. उ. १-४-७) इत्यत्र नियमविधिप्रतिपादनपूर्वक 'आत्मानमेवावैत्' (बृ. उ. १-४-१०) इति ज्ञानसंततिर्विवक्षितेति परैः (शं. उप. भा.) उक्तम् । अत्र ज्ञानोपासनयोर्भेदाङ्गीकर्तॄणां मते उपासीतेति ज्ञानलाक्षणिकं वाच्यम् । 'मनो ब्रह्मेत्युपासीत—भाति च—य एवं वेद' (छा. उ. ३, १८, बृ. १-६)इति परैः (शं. सू. भा.) आवृत्त्यधिकरण सूत्रभाष्ये विदिधातुरुपासने लाक्षणिक इति वक्तव्यमिति लक्षणाकल्पनेऽप्यैकरूप्यं नास्ति । अर्थप्रकाशत्वरूपं ज्ञानत्वं विवरणोक्तं मधुसूदनब्रह्मानन्दसरस्वतीभिरप्यभ्युपगतं स्मृत्यनुभवसाधारणं संभवतीति स्मृतौ ज्ञानत्वाभावोक्तिरनादरणीयैवेतिभावः ।

**इत्यादिष्वित्यादिपदेन** 'मामेव विजानीहि' (कौ. उ. १-३-१) 'तं मामायुरमृतमित्युपास्स्व' (कौ. उ. ३-१) 'स म आत्मेति विद्यात्' (कौ. उ. ३-८) इत्यादिसंग्रहः । उपक्रमोपसंहारयोरभावेऽपि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. उ. २-४-५) 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' (बृ. उ. २-४-५) इत्यादावपि ज्ञानध्यानयोरैक्यमित्यादिकमवसेयम् ।

एतेन 'ओमित्येवात्मानं ध्यायथ—तद्विज्ञानेन परिपश्यन्ति धीराः' (मुण्ड. उ. २-२-६) इत्यत्राप्यैकार्थ्यं सिद्धम् । तेन परविद्यासामान्यमप्युपासनरूपमित्येव सिध्यति ।

तत्त्वमुक्ताकलापः

## भक्तिमेवाह गीता

सर्वार्थसिद्धिः

*एतेषु क्वचिदपि वाक्ये भक्तिशब्दो न मोक्षोपायविषयः श्रूयत इत्यत्र 'यमेवैष वृणुते तेन लभ्यः' इति *श्रुत्यभिप्रेतं गीयत इत्याह— **भक्तिमेवेति** ।

आनन्ददायिनी

भेदो भेदक इति भावः । ननु मोक्षोपायस्य भक्त्यात्मकत्वं कथमित्यत्राह—**एतेष्वित्यादिना** । निर्धारणे सप्तमी । 'यमेवैष वृणुते' इत्यत्र वरणीयताप्रयोजकस्य वरणीयगतस्नेहस्य भक्तित्वात्तस्यैवोपासनत्वात्परमात्मा वृणुते तेन पुरुषेण परमात्मा प्राप्यः । परमपुरुषः स्वविषयभक्तिमन्तमेव वृणुते । तथा च तादृशभक्त्या प्राप्य इति लभ्यते । 'नान्यः पन्थाः' इत्यादि शास्त्रबलाद्वेदान्तविहितसाधनभूतज्ञानस्य भक्तित्वं सिध्यतीति भावः ।

भावप्रकाशः

अन्या प्रेमलक्षणा भक्तिः, अन्या चाद्वितीयात्मज्ञानरूपा भक्ति मुक्तिहेतुरिति गीताशास्त्रसारं परे वदन्ति तद्व्यावृत्त्यर्थमाह मूले—

*__भक्तिमेवाह गीतेति__ । सप्तमप्रभृति सर्वत्र भक्तेरेव मुक्तिहेतुत्वमुक्तम्, न परसम्मतज्ञानमित्यर्थः । '**भक्तिर्मुक्तेरुपायः**' इत्युक्त्वा '**भक्तिमेवाह गीता**' इत्युक्त्या मूलस्येत्थमेवार्थः ।

परेषामाक्षेपे श्रुतिषु भक्तिशब्दाश्रवण मूलं वदन्नवतारयति— *__एतेष्वित्यादि__ । *__श्रुत्यभिप्रेतमिति__ ॥ 'यमेवैष वृणुते तेन लभ्यः' (क.उ. १-२-२३) इति श्रुतौ परसम्मतार्थो नाभिप्रेत इति प्रागेव (सर्वार्थ

## भावप्रकाशः

सिद्धि. पु. १३४-१३७) निरूपितम्। 'विज्ञानसारथि——सोऽध्वनः पारमाप्नोति' (क. उ. १-३-९) 'अथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्। ब्रह्म प्राप्तः' (क. उ. २-३-१८) इत्युत्तरत्र जीवस्य परप्राप्ति-र्विशदीकृता। श्रुतौ विज्ञानस्य सारथित्वं यदुक्तं तत्कृष्ण एव विश्राम्य-तीति गीतापर्यालोचनायां प्रतीयते। 'बुद्धिर्ज्ञान——भवन्ति भावा भूतानां मत्त एव' (गी. १०-४) 'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानं' (गी. १५-१५) इति सारथित्वेन स्थितस्य कृष्णस्य वचनात्। एतेन गीता कठश्रुतिविवरणरूपेति प्रतीयते। एतच्छ्रुत्य-नन्तरं 'नाविरतो दुश्चरितात्—प्रज्ञानेनैनमाप्नुयात्' (क.उ.१-३-२४) इति श्रुतौ निषेधपर्यालोचनायां 'यमेवैष वृणुते तेन लभ्यः' (क. उ. १-२-२३) इत्यत्र प्रज्ञानसाध्यो लाभ एव विवक्षित इत्यभिप्रेत्य गीतायां सप्तमे 'चतुर्विधा भजन्ते मां' (गी. ७-१६) इत्यत्र 'ज्ञानी' इति निर्देशः। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' (गी. ७-१७) इति वाक्येन वरणीयत्वमत्यर्थप्रियत्वनिबन्धनामिति बोधितम्। योगविध्यनुसारेण ब्रह्मप्राप्तेः कठश्रुतौ प्रतिपादनाद्ध्यानानन्तरकालिक-समाध्यवस्थापन्नज्ञानमेव भक्तिरित्यर्थः—

'अनन्यचेतास्सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः' (गी. ८-१४) इत्यादिगीतावचनैरेतच्छ्रुतौ विवक्षित इति बोध्यते। मुण्डकोपनिषदि 'अथ परा यया तदक्षरमधिगम्यते' (मुण्ड. उ. १-१-५) इत्युपक्रमे पराविद्यासामान्यस्य प्राप्तिकरणत्वं यदुक्तं तत् 'यमेवैष वृणुते तेन लभ्यः' (क. उ. १-२-२३) इति श्रुत्या वरणद्वारकमिति निर्धारणपूर्वकं पराविद्याया भक्तिरूपत्वबोधनेन विशदीकृतम्। अत्रापि 'ओमित्येवात्मानं ध्यायथ' (मुण्ड. उ. २-२-६) इत्यादौ ध्यानसमनन्त-

भावप्रकाशः

रसमाधिविवक्षा प्रागेवोपपादिता। एवं च 'मद्भक्ता यान्ति मामपि' (गी. ७-२३) 'तस्मात्सर्वेषु कालेषु मामनुस्मर—मामेवैष्यस्यसंशयम्' (गी. ८-७) 'अनन्यचेतास्सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः' (गी. ८-२४) 'पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' (गी. ८-२२) 'योगी परं स्थानमुपैति चाद्यम्' (गी. ८-२८) 'अनन्याश्चिन्तयन्तो मां—योगक्षेमं वहाम्यहम्' (गी. ९-२२) 'यान्ति मद्याजिनोऽपि माम्' (गी. ९-२४) 'मन्मना भव मद्भक्तः— मामेवैष्यस्यसंशयम्' (गी. ९ २४) 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं त येन मामुपयान्ति ते' (गी. उ. १०-१०) 'भक्त्या त्वनन्यया शक्यः—ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च' (गी. ११-५४) 'मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः—यस्स मामेति' (गी. ११-५५)

अनन्येनैव योगेन मां ध्यायन्त उपासते। तेषामहं समुद्धर्ता' (गी. १२-६)

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।'

(गी. १४-३)

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते।'

(गी. १४-२६)

'भक्त्या मामभिजानाति—ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्।' (गी. १८-५५) 'मन्मना भव मद्भक्तो--मामेवैष्यसि' (गी. १८ ६८) इत्यादौ ध्यानस्य तस्यैव समाध्यवस्थापन्नस्य भक्तिरूपस्य

## भावप्रकाशः

ज्ञानस्य प्राप्तिहेतुत्वादिप्रतिपादनमुखेन 'यमेवैष वृणुते तेन लभ्यः' (क. उ. १-२ २३) (मुण्ड. ३-२-३) इतिश्रुत्यर्थ एव गीतायां विशदीकृत । तत्र 'चतुर्विधा भजन्ते मां' गी. ७-१९)इत्यत्र निर्दिष्ट एव ज्ञानी 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' (गी. ७-१७) इत्यत्रोक्तः । अत्र ज्ञानिन एव भक्तत्वोक्तया भक्तिर्ज्ञानरूपैवेति प्रतीयते । अत्र ज्ञानीतरभक्तानां भगवद्व्यतिरिक्तफले भगवति च भक्तिः । ज्ञानिनस्तु भगवत एव फलत्वेन नोभयोर्भक्तिः, अपि तु भगवत्येकस्मिन्नेवेत्येकभक्तिशब्दार्थ । एतेनात्र परसंमताद्वैतज्ञानाविवक्षा न संभवतीति बोधितम् । ज्ञानीत्यत्र ज्ञानस्यैव निरतिशयप्रीतिरूपत्वेन भक्तित्वमाह—प्रियो हीति ॥ ज्ञानिनोऽत्यर्थप्रीतिविषयत्वं भगवतः प्रियो हीत्यत्रोक्तम् । भगवद्विषयकज्ञानवतोऽत्यर्थप्रीतिविषयत्वे भगवत्युक्ते ज्ञानप्रीत्योरेककालिकत्वप्रतीत्या ज्ञानस्यैव प्रीतिरूपताप्रतिपादने वाक्यतात्पर्यम् । अत्यर्थशब्देनेतरभक्तयपेक्षया विशेषः प्रतिपाद्यते । सुखरूपवस्तुन्येव प्रीतिरिति सर्वसंमतम् । सुखरूपवस्तुज्ञानजन्या प्रीतिरिति केचित् । तन्मतं निराकृत्य सुखरूपवस्तुज्ञानमेव प्रीतिरिति वेदार्थसंग्रहे स्थापितम् । भगवत आनन्दरूपत्वमपि सर्वसंमतम् । आनन्दरूपवस्तुविषयकज्ञानमेव ज्ञानिन इत्यत्र ज्ञानम्; तदेव प्रीतिरूपम् । 'प्रेमा ना प्रियता हार्दं' (नामलिङ्ग—नाट्यवर्गः) इति कोशः । प्रियता विषयतासंबन्धेन प्रीतिरेव । 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः । स्यादानन्दथुरानन्दः' (नामलिङ्गा—कालवर्गः) इति कोशादानन्दप्रीतिशब्दावेकार्थौ । अनुकूलवस्तुज्ञानमेव धर्मभूतानन्दः; ज्ञानावस्थाविशेषत्वादानन्दस्य । आनन्दस्य ज्ञानभिन्नत्वे गौरवादनुभवविरोधाच्च ।

## भावप्रकाशः

एवं च भगवतो निरतिशयानुकूलत्वेनानुकूलवस्तुविषयकं ज्ञानं प्रीतिरेवेति ज्ञानप्रेमलक्षणभक्तिद्वयकल्पकानामत्र प्रेमभिन्ननिर्विशेषज्ञान-लक्षणभक्तिविवक्षाऽनादरणीया ।

'ज्ञानी त्वात्मैव' (गी. ७-१८) इत्यत्र 'ज्ञानी आत्मैव' न मत्तो भिन्नः, किं त्वहमेव स इति मम मतं निश्चयः' (गी. वि. ७-१८) इति गीताविवरणे मधुसूदनसरस्वत्युक्तार्थस्तु न गीताचार्य-संमतः; 'कतम आत्मा योऽयं विज्ञानमयः' (बृ. उ. ४-३-६) 'आत्मैवास्य ज्योतिः' (बृ. उ. ६-१-६) इत्यत्रात्मशब्दस्य परमतेऽपि जीवपरत्वाङ्गीकारादत्राप्यात्मशब्दस्य जीवपरत्वात् । आत्म-शब्दस्य धारकत्वसंततधर्मभूतज्ञानवांश्चेत्यर्थः (पु. २५५-२५७) प्रागेवोक्तः ।

भक्तिरसायने गीतावचनसमानार्थकत्वेन मधुसूदनसरस्वतीभिः (पु. ४०) उदाहृतेषु—

'ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥
ज्ञानविज्ञानसंसिद्धाः (पन्नाः) पदं श्रेष्ठं विदुर्मम ।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥

(श्रीभाग. ११, १९, २-३)

त्वय्युद्भवाश्रयति यस्त्रिविधो विकारः
मायान्तरापतति नाद्यपवर्गयोर्यत् ।
जन्मादयोऽस्य यदमी तव तस्य किं स्यु-
राद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥'

(श्रीभाग. ११-१९-७)

भावप्रकाशः

इति वचनेषु "भगवद्व्यतिरिक्तं सर्वं मायामयत्वात्स्वप्नवन्मायिकं तुच्छं दुःखरूपं च हेयम्, भगवान् प्रत्यगभिन्नपरमात्मैव सत्यः स्वप्रकाशपरमानन्दरूपो नित्यो विभुश्चोपादेय इति स्वरूपं ज्ञानम्" (भक्तिरसायने ४० पुटं) इति तदुक्तार्थस्तु न विवक्षितः। यथा जगतो मिथ्यात्वं नात्र विवक्षितं तथा श्रुतप्रकाशिकाकारसुदर्शनसूरिविरचितशुकपक्षीये स्पष्टम्।

'ज्ञानिनस्त्वहमेवेष्टः' (श्रीभाग. ११-१९-२) इत्यत्र ज्ञानिनो भगवद्व्यतिरिक्तफलेच्छाविरहो भगवतः फलत्वं फलप्रदत्वं च भगवद्भिन्नस्वर्गमोक्षादौ प्रीत्यभावश्च इत्यर्थः स्फुटमुक्तः। 'ज्ञानविज्ञान' (श्रीभाग. ११-१९-३) इत्यादावुक्तफलस्य श्रैष्ठ्यमेवोक्तम्। 'ज्ञानिनस्त्वहमेवेष्टः' (श्रीभाग. ११-१९-२) इत्यादिना 'आस्थितस्स हि युक्तात्मा' (गी. ७-१८) इति गीतोक्तार्थ एवोक्तो भवति। अत्र भगवद्व्यतिरिक्तफलस्य निकर्षो भगवद्रूपफलस्योत्कर्षश्चोक्तो न तु भगवद्व्यतिरिक्तफलस्य मिथ्यात्वम्। 'ज्ञानेनासौ बिभर्ति मां' (श्रीभाग. ११-१९-३) इत्यनेन 'ज्ञानी त्वात्मैव मे' (गी. ७-१८) इत्यात्मन्-शब्दस्य धारक एव गीतार्थो विशदीकृतः।

'आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम्' (गी. ७-१७) इति भगवदेकप्राप्तृत्वकथनेन 'ज्ञानी त्वात्मैव' (गी. ७-१८) इत्यत्र आप्नोतीत्यात्मा इत्यर्थो विवक्षित इत्यपि प्रतीयते। अतश्च ज्ञानी त्वात्मैव' (गी. ७-१८) इत्यत्र 'यच्चाप्नोति' (लिङ्गपुराणम्) इत्यादिस्मृत्युक्तार्थत्रयपर एव जीववाच्यात्मन्शब्द इति सिद्धम्।

परमते 'ज्ञानी त्वात्मैव' (गी. ७-१८) इत्यत्र जीवब्रह्माभेद-विवक्षणं जीवस्योत्तरार्धोक्तभगवदेकप्राप्तृत्वस्य स्वरसत उपादानासंभवेन

### भावप्रकाशः

मधुसूदनसरस्वत्यस्तु भक्तिरसायने—"कर्मयोगोऽष्टाङ्गयोगो ज्ञानयोगो भक्तियोग इति चत्वारः पुमर्थत्वेन प्रसिद्धा योगाः ।

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्र(कर्हि)चित् ॥

(श्रीभागवतं ११-२०-६)

इति भगवद्वचनेन अष्टाङ्गयोगोऽपि ज्ञानयोगान्तर्गतो द्रष्टव्यः ।

मन एकत्र संयुञ्ज्याज्जितश्वासो जिताशनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥

(श्रीभाग. ११-२०-९)

इत्यादिना तस्यापि व्युत्पादनात् ।" (भक्तिरसायने २ पुटं) "शास्त्रविहितो वर्णाश्रमधर्मरूपः कर्मयोगोऽन्तःकरणशुद्धिसाधनत्वेन तावत्पर्यन्तमनुष्ठेयः—

तावत्कर्माणि कुर्वीत न निरीक्षेत (निर्विद्येत) यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥

(श्रीभाग. ११-२०-९)

इति भगवद्वचनात्"। "ततश्चाद्रुतचित्तस्य निर्वेदपूर्वकं तत्त्वज्ञानम् । द्रुतचित्तस्य तु भगवत्कथाश्रवणादिभागवतधर्मश्रद्धापूर्विका भक्तिरित्यवधित्वेन द्वयमप्युपात्तम् । ततोऽन्तःकरणशुद्ध्याऽष्टाङ्गमनुष्ठाय तैलधारावदविच्छिन्नभगवदेकाकारप्रत्ययपरंपरात्मकैकाग्रतायोग्यं मनस्संपादयेत् ।

यदारम्भेषु निर्विण्णो विरक्तस्संयतेन्द्रियः ।
अभ्यासेनात्मनो योगे (गी) धारयेदचलं मनः ॥

(श्रीभाग. ११-२०-१८)

धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।

**भावप्रकाशः**

अतन्द्रितोऽ(उ) निरोधेन मार्गेणात्मवशं नयेत् ॥

(श्रीभाग. ११, २०, १८-१९)

इत्यादिभगवद्वचनात् । तस्मिंश्च सति 'अमानित्वमदम्भित्वं' इत्याद्यारभ्य 'एतज्ज्ञानमिति प्रोक्तं' (गी. ११-७-११) इत्यन्तेन ग्रन्थेन भगवद्गीतोपनिषदुपदिष्टो ज्ञानयोगः प्रतिष्ठितो भवति देहयोगाद्यनासङ्गात्मकः ।

सांख्येन सर्वभावेन (वानां) प्रतिलोमानुलोमतः ।
भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥

(श्रीभाग. ११, २०, २२)

निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ।
मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥

(श्रीभाग. ११, २०, २३)

यमादिभिर्योगपथैरान्वीक्षक्या च विद्यया ।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥

(श्रीभाग. ११, २०, २४)

इत्यादिभगवद्वचनात् । अत्र 'मनो यावत्प्रसीदति' इति भक्तियोग एव ज्ञानावधित्वेनोक्तः; भक्तियोगं विना मनसः सम्यक्प्रसादनाभावात् । 'मनस्त्यजति दौरात्म्यं' इत्यत्रापि स एव योगः । 'ममार्चोपासनाभिर्वा' इति—'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।' इति ज्ञानयोगान्तर्गतया साधनभक्त्येत्यर्थः । ततश्च—

प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ।
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥

(श्रीभाग. ११, २०, २९)

### भावप्रकाशः

इत्यादिभगवद्वचनानुसारिण्या साधनभक्तिनिष्ठया निखिलमपि प्रमाणं भगवत्येव प्रतिष्ठापयतः सकलविषयविमुखमनसो महाभागस्य कस्यचिद्भगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवणजनितद्रुतिरूपायां मनोवृत्तौ सर्वसाधनफलभूतायां गृहीतभगवदाकारायां विभावानुभावव्यभिचारि-संयोगेन व्यक्तीभवद्भगवदाकारतारूपरसाख्यः स्थायिभावः परमानन्द-साक्षात्कारात्मकः प्रादुर्भवति । स एव भक्तियोग इति तं परमं निरतिशयं पुरुषार्थं वदन्ति रसज्ञाः ।

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यत(यो)श्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥
न किंचित्साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥

(श्रीभाग. ११, २०, ३१-३४)

इत्यादिवचनानि तदनुभवितारश्च " (भक्तिरसायने. २–४ पुटं)

" समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्, तस्य मोक्षसमीपवर्तितया मोक्षान्तर्भूतत्वे योगजधर्मजन्यतया धर्मान्तर्भूतत्वे वा भक्तिसुखस्यापि भागवतधर्मजन्यतया धर्मान्तर्भावस्य श्रद्धाजडान् प्रति वक्तुं शक्यत्वात् । भक्तस्य संसारमोक्षस्यावश्य-कत्वान्मोक्षान्तर्गतो वा भक्तियोगः । तस्माद्भक्तियोगः पुरुषार्थः पर-मानन्दरूपत्वादिति निर्विवादम् " (भक्तिरसायने ६ पुटं).

भावप्रकाशः

"अत एव यस्यैकद्रुते चित्ते भगवदाकारता प्रविष्टा सर्वदा तद्भानात्कृतकृत्यो भवतीत्युक्तम्—

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥

(श्रीभाग. ११-२-४५)

इति सर्वभूताग्रहणसमयेऽपि द्रवावस्थाप्रविष्टभगवदाकारताप्रविष्टाया एव प्रकाशनाज्जतुरङ्गवत्सर्वभूतेषु भगवद्भानोपपत्तिः" (भक्तिरसायने १६, १७ पुटं)

"अत एव ब्रह्मविदेवैतादृश इत्यपास्तम् । तस्य ब्रह्मविदो द्रवावस्थाया अनपेक्षितत्वेन उत्तम–मध्यम–प्राकृतभक्तेष्वगणनीयत्वात् । अत्र तु द्रवावस्थापरिपुष्टौ सर्वभूतेषु यः पश्येदित्यवस्थायां भागवतोत्तमः" (भक्तिरसायने, १७ पुटं)

"द्रवावस्थाप्रविष्टभगवत्स्वरूपभानस्य त्रिविधत्वादुत्तमभागवतोऽपि त्रिविधः । तत्राद्यं प्रपञ्चसत्यत्वभानसहितम् । यथा—

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेश्शरीरं यत्किंच भूतं प्रणमेदनन्यः ॥

(श्रीभाग. ११-२-४१)

इत्यादि । अनेन प्राकृतो भागवतोत्तमः । द्वितीयं प्रपञ्चमिथ्यात्वभानसहितम् । यथा—

तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवाव-

## भावप्रकाशः

अनेन मध्यमो भागवतोत्तमः। तृतीयं प्रकारद्वयेनापि प्रपञ्च-भानरहितम्। यथा—

ध्यायतश्चरणाम्भोजं भावनिर्वृत्तचेतसा।
औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः॥

(श्रीभाग. १-६-१७)

प्रेमातिभारनिर्भिन्नपुलकाङ्को(ङ्गो)ऽतिनिर्वृतः।
आनन्दसंप्लवे लीनो नापश्यमुभयं मुने"॥

(श्रीभाग. १-६-१८)

(भक्तिरसायने १८-१९ पुटं) इति।

"स्वरूपसाधनफलाधिकारिवैलक्षण्याद्भक्तिब्रह्मविद्ययोः। द्रवीभावपूर्विका हि मनसो भगवदाकारता सविकल्पकवृत्तिरूपा भक्तिः। द्रवीभावानपेताद्वितीयात्ममात्रगोचरा निर्विकल्पकमनोवृत्तिर्ब्रह्मविद्या। भगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवणं भक्तिसाधनम्। तत्त्वमस्यादिवेदान्तमहावाक्यं ब्रह्मविद्यासाधनम्। भगवद्विषयकप्रेमप्रकर्षो भक्तिफलम्। सर्वानर्थमूलाज्ञाननिवृत्तिर्ब्रह्मविद्याफलम्। प्राणिमात्रस्य भक्तावधिकारः। ब्रह्मविद्यायां तु साधनचतुष्टयसंपन्नस्य परमहंसपरिव्राजकस्याधिकारः" (भक्तिरसा. ११-१२ पुटं) इत्युपक्रम्य—

"नन्वेवं सति भक्तिसुखाद्वैराग्यासंभवेन मुमुक्षुत्वासंभवात्तदधिकारिकचतुर्लक्षणमीमांसारम्भो न संभवतीति चेत्सत्यम्। भक्तिसुखासक्तान् प्रति तस्यानारम्भात्, भजनीयस्वरूपनिर्णयार्थं भक्तानामपि तद्विचारस्यावश्यकत्वाच्च। भक्तिसुखाद्वैराग्यं न स्यादिति त्विष्टमेव।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥

(श्रीभाग. १-७-१०)

भावप्रकाशः

इत्यादिना जीवन्मुक्तानामपि भगवद्भक्तिप्रतिपादनात् ।"

(भक्तिरसा. १३-१४)

"द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥

भगवद्धर्मश्च भगवद्गुणश्रवणम्" (भक्तिरसा.–१४ पु.)

"वृत्तिर्भगवदाकारतेत्यर्थः । तदाकारतैव हि सर्वत्र वृत्तिशब्दार्थोऽस्माकं दर्शने । अतः सा भक्तिरित्याभिधीयते शास्त्रविद्भिः । तथा च शास्त्रम्–

मद्गुणश्रुतिमात्रेण सर्वभूतगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ।

(श्रीभाग. ३-२९-११)

लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥

(श्रीभाग. ३-२९-१२)

इति । अत्राविच्छिन्नेति धारावाहिकता दर्शिता । यथा गङ्गाम्भस इति दृष्टान्तेन दार्ष्टान्तिकेऽपि मनसि द्रवावस्था । मयि सर्वगुहाशये मनोवृत्तिरिति सर्वेशाकारता" (भक्तिरसा.—१५ पु.)

"भजनमन्तःकरणस्य भगवदाकारतारूपं भक्तिरिति भावव्युत्पत्त्या भक्तिशब्देन फलमभिधीयते, तस्य च निरातिशयपुमर्थत्वात् । भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति करणव्युत्पत्त्या भक्तिशब्देन श्रवणकीर्तनादिसाधनमभिधीयते" (भक्तिरसा.–९ पु.)

"एतच्च स्पष्टीकृतं प्रबुद्धेन—

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥

भावप्रकाशः

इति। अत्र करणव्युत्पत्त्या प्रथमभक्तिशब्दो भागवतधर्मेषु प्रयुक्तः। द्वितीयस्तु भावव्युत्पत्त्या फले।

इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया।
नारायणपरो मायामञ्जस्तरति दुस्तराम्॥

(श्रीभाग. ११-३-३३ (३७)

इत्युपसंहारे प्रथमभक्तिपदस्थाने भागवतधर्मशब्दप्रयोगात्।" (भक्तिरसा ९-१० पु.)

"भागवतधर्मजनिताया भक्तेरपि यदि फलान्तरसाधनत्वमभविष्यत्तदा—

'क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः॥

(श्रीभाग. ११-३-३२ (३६)

इति परं पुरुषार्थं प्राप्य निर्वृतास्तूष्णीं भवन्तीति कृतार्थतां नावक्ष्यत्। अपि तु तदनन्तरमनुष्ठेयान्तरमपेक्षेत, न च निर्दिशति। तस्मात्साधनफलभेदेन भक्तिद्वैविध्योपपत्तिः" (भक्तिरसा. १० पु.)

"वासुदेवे भगवति भक्तियोगः प्रयोजितः।
जनयत्याशु वैराग्यं ज्ञानं यत्तद(च यद)हैतुकम्॥"

(श्रीभाग. १-२-७)

(भक्तिरसा—६८ पु.) इति "अत्र ज्ञानं—

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया॥

(श्रीभाग. १०-१४-५५)

भावप्रकाशः

इत्याद्युक्तं शुद्धे त्वंपदलक्ष्ये तत्पदलक्ष्याभेदज्ञानम् ।" (भक्तिरसा. ६८ पु.)

" श्रेयःसृ(स्रु)तिं भक्तिमुदस्य ते विभो

क्लिश्यन्ति ये केवलबोधलब्धये ।

तेषामसौ क्लेशल एव(क्लेशलवोऽव) शिष्यते

नान्यद्यथा स्थूलतुषावघातिनाम् ॥ (श्रीभाग. १०-१४-४)

इत्यादि" (भक्तिरसा. ६९ पु.)

"केचित्केवलया भक्त्या वासुदेवपरायणाः ।

अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥

(श्रीभाग. ६-१-१५)

इत्यत्र साधनभक्तिः" (भक्तिरसा. ९ पु.)

" न ह्यतोऽन्यश्शिवः पन्था विशतस्संसृताविह ।

वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥

(श्रीभाग. २-२-३३)

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।

नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ (श्रीभाग. १-२-८)

एतावानेव लोकेऽस्मिन् पुंसां निश्श्रेयसोदयः ।

तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥

(श्रीभाग. ३-२५-४४)

ध्रुवः—

या निर्वृतिस्तनुभृतां तव पादपद्म-

ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।

सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भू-

त्किन्त्वन्तकासिलुलितात्पततां विमानात् ॥

(श्रीभाग. ४-९-१०)

**भावप्रकाशः**

इत्यादौ पुरुषार्थभक्तिः इति साधनत्ववचनानां फलत्ववचनानां च विषयविभागेन सर्वत्राविरोधः।" (भक्तिरसा. ७, ८ पु.)

"एतादृशमोक्षपर्यन्तसकलफलनिरपेक्षस्वरूपे परवैराग्ये सति फलान्तरे प्रेम्णोऽनुदयात्परमानन्दरूपे परमात्मन्येव प्रेम परां काष्ठामासेहति। यथा वृत्रस्य—

अजातपक्षा इव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधार्ताः।
प्रियं प्रियेव व्युषितं विषण्णा
मनोऽरविन्दाक्ष दिदृक्षते त्वाम्॥

(श्रीभाग. ६-११-२६)

इति। अत एव ज्ञानं विना परवैराग्याभावात्तदृते च भगवत्प्रेमपराकाष्ठाभावात्तदर्थं ज्ञानवैराग्ये दृढीकर्तव्ये। तदुक्तं—

असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन।
योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे॥

(श्रीभाग. ३-२५-२७)

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः।
क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम्॥

(श्रीभाग. ३-२५-४३)

इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः।
भवन्ति वै भागवतस्य राजन् ततः परां शान्तिमुपैति साक्षात्॥

(श्रीभाग. ११-२-४३)

इति भागवतस्य भगवद्धर्मानुष्ठातुः पुण्यगाथाश्रवणकर्तुः प्रथमं भगवत्प्रबोधः, ततः परं वैराग्यम्, ततः प्रेमलक्षणा भक्तिरित्यर्थः।

### भावप्रकाशः

एतच्च दर्शितमुद्धवाय श्रीभगवता 'ज्ञानिनस्त्वहमेवेष्टः' (श्रीभाग. ११-१९-२) इत्यादिवचनानि तत्समानार्थकानि 'चतुर्विधा भजन्ते माम्' (गी. ७-१६) " (भक्तिरसायने ३९-४४ पु.) इत्यादिवचनानि च उदाहृत्य—

"प्रथमं महतां सेवा तद्दयापात्रता ततः ।
श्रद्धाऽथ तेषां धर्मेषु ततो हरिगुणश्रुतिः ॥ ३२ ॥
ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः ।
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः ॥ ३३ ॥
भगवद्धर्मनिष्ठाऽतः स्वस्मिंस्तद्गुणशालिता ।
प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमिकाः ॥ ३४ ॥"

(भक्तिरसा. ४४-४५ पु.)

इति भूमिकाभेदानभिधाय—

"कृष्णमेनमवेहि (श्रीभाग. १०-१४-५५) इत्यत्र जीवब्रह्माभेदज्ञानं विवक्षितम्" (भक्तिरसा. ६८ पु). इत्युक्त्वा "एतादृशतत्त्वज्ञाने सति वैराग्यदार्ढ्याद्भगवति प्रेम्णो वृद्धिर्भवतीति सप्तमी भूमिका । यथा—

न्यस्तक्रीडनको बालो जडवत्तन्मनस्तया ।
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥

(श्रीभाग. ७-४-३७)

'क्वचिद्रुदति' 'क्वचिद्धसति'
नदति क्वचिदुत्कण्ठो
विलज्जो नृत्यति क्वचित ।
क्वचिदुत्पुलकस्तूष्णीमास्ते (श्रीभाग. ७-४-४०)

इत्यादि"। (भक्तिरसा. ६९-७० पु.)

### भावप्रकाशः

"एतादृशस्य सप्तमीपर्यन्त एव साधनाभ्यासः। अतः परं तु भूमिकाचतुष्टयमयत्नसाध्यम्। तस्य प्रेमास्पदीभूतस्य भगवतस्साक्षात्कार-हेतुकः प्रेमातिशयहेतुकोऽष्टमी भूमिका। तदुक्तं—नैकात्मतां मे स्पृहयन्ति केचित् (श्रीभाग. ३-२५-३४) इत्यादि। अतो भगवद्धर्मनिष्ठा—

यज्ञेशाच्युत गोविन्द माधवानन्त केशव।
कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम्॥

(वि. पु. २-१३-९)

नान्यज्जगाद मैत्रेय किञ्चित्स्वप्नान्तरेष्वपि।
एतत्पठन् तदर्थं च विना नान्यमचिन्तयत्॥

(वि. पु. २-१३-१०)

समित्पुष्पकुशादानं चक्रे देवक्रियाकृते।
नान्यानि चक्रे कर्माणि निस्सङ्गो योगतापसः॥

(वि. पु. २-१३-११)

त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः।
उच्छिष्टभोजिनो दासास्तव मायां जयेम हि॥

(श्रीभाग. ११-६-४६)

भगवद्धर्मानिष्ठा प्रयत्नपूर्विका साधनं, स्वतस्सिद्धा तु भगवद्धर्मनिष्ठा भवति फलभूता नवमी भूमिका। स्वस्मिंस्तद्गुणशालिता यथा—

न कर्हिचिन्मत्पराश्शान्तरूपे
नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः।
एषामहं प्रिय आत्मा सुतश्च
सखा गुरुस्सुहृदो दैवमिष्टम्॥ (श्रीभाग. ३-२५-३८)

भावप्रकाशः

इति एवमविनश्वरभगवत्तुल्यगुणाविर्भावो भवति दशमी भूमिका। प्रेम्णोऽथ परमा काष्ठा प्राणपरित्यागावधि विरहासहिष्णुतारूपा ।

यथा—

गोपीनां परमानन्द आसीद्गोविन्ददर्शने ।
क्षणं युगशतमिव यासां येन विनाऽभवत् ॥

(श्रीभाग. १०-१९-१६)

इत्यादि" (भक्तिरसा. ७१-७५) इत्युपसंहरन्ति ॥

गीताविवरणे च—

'कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात् ।
तद्रूपाष्टादशाध्यायैर्गीता काण्डत्रयात्मिका ॥ ४ ॥
एकमेकेन षट्केन काण्डमत्रोपलक्षयेत् ।
कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः' ॥ ५ ॥
'भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्तिता' ॥ ६ ॥
'तत्र तु प्रथमे काण्डे कर्मतत्त्यागवर्त्मना ।
त्वंपदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते ॥ ८ ॥
द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना ।
भगवान् परमानन्दस्तत्पदार्थोऽवधार्यते ॥ ९ ॥
तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम्' ॥ १० ॥
'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ३० ॥
इत्यादिश्रुतिमानेन कायेन मनसा गिरा ।

भावप्रकाशः

सर्वावस्थासु भगवद्भक्तिरत्रोपयुज्यते ॥ ३१ ॥
पूर्वभूमौ कृता भक्तिरुत्तरां भूमिमानयेत् ।
अन्यथा विघ्नबाहुल्यात्फलसिद्धिस्सुदुर्लभा ' ॥ ३२ ॥
' एवं प्राग्भूमिसिद्धावप्युत्तरोत्तरभूमये ।
विधेया भगवद्भक्तिस्तां विना सा न सिध्यति ॥ ३६ ॥
जीवन्मुक्तिदशायां तु न भक्तेः फलकल्पना ।
अद्वेष्टृत्वादिवत्तेषां स्वभावो भजनं हरेः ॥ ३७ ॥
आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ ३८ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
इत्यादिवचनात्प्रेमभक्तोऽयं मुख्य उच्यते ॥ ३९ ॥
एतत्सर्वं भगवता गीताशास्त्रे प्रकाशितम् ' ॥

(गी. मधु. टीका.)

इति । तृतीयेऽध्याये ' नैव तस्य ' (गी. ३-१८) इति श्लोकविवरणे " एतादृशो ब्रह्मविद्भूमिकासप्तकभेदेन निरूपितो वसिष्ठेन " (गी. मधु. टीका.) ' तत्र नित्यानित्यवस्तुविवेकादिपुरस्सरा फलपर्यवसायिनी मोक्षेच्छा प्रथमा । ततो गुरुमुपसृत्य वेदान्तवाक्यविचारः श्रवणमननात्मको द्वितीया । ततो निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यत्वं तृतीया । एतद्भूमिकात्रयं साधनरूपं जाग्रदवस्थोच्यते योगिभिः, भेदेन जगतो भानात् । ' (गी. मधु. टीका.) ' ततो वेदान्तवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्कारश्चतुर्थी भूमिका फलरूपा सत्त्वापत्तिः स्वप्नावस्थोच्यते, सर्वस्यापि जगतो मिथ्यात्वेन स्फुरणात् । ' (गी. मधु. टीका.) । ' सोऽयं चतुर्थभूमिं प्राप्तो योगी

भावप्रकाशः

ब्रह्मविदित्युच्यते। पञ्चमीषष्ठीसप्तम्यस्तु भूमिका जीवन्मुक्तेरवान्तरभेदाः। तत्र सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि या निर्विकल्पकसमाध्यवस्था साऽससक्तिरिति सुषुप्तिरिति चोच्यते ततः स्वयमेव व्युत्थानात्। सोऽयं योगी ब्रह्मविद्वरः। ततस्तदभ्यासपरिपाकेन चिरकालावस्थायिनी सा पदार्थाभावनीति गाढसुषुप्तिरिति चोच्यते' ततस्स्वयमनुत्थितस्य योगिनः परप्रयत्नेनैव व्युत्थानात्, सोऽयं ब्रह्मविद्वरीयान्'। (गी. मधु. टीका.) 'यस्यास्तु समाध्यवस्थाया न स्वतो वा परतो व्युत्थितो भवति सर्वथा भेददर्शनाभावात्, किं तु सर्वदा तन्मय एव स्वप्रयत्नमन्तरेणैव परमेश्वरप्रेरितप्राणवायुवशादन्यैर्निर्वाह्यमानदैहिकव्यवहारः परिपूर्णपरमानन्दघन एव सर्वतस्तिष्ठति सा सप्तमी तुरीयावस्था। तां प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते।' (गी. मधु. टीका.) इति।

सप्तमेऽध्याये—'मय्यासक्तमनाः' (गी ७-१) इत्यत्र 'ध्येयब्रह्मप्रतिपादनप्रधानेन मध्यमषट्केन तत्पदार्थो व्याख्यातव्यः।'

(गी. मधु. टीका. ७-१)

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते॥

(गी. ७-२)

इत्यत्र 'विचारपरिपाकनिष्पन्नत्वाच्च तदेव विज्ञानम्। तेन विज्ञानेन सहितमिदमपरोक्षमेव ज्ञानं शास्त्रजन्यम्' (गी. मधु. टीका.) 'यज्ज्ञानं नित्यचैतन्यरूपं ज्ञात्वा वेदान्तजन्यमनोवृत्तिविषयीकृत्य इह व्यवहारभूमौ भूयः पुनरपि अन्यत् किंचिदपि ज्ञातव्यं नावशिष्यते, सर्वाधिष्ठानसन्मात्रज्ञानेन कल्पितानां सर्वेषां बाधे सन्मात्रपरिशेषात्।'

(गी. मधु. टीका.)

### भावप्रकाशः

'कश्चिन्मां वेत्ति तत्त्वतः' (गी. ७-३) इत्यत्र "कश्चित् एकः श्रवणमनननिदिध्यासनपरिपाकान्ते मां ईश्वरं वेत्ति साक्षात्करोति तत्त्वतः प्रत्यगभेदेन" (गी. मधु. टीका.)

'मत्तः परतरं नान्यत्' (गी. ७-७) इत्यत्र "मत्तः—परमार्थसन्मात्रात्, परतरं परमार्थसत्यं अन्यत् किंचिदपि नास्ति" "व्यवहारदृष्ट्या तु मयि सद्रूपे स्फुरणरूपे च सर्वमिदं जडजातं प्रोतं ग्रथितम्, मत्सत्तया सदिव मत्स्फुरणेन स्फुरदिव" "अथवा सूत्रे तैजसात्मनि हिरण्यगर्भे स्वप्नदृशि स्वप्नप्रोता मणिगणा इवेति सर्वांशे दृष्टान्तो व्याख्येयः" (गी. मधु. टीका)

'ये चैव सात्विकाः—ते मयि' (गी. ७-१२) इत्यत्र "ते तु भावा मयि रज्ज्वामिव सर्पादयः कल्पिता मदधीनसत्तास्फूर्तिकाः" (गी. मधु. टीका.)

'मामेभ्यः परमव्ययम्' (गी. ७-१३) इत्यत्र "येषां कल्पनाधिष्ठानमत्यन्तविलक्षणमव्ययम्" (गी. मधु. टीका.)

'दैवी ह्येषा—मामेव ये प्रपद्यन्ते' (गी. ७-१४) इत्यत्र प्रथमं मामेवेति निर्विशेषपरतया व्याख्याय "प्रपश्यन्तीति वक्तव्ये प्रपद्यन्त इत्युक्तेर्यं मदेकशरणास्सन्तो मामेव भगवन्तमनुचिन्तयन्तो दिवसानातिवाहयन्ति माया तेभ्योऽपसरति वारविलासिनीव कोपनेभ्यस्तपोधनेभ्य इत्यभिप्रेतं भगवतः" (गी. मधु. टीका.)

'चतुर्विधा भजन्ते मां' (गी. ७-२६) इत्यत्र "निष्कामश्चतुर्थ इदानीमुच्यते ज्ञानी च। ज्ञानं भगवत्तत्त्वसाक्षात्कारः, तेन नित्ययुक्तः ज्ञानी तीर्णमायः, चकारो यस्य कस्यापि निष्कामप्रेमभक्तस्य ज्ञानिन्यन्तर्भावार्थः, यथा प्रह्लादो यथा पृथुः" (गी. मधु. टीका)

'तेषां ज्ञानी' (गी. ७-१७) इत्यत्र "ज्ञानी तत्त्वज्ञानवान् निवृत्तसर्वकामः विशिष्यते सर्वोत्कृष्ट इत्यर्थः। यतो नित्ययुक्तः भगवति

भावप्रकाशः

प्रत्यगभिन्ने सदा समाहितचेताः विक्षेपकाभावात् । अत एव एकभक्तिः एकस्मिन् भगवत्येव भक्तिरनुरक्तिर्यस्य सः " (गी. मधु. टीका.)

'उदाराः' (गी. ७-१८) इत्यत्र "तत्र सकामानां त्रयाणां काम्यमानमपि प्रियं अहमपि प्रियः, ज्ञानिनस्तु प्रियान्तरशून्यस्याहमेव निरतिशयप्रीतिविषयोऽतस्सोऽपि मम निरतिशयप्रीतिविषय इति विशेषः । अन्यथा हि मम कृतज्ञता न स्यात् । कृतघ्नता च स्यात् । अत एवात्यर्थमिति विशेषणमुक्तं प्राक्" "मामात्मत्वेन ज्ञानवान् ज्ञानी आत्मैव न मत्तो भिन्नः किं त्वहमेव स इति मम मतं निश्चयः, तुशब्दः सकामभेददर्शित्रितयापेक्षया निष्कामत्वभेदादर्शित्वविशेषद्योतनार्थः" (गी. मधु. टीका)

'बहूनां जन्मनामन्ते' (गी. ७-१९) इत्यत्र "वासुदेवस्सर्वमिति ज्ञानवान् सन् मां निरुपाधिप्रेमास्पदं प्रपद्यते सर्वदा समस्तप्रेमविषयत्वेन भजते सकलमहमिदं च वासुदेव इति दृष्ट्या सर्वप्रेम्णां मय्येव पर्यवसायित्वात्, अतस्स एवं ज्ञानपूर्वकमद्भक्तिमान् महात्मा अत्यन्तशुद्धान्तःकरणत्वाज्जीवन्मुक्तस्सर्वोत्कृष्टः । न तत्समोऽन्योऽस्ति, अधिकस्तु नास्त्येव, अतस्सुदुर्लभः मनुष्याणां सहस्रेषु दुःखेनापि लब्धुं न शक्यः । अतस्स निरतिशयमत्प्रीतिविषय इति युक्तमेवेत्यर्थः" (गी. मधु. टी.) इति च कथयन्ति ।

अत्रायमाशयो भगवद्यामुनमुन्याद्यनुयायिनामाचार्यपादानाम् । तथाहि—श्रीयामुनमुनिभिः—

स्वधर्मे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये ।
ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः ॥
(गीतार्थसंग्रहः ३ श्लो.)

**भावप्रकाशः**

'भक्तियोगः परैकान्तप्रीत्या ध्यानादिषु स्थितिः'।
(गी. सं. २४ श्लो.)

'ज्ञानी तु परमैकान्ती . . . . .
(गीतार्थसंग्रहः २९ श्लो.)

इत्युपक्रम्य—

'निजकर्मादि भक्त्यन्तं कुर्यात्प्रीत्यैव कारितः' (गी. सं. ३१ श्लो.)

'एकान्तात्यन्तदास्यैकरतिस्तत्पदमाप्नुयात् ।
तत्प्रधानमिदं शास्त्रमिति गीतार्थसंग्रहः' ॥
(गीतार्थसंग्रहः ३२ श्लो.)

इति गीतार्थश्लोक्तः। अत्र भगवच्छब्देन श्वेताश्वतरश्रुतेर्गीतामूलता व्यञ्जिता।

तत्र च पञ्चमे—

सर्वा दिश ऊर्ध्वमधश्च तिर्यक् प्रकाशयन् भ्राजते यद्वनड्वान् ।
एवं स देवो भगवान् वरेण्यो योनिस्वभावानधितिष्ठत्येकः ॥
(श्वे. उ. ५-४)

इत्यत्र भगवच्छब्दो यदुवृषभे कृष्णे प्रयुक्तः। तदर्थम्—'परास्य शक्तिः' (श्वे. उ. ६-८) इत्यादौ षष्ठे उक्तः। अन्ते 'यस्य देवे परा भक्तिः—प्रकाशन्ते महात्मनः, (श्वे. उ. ६-२३) इत्यत्र यावदर्थप्रकाशरूपभगवत्प्राप्तिपर्यन्तफलानां पर्वभेदेन भक्तेः साधनता प्रतिपादितेति गीता श्वेताश्वतरश्रुत्युपबृंहणरूपेति प्रतीयते।

एवं भगवत्प्राप्तिरूपमुक्तिं प्रस्तुत्य तद्धेतुज्ञानरूपायाः 'अथ परा यया तदक्षरमधिगम्यते' (मुण्ड. उ. १-१-५) इत्यत्रोक्तपरविद्याया ध्यानरूपाया विषयभूतं भगवच्छब्दवाच्यं

भावप्रकाशः

ज्ञानादिगुणषट्कविभूत्यादिविशिष्टं परं ब्रह्म विष्णुपुराणे यन्निर्धारितं तदेव गीतायां मुक्तिरूपतत्प्राप्तिज्ञानविषयो भगवच्छब्देन (गी. सं. ३ श्लो.) विवक्षितमिति बोधितम् ।

एवं भगवच्छब्देन 'ऋषिं प्रसूतं कपिलं' (श्वे. उ. ५-२) इति श्रुतिप्रसिद्धकपिलदेवहूतिसंवादे—

ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ।
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥

(श्रीभाग. ३-३२-३२)

इत्यत्र 'भक्तिप्रवाहयोगेन' (श्रीभाग. ३-३३-२४)

आत्मानं ब्रह्म निर्वाणं भगवन्तमवाप ह ।

(श्रीभाग. ३-३३-३०)

इत्यादौ च ज्ञानभक्त्योर्भगवद्विषयकत्वं भक्तेर्भगवत्प्राप्तिफलकत्वं च विष्णुपुराणोक्तरीत्यैव विवक्षितमिति बोधितम् । अत्र ज्ञानभक्त्योर्भगवच्छब्दार्थविषयकत्वं भक्तेश्च भगवत्प्राप्तिसाधनत्वं स्फुटतरं प्रतिपादितम् । भगवच्छब्दपर्यालोचनायां ज्ञानं सगुणविषयकं भक्तिरपि गुणादिभिरुत्कृष्टवस्तुनि निरतिशयप्रीतिरिति प्रतीयते । एतेन गुणादिभिरुत्कृष्टवस्तुज्ञानसमनन्तरं तत्रैव निरतिशयप्रीतिरुदेति। इयमेव प्रेम्णः परा काष्ठा । तदन्यस्मिन् सर्वस्मिन् फले वैराग्यमित्यपि सिद्धम् । मोक्षस्य गुणादिभिरुत्कृष्टवस्त्वनुभवरूपब्रह्मप्राप्तिस्वरूपत्वेन तदिच्छायास्सत्त्वेऽपि परवैराग्यसंभवेन प्रेम्णः परा काष्ठा सङ्गच्छत इति 'मोक्षपर्यन्तकामनाविरह एव परवैराग्यलिङ्गम्, परवैराग्यं च जीवब्रह्माभेदज्ञानेन' इत्युक्तेर्नावसरः ।

'कृष्णमेनमवेहि त्वं' (श्रीभाग. १०-१४-५५) इत्यत्रापि जीवब्रह्माभेदज्ञानविवक्षागमकं न किंचिदस्ति, किंतु 'आत्मानमखिला-

भावप्रकाशः

त्मनाम्' इति कृष्णस्य सर्वजीवान्तर्यामित्वमेवोक्तम्। एतदर्थश्च शुकपक्षीये स्पष्टः। एतेन वैराग्यमपि मोक्षपर्यन्तफलेच्छाविरहो न विवक्षितः, एतत्प्रघट्टके भक्तेर्मुक्तिं प्रति साधनतायाः पूर्वमेव निरूपणात्। 'एतावानेव लोऽकेस्मिन्' (श्रीभाग. ३-२५-४४) इत्यत्र पुरुषार्थतायाः प्रतीतत्वेऽपि तत्पूर्वश्लोके मुक्तिसाधनता स्फुटं प्रतिपादिता।

एवं 'नैकात्मतां मे स्पृहयन्ति' (श्रीभाग. ३-२५-३४) इत्येतदुत्तरं 'भक्तिरनिच्छतो गतिमण्वीं प्रयुङ्क्ते' (श्रीभाग. ३-२५-३६) इत्यत्र 'अत्र ब्रह्म समश्नुते' (बृ. उ. ४-४-७) इत्यनन्तरं 'अणुः पन्था विततः पुराणः, (बृ. उ. ४-४-८) 'शतं चैका च' (क. उ. ६-१६) इति गतिश्रुत्यनुरोधेन भक्तेरर्चिरादिगतिप्रापकत्वं प्रतिपादितम्। अतो मधुरभेषजनयेन पुरुषार्थत्वसाधनत्वे एकस्या एव भक्तेः; मुक्त्यपेक्षाविरहस्तु भक्तेः स्वादुत्व-मुक्तिकालानुवृत्तितात्पर्येण। अयमर्थः 'सालोक्यसार्ष्टि' (श्रीभाग. ३-२९-१३) इत्यत्र 'मत्सेवनं विना' इत्युक्त्या भगवत्सेवा-रूपभक्तिशून्यमुक्त्यपेक्षाविरहोक्त्या दृढीकृतः। भक्तेरर्चिरादिगतिद्वारा प्रकृतिमण्डलादूर्ध्वं परब्रह्मप्राप्तिसाधनत्वं प्रागुदाहृतायाः 'प्रोक्तेन भक्तियोगेन' (श्रीभाग. ११-२०-२९) इति वचनानिर्णीतार्थिकायाः 'अत्र ब्रह्म समश्नुते' (बृ. उ. ४-४-७) इति श्रुतेः अनन्तरमर्चिरादिगतिप्रतिपादनादेव निर्णीयते। अयमर्थोऽत्रैव 'मद्गुणश्रुतिमात्रेण' (श्रीभाग. ३-२९-११) इत्यनन्तरम्—

'येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते'

(श्रीभाग. ३-२९-१४)

## भावप्रकाशः

इत्यत्र प्रकृतिदेशातिक्रमणानन्तरं मद्भावोक्त्या निर्णीतः ।

मद्गुणश्रुतिमात्रेणेति मुक्तिफलात्यन्तिकयोगे अहैतुक्यव्यवहितेत्युक्त-विशेषणद्वयस्य—

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।

अहैतुक्यव्यवहिता ययाऽऽत्मा सुप्रसीदति ॥ (श्रीभाग. १-२-६)

इत्यत्रोपादानेन मुक्तिफलत्वमत्रापि विवक्षितमिति निश्चीयते । आत्मनोऽप्रसादोऽपि ज्ञानसंकोचरूपकालुष्यमेव । सुप्रसादो ज्ञानपूर्णविकासरूपा धर्मभूतज्ञानकालुष्यसामान्यनिवृत्तिः । भक्तिः पर्वभेदेन भिन्ना 'यस्य देवे परा भक्तिः (श्वे. उ. ६-२३) इत्युक्तदिशाऽर्थप्रकाशरूपजीवबुद्धिविकासमपि क्रमशः पूर्णं करोति । अयमर्थोऽनुपदमेव वक्ष्यते । 'वासुदेवे भगवति' (श्रीभाग. १-२-७) इति श्लोकेऽपि ज्ञानं न जीवब्रह्माभेदज्ञानम्, तद्बोधकशब्दाविरहात् । 'सर्वभूताधिवासं च' (ब्रह्मबिन्दु. उ. ३) इति श्रुतौ सर्वव्यापकत्वधारकत्वयोः 'तदस्म्यहं वासुदेवः' (ब्रह्मबिन्दु. उ. ३) इति सामानाधिकरण्यनियामकत्वप्रतिपादनेन श्रुत्युक्तवासुदेवशब्दार्थज्ञानस्य परसंमताभेदावगाहित्वासंभवात् ।

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥

(श्रीभाग. १-२-११)

इत्यत्रापि अद्वयमित्यस्य स्वभिन्नशून्यमिति नार्थः । लोकेऽद्वयादिशब्दानां क्वापि तथा प्रयोगविरहात् । अपि तु स्वसजातीयद्वितीयरहितमित्येवार्थः । 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे. उ. ६-८) इति श्रुतेः । एतच्छ्रुतेः पूर्वं परत्र च गुणादीनां प्रतिपादनेन गुणादिभिस्सम-

भावप्रकाशः

निषेधस्यैवात्र विवक्षितत्वेनात्र अद्वयमित्यनेनैतच्छ्रुत्यर्थकथनेन गुणादिभिस्स्वसजातीयद्वितीयरहितं सगुणमेव विष्णुपुराणोक्तदिशाऽत्रापि भगवच्छब्दार्थ इति सिध्यति ।

अत एव तदनन्तरम्—

तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतिगृहीतया ॥

(श्रीभाग. १-२-१२)

इत्यत्र प्रागुपपादितस्य 'एको वशी—तमात्मस्थं येऽनुपश्यन्ति' (श्वे. उ. ६-१२) इत्यादिनिर्गुणश्रुतिसमनन्तरश्रुत्यर्थनिर्णयस्यानुसारेण जीवात्मन्यन्तर्यामितया स्थितस्य परमात्मनस्साक्षात्कारोक्तिस्सङ्गच्छते । एतदनुरोधेन 'ज्ञानं यत्तदहैतुकम्' (श्रीभाग. १-२-७) इत्यत्र ज्ञानं साक्षात्काररूपमिति सिद्धम् । तदनन्तरं—

तस्मादेकेन मनसा भगवान् सात्वतां पतिः ।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यशः ॥
यदनुध्यासिना युक्ताः कर्मग्रन्थिनिबन्धनम् ।
भिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम् ॥

(श्रीभाग. १-२-१४, १५)

इत्यत्र भगवद्ध्याननिष्ठस्य भगवत्कथारतेः कर्मग्रन्थिनाशोक्त्या कथारतेर्ध्यानद्वारा मुक्तिहेतुत्वस्य स्फुटतया 'धर्मः स्वनुष्ठितः पुंसां' (श्री. भा. १-२-८) इति श्लोके कथारत्युक्तिमात्रेण भक्तेः पुरुषार्थत्वसाधनमपि घटते । एवं भक्तेः क्वचित्किञ्चित्साधनसाध्यत्वकथनमात्रेण पुरुषार्थहेतुत्वं नापैति । अत्र ध्यानोक्त्या 'मनोगतिरविच्छिन्ना' (श्रीभाग. ३-२९-११) इत्युक्तार्थः प्रकाशितः ।

भावप्रकाशः

एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।
भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥

(श्रीभाग. १-२-२०, २१)

इत्यत्र ध्यानानन्तरकालिकं समाधिरूपमेव भगवत्तत्त्वविज्ञानं जीवात्मनि निरतिशयानन्दरूपपरमात्मसाक्षात्काररूपम् । समाधौ भक्तित्वसाक्षात्काररूपत्वयोरुभयोस्सत्त्वेन तयोरुभयोः पौर्वापर्यविवक्षया मुक्तिहेतुत्वोक्तिः । अत्र मुण्डकश्रुत्यर्थानुवादेन ब्रह्मविदेव विवक्षितः ।

अतो वै कवयो नित्यं भक्तिं परमया मुदा ।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादिनीम् ॥

(श्रीभाग. १-२-२२)

इत्यत्रात्मन्शब्दस्य धर्मभूतज्ञानघटितव्यापकताश्रयजीवपरतया भक्त्या भगवत्प्राप्तिप्रतिबन्धकसर्वकर्मक्षये जीवात्मगतधर्मभूतज्ञानसङ्कोचरूपकालुष्यनिवृत्तिः 'तँ ह देवमात्मबुद्धिप्रसादं' (श्वे. उ. ६-१८) इति श्रुत्युक्ता विवक्षि ा । 'यस्य देवे—तस्यैते कथिता ह्यर्थाः प्रकाशन्ते' (श्वे. उ. ६-२३) इत्यत्र यावदर्थानामनुकूलतया प्रकाशरूपमुक्तिहेतुत्वमपि भक्तेर्विवक्षितमित्येतेन निर्धारितं भवति । अत्र तृतीये योगनिरूपणदशायां भक्तेः प्रतिपादनाद्विष्णुपुराणेऽपि प्रह्लादचरिते समाधेर्भक्तेश्च परमुक्तिहेतुत्वप्रतिपादनात्परविद्यासामान्यस्य भगवत्प्राप्तिहेतुत्वं प्रस्तुत्यान्ते योगनिरूपणावसरे समाधेर्योगस्य मुक्तिहेतुत्वप्रतिपादनाद्भक्तेर्निरतिशयपुरुषार्थसाधनीभूताया एव पुरुषार्थत्वमविरुद्धम् । एतेन 'अष्टाङ्गयोगरूपज्ञानयोगान्तर्गता साधनभक्तिः, अन्या

## भावप्रकाशः

च पुरुषार्थभक्तिः, सप्रकारकज्ञानं भक्तिः, निष्प्रकारकज्ञानं ब्रह्मविद्येति भक्तिब्रह्मविद्ययोस्साधनादिना भेद एव' इत्यादिकमपि निरवकाशम्। ब्रह्मविद्याया योगरूपत्वस्य पूर्वमेव (पु. २०४) निरूपणात्। योगरूपायां ब्रह्मविद्यायां समाधिकाले चित्तद्रुत्यभावेऽपि व्युत्थानकाले चित्तद्रुतिकार्यादिकमपेक्षितमिति नैतावन्मात्रेण भक्तिब्रह्मविद्याभेदास्सिध्यति।

षष्ठभूमिकायां स्वरूपाधिगतौ 'कृष्णमेनमवेहि' (श्रीभाग. १०-१४-५५) 'वासुदेवे भगवति' (श्रीभाग. १-२-७) इति श्लोकद्वयोक्तज्ञानरूपायां तत्त्वंपदलक्ष्यार्थाभेदज्ञानरूपताया अङ्गीकारेण तस्या भवन्मते निर्विकल्पकवृत्तितया तदनन्तरं प्रेमवृद्धिरूपसप्तमभूमिकायां चित्तद्रुतिकार्याणां त्वयाऽप्यङ्गीकारात्। तद्वद्ब्रह्मविद्यायामपि व्युत्थानकाले चित्तद्रुत्यङ्गीकारे बाधकाभावात्। मोक्षपर्यन्तसकलफलनिरपेक्षत्वरूपपरवैराग्याभावे परमानन्दरूपपरमात्मनि प्रेम्णः परा काष्ठा नोदेतीति तत्सत्त्व एवेत्युक्तिर्न प्रामाणिकी। 'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यं' (यो. सू. १-१६) इति भवदुदाहृतसूत्रे सत्त्वपुरुषान्यताख्यातावपि वैराग्यमेव परवैराग्यम्। इदमेव 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघस्समाधिः' (यो. सू. ४-२९) इति सूत्रोक्तधर्ममेघसमाधिरूपं, तदनन्तरं कैवल्यमित्येव योगसूत्रव्याख्यानेषु सिद्धान्तितम्, न तु मोक्षपर्यन्तकामनाविरहरूपं वैराग्यमिति। असंप्रज्ञातसमाधौ आत्मविषयकवृत्तेरपि निरोध इति योगसूत्रव्याख्याकारादिमतं स्थापयतां मधुसूदनसरस्वतीनामत्र योगसूत्रव्याख्यातृसिद्धान्तविरोधेन मोक्षपर्यन्तनिस्पृहत्वं परवैराग्यमित्युक्तिरनादरणीयैव। भागवतवचनैरपि ब्रह्मप्राप्तेः तात्कालिकतत्सेवारहितमोक्षस्यानेकेषां मोक्षार्थप्रयत्नवैधुर्येण तात्कालिकस्य भागवतसंश्लेषादिरहितस्य च कामनाविषयत्वाभाव

भावप्रकाशः

एव प्रतिपाद्यते। तत्र 'सालोक्य' (श्रीभाग. ३-२९-१३) इति श्लोके 'मत्सेवनं विना' इत्यनेन सेवारहितमोक्षोऽनभीष्ट इति स्फुटम्। 'नैकात्मतां' (श्रीभाग. ३-२५-३४) इत्यत्र 'मत्पादसेवाभिरताः, अन्योन्यतो भागवताः' इत्युक्त्या सेवारहितस्यैव स्पृहाविषयत्वाभावः, 'न पारमेष्ठ्यं' (श्रीभाग. ११-१४-१४) इति श्लोके 'मद्विनाऽन्यत्' इत्यनेनानुभाव्यभगवद्वियुक्तमोक्षस्यैव वाञ्छाविषयत्वाभावः, 'अहं त्वकामः' (श्रीभाग. ७-१०-६) इति प्रह्लादश्लोके 'राजसेवकयोरिव' इत्यनेन राजसेवाविसदृशमुक्तिकामनाविरहश्च स्फुटः। 'नैतान् विहाय कृपणान् विमुमुक्ष एकः' (श्रीभाग. ७-९-४४) इत्यत्रानेकेषां मोक्षमन्तरा स्वस्यैकस्य मोक्षेच्छाविरहः प्रह्लादेनैवोक्तः। 'न कामये नाथ' (श्रीभाग. ४-२०-२४) इत्यादिपृथूक्तौ 'न यत्र युष्मच्चरणाम्बुजासव' इत्यादिना अनेकभागवतसङ्गमूलकसुखरहितकैवल्यस्यैव कामनाया अविषयत्वं व्यक्तं, न तु तत्संश्लेषसहितकैवल्यस्य। 'या निर्वृतिः' (श्रीभाग. ४-९-१०) इत्यादिध्रुवोक्तौ 'भवज्जनकथाश्रवणेन' इत्यादिना भागवतसङ्गसुखप्रशंसनेन तद्रहितमुक्तेरनिष्टत्वं व्यक्तम्। अत एव—

भक्तिर्मुहुः प्रवहतां त्वयि मे प्रसङ्गो
भूयादनन्त महताममलाशयानाम्।
येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं
नेष्ये भवद्गुणकथामृतपानमत्तः॥ (श्रीभाग. ४-९-११)

इति भगवद्भक्तसङ्गप्रार्थनस्य तेन संसारमोक्षस्योक्तिश्च संगच्छते। 'न वयं साधु' (श्रीभाग. १०-८३-४१) इति महिषीणामुक्तौ मुक्तिकामनाविरहे 'श्रीमत्पादरजःश्रियो

भावप्रकाशः

मूर्ध्ना वोढुं' (श्रीभाग. १०-८३-४२) इति कृष्णपादरजोवहन-मेव कारणमुक्तम्। एतेन कृष्णपादरजोवहनविश्लेषपूर्वक-मुक्तौ कामनाविरहः पर्यवसन्नः। इन्द्रोक्तौ च 'शुश्रूषतां ते मुक्तिर्न बहुमता' (श्रीभाग. ७-८-४२) इत्युक्त्या शुश्रूषारहित-मुक्तेरेवानिष्टता। 'न नाकपृष्ठं' (श्रीभाग. ६-११-२५) इत्यादि-वृत्रोक्तौ 'त्वा विरहय्य काङ्क्षे' इत्युक्त्या भगवद्विरहकालिकमुक्तावेव काङ्क्षाविरहः प्रतीयते। अत एव 'अजातपक्षाः' इत्यादितदनन्त-रोक्तौ वत्सतराणां मातृस्तन्य इव प्रियायाः प्रोषितप्रिय इव भगवति दिदृक्षायाः प्रतिपादनं सङ्गच्छते। एतेन मातृकुमारनयेन भर्तृभार्या-नयेन च भगवत्साक्षात्काररूपमुक्तौ वृत्रस्य काङ्क्षा वर्तत एवेति व्यञ्जितम्। श्रुतीनामुक्तौ 'चरणसरोजकुलसङ्ग' (श्रीभाग. १०-८७-२१) इत्यनेन भागवतकुलसङ्गरहितापवर्गस्यैवानिष्टतेत्येव प्रतीयते। अत्र क्वापि सामान्यतो मुक्तीच्छाविरहे न तात्पर्यमिति तत्तच्छ्लोकपर्यालोचनायां व्यक्तं निर्मत्सराणां विदुषाम्। अत्र प्रह्लादोक्तौ राजसेवकयोरिव संबन्धः, अन्यथा संबन्धो नास्तीत्युक्त्या सेवकस्य राज्ञीव भक्तस्य भगवति प्रीतिर्मुक्तिकालेऽपीति सिध्यति। तेन स्वापेक्षयोत्कृष्टवस्तुविषयकप्रीतिर्भक्तिः, न तु स्वस्मिन् स्वाभिन्नत्वे-नानुसंहिते वस्तुनि प्रीतिर्भक्तिरिति, वृत्रोक्तौ (श्रीभाग. ६-११-२६) मातरि वत्सतरस्य पत्यौ पत्न्याश्च प्रीतिर्भक्तिरिति फलति। तेनापि स्वापेक्षयोत्कृष्टे प्रीतिरेव भक्तिर्न निकृष्टे न वा स्वस्मिन् स्वाभिन्नत्वे-नानुसंहिते वेति सिद्ध्या जीवब्रह्माभेदज्ञानं 'ज्ञानेन वैराग्यविजृम्भितेन' (श्रीभाग. ३-२५-२७) 'ज्ञानवैराग्ययुक्तेन' (श्रीभाग. ३-२५-४३) इत्यत्र परसंमतं न विवक्षितम्। एवं सेवकस्य राजप्रासीच्छया

**भावप्रकाशः**

पत्न्याः पतिप्राप्तीच्छया प्रवृत्तावपि निरुपाधिकप्रेमा न हन्यत इत्यपि सिद्धया ब्रह्मण उपायभूतस्य सर्वोत्कृष्टस्य फलतया स्वाभिन्नस्य तस्य निरतिशयानन्दरूपस्य प्राप्तीच्छया भक्तिं कुर्वतां निरतिशयानन्द-रूपब्रह्मव्यतिरिक्तफलेच्छाविरहेण प्रेम्णः परा काष्ठा नैव हन्यत इत्यपि सिध्यति। 'इत्यच्युताङ्घ्रिं भजतः' (श्रीभाग. ११-२-४३) इति कव्युक्तौ भगवत्प्रबोधः परवैराग्यं भक्तिरिति क्रमो न विवक्षितः—

भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः।

(श्रीभाग. ११-२-४२)

इति तत्पूर्वश्लोके त्रयाणामेककालिकत्वोक्तेः। इदं च समाधि-कालिकानुभवविषयम्। समाधेरेव भक्तित्वादनुभवरूपत्वाच्च। तदात्वेऽन्यवैराग्यस्यापि सत्त्वात्। 'यदा सर्वे प्रमुच्यन्ते' (बृ. उ. ४-४-७) इति श्रुत्युपबृंहणरूपत्वादस्येत्यादिकं प्रागेव निरूपितम्। अत्र भगवत्प्रबोधोऽपि 'परेशानुभवः' इति पूर्वश्लोकोक्त एव। भगवच्छब्देन गुणपूर्णविषयकता। प्रेत्युपसर्गेण सर्वावधिको-त्कर्षविषयकता। 'खं वायुमग्निं' (श्रीभाग. ११-२-४१) इति तत्पूर्वश्लोके सर्वभूतसामान्यस्यापि भगवच्छरीरत्वप्रतिपादनेन भगवत्प्र-बोधोऽपि सर्वशरीरिविषयको विवक्षितः। एतेन 'सर्वभूतेषु यः पश्येत्' (श्रीभाग. ११-२-४५) इति हर्युक्तौ सर्वभूतेषु भगवतोऽ-न्तर्यामिणः शरीरितया भाव एव विवक्षितः। 'भूतानि भगवति' इति सर्वाधारत्वमिति सर्वान्तर्यामिसर्वाधारदर्शनवान् भागवतोत्तम इति तदर्थः। भागवतोत्तमस्यैकविधस्यैव हर्युक्तौ स्फुटप्रतीत्या तत्पूर्वकव्युक्त्यनुरोधेन तदर्थस्य स्फुटत्वेऽपि 'खं वायुमग्निं' (श्रीभाग. ११-२-४१) इति श्लोकोक्ताधिकारी प्राकृत इत्युक्त्वा 'तस्मादिदं जगदशेष' (श्रीभाग. १०-१४-२२) इति भगवद्भक्तकथाविधुर-

### भावप्रकाशः

प्रघट्टकस्थस्कन्धान्तरगतश्लोकोक्तरीत्या प्रपञ्चमिथ्यात्वभानवान्मध्यम इति स्वोत्प्रेक्षितार्थविवरणमेव। 'ध्यायतश्चरणाम्भोजं' (श्रीभाग. १-६-१७) इत्यस्य प्रथमस्कन्धस्थत्वात्, श्लोकद्वयस्य स्कन्धान्तरगतत्वात्। तस्मादिदं (श्रीभाग. १०-१४-२२) इति श्लोके यथा प्रपञ्चमिथ्यात्वं न विवक्षितं तथा शुकपक्षीये व्यक्तम्। 'ध्यायतश्चरणाम्भोजं' (श्रीभाग. १-६-१७) इत्यादौ 'नापश्यमुभयं' (श्रीभाग. १-६-१८) इत्यत्र 'खं वायुमग्निं' (श्रीभाग. ११-२-४१) 'तस्मादिदं' (श्रीभाग. १०-१४-२२) इत्यत्रोक्तसत्यत्वमिथ्यात्वोभयं नापश्यमिति नार्थः। पूर्वं तस्यार्थस्य तत्रानुक्तेः। पूर्वश्लोके—

'आत्मनाऽऽत्मानमात्मस्थं यथाश्रुतमचिन्तयम्।

(श्रीभाग. १-६-१६)

इति जीवात्मस्थपरमात्मचिन्तनमुक्तम्। अथ उभयं जीवपरोभयमित्येवार्थः। 'उभयं—आत्मानं परं च' इति श्रीधरविवरणमपि। अत एव

हन्तास्मिन् जन्मनि भवान् मा मा द्रष्टुमिहार्हति।

(श्रीभाग. १-६-२२)

इत्यशरीरभगवद्वाक्यं सङ्गच्छते। अत्र भगवद्दर्शनस्यैवैतजन्मनि निषेधेन पूर्वजन्मनि नारदस्य भगवद्दर्शनमिष्टं न निष्पन्नमिति स्फुटं प्रतीयते। तच्च प्रागुपात्तपूर्वश्लोके जीवात्मनि परमात्मचिन्तनोक्त्या जीवात्मपरमात्मोभयदर्शनमेव। तद्विरह एव 'नापश्यमुभयं मुने' (श्रीभाग. १-६-१८) इत्यत्र विवक्षितः। अतः 'सर्वभूतेषु यः पश्येत्' (श्रीभाग. ११-२-४५) इत्युपक्रम्य उत्तममध्यमप्राकृतानां भक्तानां भागवत एव स्फुटतरं प्रतिपादनेन 'सर्वभूतेषु यः पश्येत्' (श्रीभाग. ११-२-४५) इत्यत्र भागवतोत्तमस्योत्तममध्यमप्राकृत-

भावप्रकाशः

भेदेन त्रैविध्याकथनेऽपि भागवतोत्तमत्रैविध्यकल्पनमभिनिवेशमूलक-मेवेति। एवमभिप्रकार एव तृतीये बहुविधभक्तियोगनिरूपणावसरे तामसराजससात्त्विकभक्तिनिष्ठान्निरूप्य निर्गुणात्यन्तिकभक्तियोगानिष्ठः 'मद्गुणश्रुतिमात्रेण' (श्रीभाग. ३-२९-११) इत्याद्युक्त उत्तमभक्तोऽयमेव भवितुमर्हति, 'सर्वभूतगुहाशये मयि मनोगतिः' 'सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः' (श्रीभाग. ११-२-४५) इत्यत्रार्थैक्यविवक्षायाः स्फुटत्वादिति प्रघट्टकद्वयैकरस्यमपि सङ्गच्छते। एतेनायं भागवतोत्तमो ब्रह्मविदेव। अत एव ब्रह्मविदश्चित्तद्रुतिर्वर्तेत इति प्रबुद्धवाक्ये—

भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम्।
क्वचिद्रुदन्ति . . . . . . . . ॥

(श्रीभाग. ११-३-३१)

इत्यत्र मोक्षसाधनभक्तिनिष्ठस्य चित्तद्रुतिकार्योक्तिस्सङ्गच्छते। अत्र प्रथमभक्तिशब्दो मोक्षसाधनीभूतभक्तिपरः। तत्परीवाहरूपैव फल-भक्तिर्व्युत्थानकालिकी द्वितीयभक्तिशब्दार्थ इति शुकपक्षीये उक्तम्। भक्तेर्ब्रह्मविद्यारूपायाः पुरुषार्थतत्साधनत्वे पूर्वमेव निरूपिते। तत्र पुरुषार्थत्वेन तत्परीवाहरूपफलभक्तिचित्तद्रुतिकार्यसत्त्वे साधनीभूत-समाधिरूपभक्तेर्मुक्तिहेतुत्वं नापैति। अत्र च साधनभक्तेर्मुक्ति-हेतुत्वमुपक्रमोपसंहाराभ्यां निश्चीयते।

यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः।
तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम्॥ (११-३-१७)

इति प्रश्नः—

इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया।
नारायणपरो मायामञ्जस्तरति दुस्तराम्॥ (श्रीभाग. ११-३-३३)

## भावप्रकाशः

इति प्रबुद्धप्रतिवचनोपसंहारः। (भक्तिरसा. ३३ पु.) अत्र भागवतधर्मोत्थभक्तेर्मायातरणकरणत्वमुक्तम्। अतस्तृतीये आत्यन्तिकभक्तियोगस्येवात्रापि परमुक्तिहेतुभूता साधनभक्तिरेव 'भक्त्या सञ्जातया भक्त्या' (श्रीभाग. ११-३-३१) इत्यत्र प्रथमभक्तिशब्दार्थः। प्रथमभक्तिशब्दो न भागवतधर्मपरः। तथा सत्यत्र भागवतधर्मोत्थभक्तेर्भवन्मते फलरूपताया आवश्यकत्वेन तस्योत्तरश्लोके साक्षान्मुक्तिहेतुत्वकथनासङ्गतिः। अत उत्पुलकत्वादिमात्रनिदानभक्तिपरीवाहरूपा भक्तिस्तत्र द्वितीयभक्तिशब्दार्थतया विवक्षिता। अत्र तु साक्षान्मुक्तिसाधनभूता भक्तिरेव स्फुटमुक्ता। अतो भागवतोत्तमो ब्रह्मविदेव।

भक्तियोगः परैकान्तप्रीत्या ध्यानादिषु स्थितिः॥

(गी. सं. २४-श्लो.)

इत्यत्र परैकान्तप्रीत्येत्यत्र परशब्दोपादानेन स्वस्मिन् स्वाभिन्नत्वेन वा गृहीते वस्तुनि प्रीतिर्न भक्तिः। ध्यानादिषु स्थितिरित्युक्त्या ध्यानकालिकी परविषयिणी प्रीतिः, परविषयकप्रीतिरूपापन्नध्यानादीति यावत्। अयं भक्तियोगो मुक्तिसाधनमिति 'मध्यमे भगवत्तत्त्व' (गी. सं. ३-श्लो) इति श्लोके स्फुटम्। अत्र परैकान्तप्रीत्येत्यत्र एकान्तत्वं भगवद्व्यतिरिक्तप्रयोजनशून्यत्वम्। 'भक्तियोगः' (गी. सं. २४-श्लो.) इति श्लोके मोक्षार्थं क्रियामाणतयोक्तस्य भक्तियोगस्य 'एकान्त' इत्यनन्यप्रयोजनत्वकथनेन मोक्षेच्छया भक्तियोगानुष्ठातुर्भगवति निरतिशयानन्दरूपे परमात्मनि निरुपाधिकप्रेमकाष्ठा विद्यत एवेति बोधितम्। भगवत एव फलत्वेन तत्फलापेक्षायामपि भगवद्व्यतिरिक्तफलापेक्षाविरहेण निरुपाधिकप्रेमकाष्ठासत्त्वे कस्यापि बाधकस्य विरहात्। अत्र ज्ञानकर्मनिर्वर्त्यस्य भक्तियोगस्य मुक्ति-

## भावप्रकाशः

हेतुत्वोक्त्या भक्तेर्यत्किञ्चित्साध्यत्वस्य भागवते उक्तस्थलेषु पुरुषार्थत्वमेवेति मधुसूदनकल्पना न सम्भवति । अत्रापि भक्तियोगस्य मुक्तिसाधनत्वस्य विवक्षितत्वात् । 'न ह्यतोऽन्यः शिवः पन्थाः' (श्रीभाग. २-२-३३) इत्यत्र पूर्वम्—

एवं स्वचित्ते स्वयमेव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्तः ।
तन्निर्वृतस्सन् नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥

(श्रीभाग. २-२-६)

इत्यत्र पुरुषार्थभूताया एव भक्तेर्मुक्तिहेतुत्वमभिधायानन्तरं धारणाध्यानगतिकथनादिति बोधितम् । अत्र 'मध्यमे भगवत्तत्त्व' (गी. सं. ३ श्लो.) इति श्लोके तत्त्वशब्दस्य सिद्धय इत्यस्य च प्रयोगेण—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥

(गी. ७-३)

इत्यत्र तत्त्वतो वेदनम्,

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।

(गी. १०-७)

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥

(गी. १८-५५)

इत्यत्रोक्तं तत्त्ववेदनं दर्शनं च भगवत्प्राप्तिसमानविषयकं भगवत्प्राप्तिरूपमुक्तिसिद्ध्यर्थमिति सूचितम् । अत्र याथात्म्यशब्देन पूर्वोदाहृतगीतावचनद्वये भगवत्स्वरूपव्यतिरिक्तविभूतियोगयोर्भगवन्निष्ठधर्माणां च तात्त्विकत्वकथनेन प्राप्तिप्रतिपादकगीतावचनेषु सर्वत्र निर्विशेष-

भावप्रकाशः

प्राप्तिर्न विवक्षिता, अपि तु सविशेषानुभवरूपा प्राप्तिरेव विवक्षितेति सूचितम् । अत्र तत्त्वतो ज्ञानमात्रोक्तावपि—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥

(गी. ११-५४)

इत्यत्र तत्त्वतो ज्ञानवत्तत्त्वतः प्रवेशस्यापि भगवत्प्राप्तिरूपस्य भक्तिसाध्यत्वोक्त्या उक्तभक्तियोगस्य भगवत्प्राप्तिसिद्ध्यर्थत्वं गीताभिप्रेतमिति सिध्यति । अत्र (शं) भाष्यं—"ज्ञातुं शास्त्रतः, न केवलं ज्ञातुं शास्त्रतो द्रष्टुं साक्षात्कर्तुं तत्त्वेन तत्त्वतः प्रवेष्टुं च मोक्षं च गन्तुं परंतप" इति । 'यततामपि सिद्धानां' (गी. ७-३) इत्यत्र च—"तेषां यततामपि सिद्धानां सिद्धा एव हि ते ये मोक्षाय यतन्ते, तेषां कश्चिदेव हि मां वेत्ति, तत्त्वतो यथावत्" इति । एतद्भाष्यद्वयपर्यालोचनायां 'कश्चिन्मां वेत्ति तत्त्वतः' (गी. ७-३) इत्यत्रोक्तं ज्ञानं 'ज्ञातुं द्रष्टुं च' (गी. ११-५४) इत्यत्रोक्तं ज्ञानं चैकविषयकमिति स्फुटम् । 'ज्ञातुं द्रष्टुं च' (गी. ११-५४) इत्यनन्तरं—

मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः ।
निर्वैरस्सर्वभूतेषु यस्स मामेति पाण्डव ॥

(गी. ११-५५)

इत्यत्र भक्तस्य भगवत्प्राप्तिकथनेन भक्तेस्साक्षात्प्राप्तिहेतुत्वस्य—

'पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।'

(गी. ८-२२)

इति श्लोकोक्तस्य 'ज्ञातुं द्रष्टुं च' (गी.११-५४) इत्यत्रापि विवक्षादृढीकरणेन भक्त्या ज्ञानं, भक्त्या दर्शनं' भक्त्या प्राप्तिः, ज्ञानसाधन-

**भावप्रकाशः**

भक्तितो विलक्षणा दर्शनसाधनीभूता भक्तिः, ततोऽपि विलक्षणा प्राप्तिसाधनीभूता भक्तिरिति दर्शनानन्तरकालिकभक्त्या प्राप्तिरिति विवक्षायाः स्फुटतया मोक्षस्य भक्तिसाध्यत्वमपि स्फुटम्। त्रितयहेतुत्वं भक्तेः पर्वभेदेनैव। अतश्चोक्तभक्तियोगस्य भगवत्प्राप्तिसाधनत्व-मद्वारकमेव स्वरसतः प्रतीयमानं नापह्नवमर्हति। अतः 'अनन्यया इत्यनन्यप्रयोजनयेत्यर्थकम्। भगवदन्यप्रयोजनशून्ययेत्यर्थः। अयमर्थः—

. . . . ज्ञानी त्वात्मैव मे मतम्।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम्॥

(गी. ७-१८)

इत्यत्रैकभक्तेर्ज्ञानिनो भगवद्व्यतिरिक्तप्राप्यवैधुर्यकथनेन प्रागेव निर्धारितः। एवं 'अनन्यचेताः' (गी. ८-१४) 'भजन्त्यनन्यमनसः' (गी. ९-१३) इत्याद्युक्त्याऽपि दृढीकृतः। 'प्रकृतिं विद्धि मे पराम्। जीवभूतां' (गी. ७-५) इत्यचिदपेक्षया जीवस्योत्कर्षमभिधाय 'मत्तः परतरं नान्यत्' (गी. ७-७) इत्यचिज्जीवोभयावधिकोत्कर्षः परस्य स्वव्यतिरिक्तोत्कर्षनिषेधेन दृढीकृतः। एवं जगत्कारणत्वधारकत्वाद्यु-त्कर्षविशेषोऽपि प्रतिपादितः।

मोहितं नाभिजानाति मामेभ्यः परमव्ययम् (गी. ७-१३) इत्येतदुत्कर्षज्ञानाभाववतोऽज्ञत्वमेवोक्तम्। तदनन्तरं सप्तमे भक्ति-र्निरूपिता। अष्टमे—

पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।

(गी. ८-२२)

इत्यत्र परपुरुषस्योत्कर्षविशिष्टस्य उत्कृष्टविषयकभक्तिलभ्यत्वमेवोक्तम्। अत्राप्यनन्ययेत्यस्य पूर्वोक्त एवार्थः।

**भावप्रकाशः**

नवम — सर्वव्यापकत्व-सर्वजगत्कारणत्व—सर्वाधारत्वादिकमभिधाय—'महात्मानस्तु' (गी. ९-१३) इत्यत्र सर्वजगत्कारणत्वज्ञानस्यानन्यमनस्कतया भक्तौ हेतुता प्रतिपादिता।

दशमे—'अहं सर्वस्य प्रभवः' (गी. १०-८) इत्यत्रोत्पत्तिकारणत्वसर्वप्रवर्तकत्वज्ञानमेव भक्तौ हेतुतयोक्तम्। 'यो मामजमनादिं' (गी. १०-३) इत्यत्र लोकमहेश्वरत्वज्ञानं सर्वपापनिवृत्तिकारणं यदुक्तं तदपि भक्तियोगहेतुतया विवक्षितम्।

पञ्चदशे—'यो मामेवमसंमूढः' (गी. १५-१९) इत्यत्र प्रागुक्तपुरुषोत्तमनिर्णयस्य भक्तिहेतुता प्रदर्शिता। अत्र सर्वव्यापिसर्वावधिकोत्कर्षस्य सामान्यतो विशेषतश्च ज्ञानस्य भक्तिहेतुत्वप्रतिपादनेन निर्विशेषज्ञानं न भक्तिशब्दार्थो नापि भक्तौ हेतुरिति व्यक्तम्। परमतरीत्या परसंमतनिरुपाधिकप्रेमपरकाष्ठायामपि न हेतुरिति सिद्धम्। अयमर्थो 'ज्ञानकर्माभिनिर्वर्त्यः' (गी. सं. ३ श्लो) इति विशेषणेन श्रीमद्यामुनमुनिभिस्सूचितः। अत्र प्रथमषट्कोदितज्ञानयोगकर्मयोगनिर्वर्त्यत्ववत् प्रागुक्तज्ञाननिर्वर्त्यत्वं 'ज्ञातुं द्रष्टुं च तत्त्वेन' (गी. ११-५४) इत्युक्तादिशा दर्शननिर्वर्त्यत्वमपि विवक्षितम्।

चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन।

(गी. ७-१६)

येषां त्वन्तगतं—भजन्ते मां दृढव्रताः।

(गी. ७-२८)

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च।

(गी. ८-७)

यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्। (गी. १८-५)

**भावप्रकाशः**

इति गीतोक्तदिशा कर्मनिर्वर्त्यत्वमप्यत्र विवक्षितम् । एतेन—

असक्तबुद्धिस्सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां मत्संस्थामधिगच्छति ॥

(गी. १८-४९)

इत्यत्र सर्वकर्मसंन्यासेन निष्क्रियब्रह्मात्मस्वरूपसंबोधं प्राप्त इति व्याख्याय—'भक्त्या मामभिजानाति' (गी. १८-५५) इत्यत्र शुद्धब्रह्मज्ञानलक्षणा या भक्तिः 'चतुर्विधा भजन्ते मां' (गी. ७-१६) इत्यत्र चतुर्थी उक्ता "तया मामभिजानाति यावानहमुपाधिकृतविस्तरभेदः, यश्चाहं अस्मि विध्वस्तसर्वोपाधिभेद उत्तमः पुरुष आकाशकल्पस्तं मामद्वैतं—तत्त्वतोऽभिजानाति, ततो मामेवं तत्त्वतो ज्ञात्वा विशते तदनन्तरं मामेव ज्ञानानन्तरम् । नात्र ज्ञानानन्तरप्रवेशक्रिये भिन्ने विवक्षिते ज्ञात्वा विशते तदनन्तरमिति, किं तर्हि फलान्तराभावात् ज्ञानमात्रमेव । 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३-२) इत्युक्तत्वात् ।" "सेयं ज्ञाननिष्ठा आर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता । तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति, यदनन्तरमेवेश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्तते" । "अत्र च सर्वं निवृत्तिविधायिशास्त्रं वेदान्तेतिहासपुराणस्मृतिलक्षणं न्यायप्रसिद्धमर्थवद्भवति । 'विदित्वा अथ व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृ. उ. ३-५-१) 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' (म. ना. उ. २४-१) 'न्यास एवात्यरेचयत्' (म. ना. उ. २१-२) 'वेदानिमं च लोकममुं च परित्यज्य' (आ. २-२३-१३) "त्यज धर्ममधर्मं च' (सं. उ. २-२२, ३-२९) इत्यादि" (शं. भा.) इति विवरणं न गीताचार्याभिमतमिति बोधितम् ।

'स्वे स्वे कर्मण्यभिरतः' (गी. १८-४५) इति कर्मजसिद्धे-

भावप्रकाशः

रुपक्रमात् । 'भक्त्या मामभिजानाति' (गी. १८-५५) इत्यनन्तरं—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥

(गी. १८-५६)

इत्यत्र सर्वकर्माणि कुर्वाणस्यैव भगवदनुग्रहान्मुक्तिप्राप्तेः कथनात् । संन्यासशब्दस्य तत्रैव पूर्वं स्वरूपत्यागपरत्वं नास्तीति निर्धारणेन 'असक्तबुद्धिः' (गी. १८-४९) इति श्लोके तद्विरुद्धार्थविवक्षाया अयोगात् । सप्तमे सुकृतसाध्यत्वस्यैव चतुर्थभक्तावप्युक्त्याऽत्र तद्विरोधेन संन्याससाध्यत्वविवक्षाया अप्यसंभवात् ।

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।

(गी. ९-३२)

इत्यादौ प्रागुक्तार्थस्य स्थापनाय—

ब्राह्मणक्षत्रियविशां शूद्राणां च परतप ।
कर्माणि प्रविभक्तानि . . . . . .

(गी. १८-४१)

इत्युपक्रम्य—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।

(गी. १८-४५)

इत्यादिना ब्राह्मणादीनां सर्वेषामपि स्वस्ववर्णविहितकर्मभिर्भक्तिरेव पर्वभेदभिन्ना मुक्तिहेतुरत्र प्रतिपिपादयिषिता । एतेनैव संन्यासिनोऽपि स्वाश्रमविहितकर्मपरिणतभक्त्या 'सर्वकर्माण्यपि सदा' (गी. १८-५६) इति श्लोकोपसंहारदिशा भगवत्प्रसादमूलमुक्तिस्सिध्यतीति संन्यासिमात्राधिकारिकनिर्विशेषज्ञानपरता न गीताचार्यसंमतेत्ययमर्थः 'स्वकर्म-

## भावप्रकाशः

परिणामश्च शास्त्रसारार्थः' (गी. सं. २२ श्लो) इति यामुनमुनिभिरेव प्रकाशितः। 'मद्भक्तिं लभते पराम्' (गी. १८-५४) इति पूर्वश्लोके परशब्दमात्रप्रयोगेण निर्विशेषज्ञानपरता न सिध्यति। किं तु 'तेषां ज्ञानी नित्ययुक्त' (गी. ७-१७) 'प्रियो हि ज्ञानिनोऽत्यर्थं' (गी. ७-१७) 'आस्थितस्स हि युक्तात्मा' (गी. ७-१८) इति सप्तमे ज्ञानिभक्तोत्कर्षनिरूपणावसरे भगवद्व्यतिरिक्तफलापेक्ष्यार्तादि-वैलक्षण्येन भगवद्व्यतिरिक्तफलापेक्षाविरहेण भगवति प्रीत्याधिक्यस्य प्रतिपादनेन भगवन्मात्रफलापेक्षिज्ञानिभक्तस्योत्कर्षप्रतिपादनेन तादृश-ज्ञानिभक्तगतभगवत्प्रीतिनिष्ठोत्कर्षमभिप्रेत्यत्र परशब्दः। एवमत्र परशब्दः 'ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च' (गी. ११-१४) इत्यत्र प्राथमिकज्ञानसाधनभक्त्यपेक्षयोत्कर्षपरः। अयमर्थः 'तेषां सतत-युक्तानां' (गी. १०-१०) इत्यत्रोक्तः 'भक्त्या मामभिजानाति' (गी. १८-५५) इत्यत्र दर्शनविवक्षया दर्शनहेतुभक्तौ परत्वबोधनेन स्फुटीकृतः।

भक्त्या त्वनन्यया शक्यः—ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप। (गी. ११-५४)

इत्यत्र ज्ञानदर्शनसाधनभक्त्योर्विशेषो गीताचार्याभिमत इत्यत्र भक्त्या ज्ञानस्य 'इति मत्वा भजन्ते मां' (गी. ३-२८) 'भजन्त्यनन्यमनसो ज्ञात्वा भूतादिं' (गी. ९-१३) इत्यादौ ज्ञानाद्भक्तेश्च प्रतिपादनेन भक्तिसाध्यं यज्ज्ञानं तज्जन्यभक्तेस्सिद्ध्या दर्शनसाधनभूताऽपि भक्ति-र्ज्ञानसाधनभक्तितो विलक्षणेति सिध्यति। एवमेव 'तेषां सतत-युक्तानां भजतां' (गी. १०-१०) इति श्लोके दर्शनस्य भक्तिसाध्य-त्वोक्तावपि 'मद्भक्ता यान्ति मामपि' (गी. ७-२३)

**भावप्रकाशः**

'तस्मात्सर्वेषु कालेषु मामनुस्मर---मामेवैष्यस्यसंशयम्' (गी. ८-७)।

'अनन्यचेताःसततं यो मां स्मरति नित्यशः। तस्याहं सुलभः' (गी. ८-१४)।

'पुरुषस्स परः पार्थ भक्त्या लभ्यः' (गी. ८-२२)

'योगी परं स्थानमुपैति चाद्यम्' (गी. ८-२८)।

'अनन्याश्चिन्तयन्तो मां—योगक्षेमं वहाम्यहम्' (गी. ९-२२)।

'यान्ति मद्याजिनोऽपि माम्' (गी. ८-२५)।

'मन्मना भव मद्भक्तः---मामेवैष्यसि' (गी. ९-३४)।

'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥' (गी. १०-१०)।

'भक्त्या त्वनन्यया शक्यः---ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च' (गी. ११-५४)।

'मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः।
. . . यस्स मामेति' (गी. ११-५५)।

'अनन्येनैव योगेन मां ध्यायन्त उपासते।
तेषामहं समुद्धर्ता' (गी. १२-७)।

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' (गी. १४-२)।

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' (गी. १४-२६)।

'भक्त्या मामभिजानाति---ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' (गी. १८-५५)।

'मन्मना भव मद्भक्तो—मामेवैष्यसि' (गी. १८-६५)।

## भावप्रकाशः

'भक्तिं मयि परां कृत्वा मामेवैष्यस्यसंशयम्' (गी. १८-६८)। इत्यादौ बहुत्र साक्षाद्भक्तेर्मुक्तिसाधनत्वप्रतिपादनेन दर्शनसाधनभूतभक्तितो विलक्षणा प्राप्तिसाधनभूता भक्तिः 'भक्त्या त्वनन्यया' (गी. ११-५४) इति श्लोके 'भक्त्या प्रवेष्टुं' इत्यत्र विवक्षितेत्येव युक्तम्। 'तेषां सततयुक्तानां भजतां' (गी. १०-१०) इत्यादौ 'ददामि बुद्धियोगं' (गी. १०-१०) इत्यत्र योगपदोपादानेन—

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।
सोऽविकम्प्येन योगेन युज्यते नात्र संशयः (गी. १०-७)।

इत्येतत्समानार्थकत्वं स्फुटम्। संमतश्चायमर्थः परेषामपि। 'तत्राविकम्प्ययोगो निर्विशेषज्ञानरूपः, तत्र च पूर्वोक्तसविशेषज्ञान हेतुः, इति परेषां मतम्। अयमर्थो गीतायां न विवक्षितः; तत्त्वत इत्यस्योपादानात्। तत्त्वत इत्यनेन भगवद्विभूतियोगज्ञानं यथार्थमित्येव सिध्यति। व्यावहारिकपारमार्थिकभेदेन प्रामाण्यद्वैविध्यकल्पनमपि न गीताचार्यस्योत्प्रेक्षितुं क्षमम्। तथा गीताचार्यतात्पर्यकल्पकस्य कस्यापि विरहात्। प्रत्युत तत्त्वत इति पदोपादानेन भगवतो विभूतियोगौ न तात्त्विकाविति मतं न गीताचार्याभिमतमिति स्फुटं प्रतीयते। तेन ज्ञानदर्शनानन्तरकालिकभक्तियोग एव ज्ञातुं द्रष्टुं च' (गी. ११-५४) इत्यादौ वक्ष्यमाणः 'अविकम्प्येन योगेन' (गी. १०-७) इत्यत्र विवक्षितः; योगशब्दस्य समाधिपरत्वात्; समाधौ साक्षात्कारत्वभक्तिरूपत्वयोः पूर्वमेवोपपादनात्। एवं च—

'तेषां सततयुक्तनां—ददामि बुद्धियोगं तं' (गी. १०-१०)

इत्यत्र ज्ञानानन्तरभक्तिसाध्यदर्शनस्य बुद्धिशब्देनैव लाभाद्योगशब्दस्समाधिपरतया बुद्धिं समाधिरूपामत्र विवक्षितां बोधयति। तस्या

## भावप्रकाशः

मुक्तिहेतुत्वं यदत्र प्रतिपादितं तत् 'ज्ञातुं द्रष्टुं च तत्त्वेन' (गी. ११-५४) इति निष्कर्षपर्यालोचनया समाधौ भक्तित्वसत्त्वेन भक्तावेव विश्राम्यतीति गीताशयः स्फुटो निर्मत्सराणां विदुषाम्। गीतायां योगपदद्वयप्रयोगमभिप्रेत्यैव श्रीयामुनमुनिभिः 'भक्तियोगः' (गी. सं. २४ श्लो) इत्यत्र योगपदमुपात्तम्। 'भक्त्या मामभिजानाति' (गी. १८-५५) इत्यत्रापि परसंमतनिर्विशेषज्ञानलक्षणभक्त्या निर्विशेषसाक्षात्कारो न विवक्षितः। 'तत्त्वतः' इत्यस्योपादानेन 'यावान् यश्चास्मि' (गी. १८-५५) इति सोपाधिनिरुपाधिज्ञानयोः परमते एकविधतत्त्वविषयकत्वानङ्गीकारेण तत्त्वत इत्येकपदेन यावान् यश्चास्मीत्यर्थद्वयज्ञानस्यैकविधप्रामाण्यप्रतिपादनेन सप्रकारकज्ञानस्यैव प्रमात्मकस्य विवक्षायाः स्फुटत्वेन सविशेषसाक्षात्कारस्यैव तत्र विवक्षितत्वात्। 'भक्त्या त्वनन्यया शक्यः' (गी. ११-५४) इति श्लोके भक्तिसाध्यत्वस्य प्रवेशेऽभिधानेन तदैकार्थ्यबोधनायात्र विशधातुप्रयोगेणोत्तरार्धोक्ततत:पदवैयर्थ्यान्यथाऽनुपपत्त्या 'फलमत उपपत्तेः' (ब्र. सू. ३-२-३९) 'धर्मं जैमिनिरत एव' (ब्र. सू. ३-२-४०) इत्यत्रेव तत इत्यस्य पूर्वोक्तभक्तिसजातीयभक्तिबोधकतया ततः—दर्शनानन्तरकालिकभक्तेः प्राप्तिरेवोत्तरार्धे विवक्षितेति निश्चीयते।

'भक्त्या मामभिजानाति' (गी. १८-५५) इत्यत्र मधुसूदनसरस्वत्य एवं व्याचख्युः—"ततो मामेवं तत्त्वतो ज्ञात्वा अहमस्म्यखण्डानन्दाद्वितीयं ब्रह्मेति साक्षात्कृत्य विशते अज्ञानतत्कार्यनिवृत्तौ सर्वोपाधिशून्यतया मद्रूप एव भवति। तदनन्तरं—बलवत्प्रारब्धकर्मभोगेन देहपातानन्तरं, न तु ज्ञानानन्तरमेव, क्त्वाप्रत्ययेनैव तल्लाभे तदनन्तरमित्यस्य वैयर्थ्यापातात्। तस्मात् 'तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये'

भावप्रकाशः

(छा. उ. ६-१४-२) इति श्रुत्यर्थ एवात्र दर्शितो भगवता। यद्यपि ज्ञानेनाज्ञानं निवर्तितमेव दीपेनेव तमस्तस्य तद्विरोधिस्वभावत्वात्, तथाऽपि तदुपादेयमहंकारदेहादि निरुपादानमेव यावत्प्रारब्धकर्मभोगमनुवर्तते दृष्टत्वादेव। न हि दृष्टेऽनुपपन्नं नाम। तार्किकैरपि हि निरुपादानं क्षणं क्षणद्वयं वा कार्यमवतिष्ठत इत्युक्तम्। एवं च तत्रैव प्रतिबन्धसंनिपाते बहुकालमवस्थितिः केन वार्यते। प्रारब्धकर्मणश्च प्रतिबन्धकत्वं श्रुतिसिद्धमन्तःकरणदेहाद्यवस्थित्यन्यथानुपपत्तिसिद्धं च। एवं शिष्यसेवकाद्यदृष्टमपि तत्प्रतिबन्धकम्। तदभावमपेक्ष्य च पूर्वसिद्ध एवाज्ञाननाशस्तत्कार्यमन्तःकरणादिकं नाशयतीति न पुनर्ज्ञानापेक्षा। तदुक्तम्—

तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम्।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः॥

इति। न जानामीत्यादिप्रत्ययस्तु तस्य निवृत्ताज्ञानस्याप्यज्ञाननाशजनितात्तदनुपादानात्साक्षादात्माश्रयादेवाज्ञानसंस्कारात्तत्त्वज्ञानसंस्कारनिवर्त्यादन्तःकरणस्थित्यवधेरिति विवरणकृतः। अहं ब्रह्मास्मीति चरमसाक्षात्कारानन्तरं अहं ब्रह्म न भवामि न जानामीत्यादिप्रत्ययो नास्त्येव। यदि परं घटं न जानामीत्यादिप्रत्ययः स्यात्तदुपपादनाय चेयं संस्कारकल्पनेति नानुपपन्नम्। अज्ञानलेशपदेनाप्ययमेव संस्कारो विवक्षितः। न हि सावयवमज्ञानम्, येन कियन्नश्यति, कियत्तिष्ठतीति वाच्यम्, अनिर्वचनीयत्वात्। एकदेशाभ्युपगमे तु तन्निवृत्त्यर्थं पुनश्चरमं ज्ञानमपेक्षितमेव। तच्च स्मृतिकाले दुर्घटमिति तत्त्वज्ञानसंस्कारनाश्यता तस्याभ्युपेया। ततश्च संस्कारपक्षान्न कोऽपि विशेष इति पूर्वोक्तैव कल्पना श्रेयसी। ईदृशजीवन्मुक्तयपेक्षया च प्राग्भगवतोक्तम्—

भावप्रकाशः

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ (गी. ४-३४) इति " इति ॥

इतरे तु विशत्यात्मनि स्वसिद्धयेऽनिर्वचनीयसंबन्धेनेति विशत्-सर्वानर्थमूलमज्ञानं तस्मै, तत्सविलासमुन्मूलयितुं, ज्ञात्वा अपरोक्षीकृत्य तदनन्तरं अन्तरं भेदस्तच्छून्यं शाश्वतं पदमव्ययमाप्नोतीत्युत्तरश्लोकानुषङ्गेण व्याख्येयामिति वदन्ति ।

तत् तत्त्वतो याथात्म्येन ज्ञात्वा साक्षात्कृत्य ततो व्याप्तो ब्रह्मभावं गतो भवतीत्यर्थः, 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. ३-२-९) इति श्रुतेः ।

यद्वा—तत इति कारणब्रह्मभावापत्तिस्सार्वात्म्यरूपा प्रथममुक्ता । अनन्तरं कारणभावापत्तेरनुपदमेव तद्ब्रह्म तत्पदाभिधेयं शुद्धं ब्रह्म विशते दर्पणाद्यपाये प्रतिबिम्बो बिम्बमिव प्रविशतीत्यर्थ इत्यन्ये ।

अत्र भाष्योत्कर्षदीपिकाकृतः—" तदेतद्व्याख्यानत्रयमपि सर्वज्ञैराचार्यैः 'ध्यानयोगपरो नित्यं' (गी. १८-५२) इत्यत्र निदिध्यासनस्योक्तत्वात् 'भक्तिं लभते' इत्यस्य 'पराम्' इति विशेषणस्य च वैयर्थ्यं तच्छब्देनाप्रस्तुतपरामर्शस्यानुषङ्गाध्याहारादिक्लेशव्याप्तायाः कुकल्पनायाश्चानौचित्यमभिप्रेत्य त्यक्तत्वादुपेक्ष्यम् " इति व्याचख्युः ॥

'मां तत्त्वतो ज्ञात्वा' (गी. १८-५५) इत्यत्र निष्प्रकारकं जीवब्रह्माभेदज्ञानं न विवक्षितम्, पूर्वार्धे यावानित्यस्य वैयर्थ्यान्यथानुपपत्त्या सप्रकारकज्ञानस्यैव विवक्षितत्वेन 'अहमस्म्यखण्डानन्दाद्वितीयं ब्रह्मेति साक्षात्कार एवात्र विवक्षितः' इत्यत्र न किंचिद्भ्रमकं दृश्यते, प्रत्युत 'यावान्' इति परसम्मतार्थविवक्षाविरोधी । यद्यपि सिद्धान्तबिन्दुतट्टीकयोरसंप्रज्ञातसमाधावर्थाभानवन्महावाक्यजबोधेऽप्यहमर्थो न भासत इति

**भावप्रकाशः**

साधितम्, तथाऽप्यानन्दस्वरूपावगाह्यसंप्रज्ञातसमाधावानन्दत्वं भासत एवेति निष्प्रकारकत्वं नैव संभवति। 'आनन्दत्वं च निरुपाधिकेष्टत्वरूपम्' (अ·सि·७५१ पु) "अन्येच्छानधीनेच्छाविषयत्वयोग्यत्वरूपम्। उक्त-योग्यत्वं च सुखत्वम्। तद्विशिष्टं वृत्तिविशेषावच्छिन्नचिद्रूपम्" (ल-चं) इति सिद्धितट्टीकयोरुक्तम्। असंप्रज्ञातसमाधेर्वृत्तिरूपतायाः सदानन्द-वेदान्तसारे बिन्दुटीकायां भाष्योत्कर्षदीपिकायां चाङ्गीकारेण तदात्व आनन्दत्वस्य सत्त्वेन तत्र तद्भाने बाधकाभावात्। एवं मुक्तावानन्द-त्वस्य ज्ञानत्वस्य चानङ्गीकारे ज्ञानस्वरूपानन्दस्वरूपमविनाशीत्युक्तिर्न घटते। अनयोः कादाचित्कत्वेऽपि तदुपलक्षितचितो मुक्तौ सत्त्वेना-विनाशित्वव्यवहारोपपादनं च न स्वरसतस्संगच्छते। तथात्वे अविद्याया अपि शुद्धचिन्निष्ठतयाऽविद्याया नाशेऽप्यविद्योपलक्षितचितो मुक्तौ सत्त्वेनाविद्याश्रयत्वस्याप्यविनाशित्वं कथं वार्यते, उभयत्राविशेषात्। एव च मुक्तावानन्दत्वाङ्गीकारस्यावश्यकत्वेनासंप्रज्ञातसमाधेरपि तद्विषयकत्वं स्वीकार्यमेव। अतो महावाक्यजबोधकालेऽप्यहमर्थस्य सत्त्वेन तद्भानमावश्यकम्। बहिरिन्द्रियजन्यवृत्तिविशिष्टान्तःकरणा-वच्छिन्नचित एवाहमर्थत्वमिति परिभाषाऽनुभवविरुद्धैव। अनुमित्या-दावप्यहमर्थांशे प्रत्यक्षतया भानस्यानुभवसिद्धत्वात्। एतेन—

"सर्वथा प्रमात्रादिभानशून्यस्यासंप्रज्ञातसमाधेरावश्यकत्वात् सुषुप्तिभिन्नसर्वकाले प्रमात्रादिभानमिति स्वीकारासंभवात् भिन्नविषयकानु-मित्यादिसामग्रीरूपप्रतिबन्धककालिकघटादिमात्रप्रत्यक्षेच्छाजन्यतत्प्रत्यक्षे व्यभिचारेण सुषुप्तिसमाधिभिन्नसर्वकाले प्रमात्रादिभानमित्यस्यासंभवात् प्रमात्राद्यविषयके महावाक्यार्थबोधे बाधकाभावः" (सिद्धान्तबिन्दुटीका २१ पु.) इत्युक्तेर्नावकाशः। अनुमित्यादिकालेऽप्यहमर्थस्य स्वयंप्रका-

भावप्रकाशः

शात्मकप्रत्यक्षबलेन भानस्योत्तरत्र साधयिष्यमाणत्वात् । असंप्रज्ञातसमाधौ प्रमितिप्रमात्रोर्भानस्य स्वयंप्रकाशतयैवावर्जनीयत्वात् । असंप्रज्ञातसमाधि-काले बहिर्विषयवृत्त्यभावमात्रमेव विशेषः । सुषुप्तावप्यहमर्थनाशस्य परसंमतस्यायोगः पूर्वमेव निरूपितः । 'न त्वेवाहं जातु नासं' (गी. २-१२) इत्युपक्रमेऽहमर्थनित्यत्वोक्त्या सुषुप्तावहमर्थनाशो व्युदस्त इति सुषुप्तावप्यहमर्थभानं गीताचार्याभिमतमेव । असंप्रज्ञात-समाधौ बाहिर्विषयकत्वाभावो वृत्तिरूपत्वं च मैत्रायणीयश्रुतिसिद्धमिति प्रागेवोपपादितम् । अतो महावाक्यजबोधे परिभाषामात्रेण शपथमात्रेण वाऽहमर्थाविषयकत्वमपि नोपपादयितुं शक्यमिति महावाक्यजबोधोऽपि सप्रकारक इत्येवास्थेयम् । 'भक्त्या मामभिजानाति' (गी. १८-५५) इत्यत्र यावानित्यंशेऽपि तत्त्वतोऽभिज्ञानस्य विवक्षितत्वान्निष्प्रकारकज्ञान-विवक्षा न घटते । 'तत्त्वतो ज्ञात्वा' (गी. १८-४४) इत्यत्र सप्रकारक-ज्ञानविवक्षाया एव स्फुटत्वात् । मां तत्त्वतो ज्ञात्वेत्येतावन्मात्रस्य पुनरुक्तावभ्यासेनादरातिशयेन सप्रकारकज्ञानविवक्षाबोधनरूपप्रयोजन-संभवेऽपि तत इत्यस्य 'भक्त्या मामभिजानाति' (गी. १८-४४) इत्यत्रोक्तभक्त्यर्थकत्वाङ्गीकारे पुनःप्रयोगवैयर्थ्यमेवेति तत इत्यस्य पूर्वोक्तभक्तिसजातीयदर्शनानन्तरकालिकभक्तिपरत्वमेव न्याय्यम् । तदनन्तरमित्यत्र तच्छब्दस्याप्रकृतपरामर्शित्वकल्पनाया अनौचित्येन बलवत्प्रारब्धकर्मभोगेन देहपातानन्तरमित्यर्थवर्णनं च न सङ्गच्छते । अतः तदनन्तरमिति सप्रकारकज्ञानोत्तरपरसंमतमुक्तिसाधननिर्विशेषज्ञानान्तर-व्यवधानराहित्यपरम्, न तु दर्शनोत्तरकालिकभक्तेर्निरसनपरम् ; भक्तिसाध्यत्वस्य मुक्तौ बहुत्र प्रतिपादनात् । दर्शनानन्तरभक्तिसाध्य-त्वस्य मुक्तावपि पूर्वमेव गीतायां स्थापनात् । उत्तरत्रापि 'मन्मना भव

भावप्रकाशः

मद्भक्तः —मामेवैष्यसि ' (गी. १८-६५) ' भक्तिं मयि परां कृत्वा— मामेवैष्यसि ' (गी. १८-६८) इति भक्त्या भगवत्प्राप्तिरुक्ता। तदनन्तरमित्यनेन सगुणोपासकानामर्चिरादिगत्या चतुर्मुखलोके स्थितानां निर्विशेषज्ञानेन मुक्तिरिति पक्षो निरस्तो भवति।

अष्टमे ' पुरुषस्स परः पार्थ ' (गी. ८-२२) इति श्लोके (शं)भाष्यभाष्योत्कर्षदीपिकयोर्ज्ञानलक्षणभक्त्या परमुक्तेरभिधानेन तदनन्तरमर्चिरादिगतिद्वारा ब्रह्मप्राप्तेर्गीतायां स्फुटमुक्त्याऽऽत्रापि गति-साध्या मुक्तिर्विवक्षिता । तत्रैव गतिनिरूपणानन्तरं ' तस्मा-त्सर्वेषु कालेषु योगयुक्तो भवार्जुन ' (गी. ८-२७) ' योगी परं स्थानमुपैति चाद्यम् ' (गी. ८-२८) इत्युक्तम् । अत्र स्थानशब्देन प्रकृतिमण्डलादूर्ध्वस्थानमेव विवक्षितं, न तु ब्रह्मस्वरूपम् । स्थान-शब्दवैयर्थ्यात् । ' भक्त्या मामभिजानाति ' (गी. १८-५५) इत्यनन्तरं ' सर्वकर्माण्यपि—शाश्वतं पदमव्ययम् ' (गी. १८-५६) ' तत्प्रसादात्—स्थानं प्राप्स्यसि शाश्वतम् ' (गी. १८-६२) इत्युक्त्या प्रकृतिमण्डलादूर्ध्वस्थानविशेषप्राप्तिरेव विवक्षितेति प्रतीत्या उभयोरैक-रस्यं सिध्यति । तत्रैव—

' तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ '

(गी. ८-७)

इत्युक्त्या ' अनन्यचेतास्सततं यो मां स्मरति–तस्याहं सुलभः— योगिनः ' (गी. ८-१४) इत्युक्त्या च गतिनिरूपणानन्तरं स्थानप्राप्ते-रभिधानेन भगवत्प्राप्तिःपूर्वोक्तगतिविशेषावच्छेदेनैव विवक्षितेति प्रतीयते।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।

**भावप्रकाशः**

मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥

(गी. ८-१६)

इत्यत्र ब्रह्मलोकस्य पुनरावृत्तिस्थानत्वोक्त्या तत्रोक्तभगवत्प्राप्तिरपि ब्रह्मलोकादूर्ध्वदेशावच्छेदेनैवेति प्रतीयते । एतत्स्वारस्यपर्यालोचनायां 'तत्र प्रयाता गच्छन्ति ब्रह्म' (गी. ८-२४) 'एकया यात्यनावृत्तिं' (गी. ८-२६) इत्यत्र गीतायां गतिद्वारा चतुर्मुखलोकं गतानां तत्र निर्विशेषसाक्षात्कारेण ब्रह्मप्राप्तिरपुनरावृत्तिरित्यर्थो न विवक्षित इति सिद्धम् ॥

अतः सगुणोपासकानां क्रममुक्तिविषयकतया परेषां नयनस्य गीतायां सगुणनिर्गुणोपासकभेदस्य क्वाप्यप्रतिपादनेन तथा तात्पर्यकल्पनस्य चासंभवेन भक्तिसाध्यमुक्तिसामान्यस्यार्चिरादिगतिसाध्यत्व - तात्पर्यकत्वस्य निर्मत्सराणां स्फुटतया 'भक्त्या मामभिजानाति' (गी. १८-५५) इति श्लोकस्यापि गतिसाध्यमुक्तिपरत्वमेव युक्तम् । 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३-२) इत्यत्र परसंमतार्थो गीतायां न विवक्षित इति पूर्वमेवोपपादितम् । तत्र 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं' 'क्षेत्रक्षेत्रज्ञयोरेवमन्तरं' (गी. १३-३४) इत्याद्युक्त्या पूर्वषट्कशेषत्वं तृतीयषट्कस्य प्रकाशितम् । तदुक्तं श्रीयामुनमुनिभिः 'पूर्वशेषोऽन्तिमोदितः' (गी. सं. ४ श्लो.) इति ॥

अतः कर्मोपासनकाण्डरूपत्वं पूर्वषट्कद्वयस्य' ज्ञानकाण्डरूपत्वं तृतीयषट्कस्य, 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३-२) इत्यस्य महावाक्यरूपत्वमित्यादिकं परसंमतं न गीतातात्पर्यविषयः । ध्यानज्ञानयोः परसंमतवैलक्षण्यस्य गीतायामनभिप्रेतत्वात् । 'तस्मात्सर्वेषु कालेषु मामनुस्मर' (गी. ८-७) 'पुरुषस्स परः पार्थ'

भावप्रकाशः

(गी. ८-२२) 'तस्मात्सर्वेषु कालेषु योगयुक्तो भव' (गी. ८-२७) 'सोऽविकम्प्येन योगेन युज्यते' (गी. १०-७) 'ददामि बुद्धियोगं तं' (गी. १०-१०) इत्यादौ योगकाल एव भक्तेः प्रतिपादनेन योगकालिकभक्तिव्यतिरिक्तायाः परमात्मज्ञानलक्षणाया भक्तेः क्वाप्यनुक्त्या परसंमतार्थस्य गीतानभिमतत्वस्य स्फुटत्वात् । अतः—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ।
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥

(गी. १२-७)

इत्यत्रापि भक्त्या मोक्षप्राप्तिरभिहिता ।

"तत्र चानन्या भक्तिरसाधारणो हेतुरित्युक्तम्—

पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।

(गी. ८-२२)

इति । अत्र पूर्वोक्तयोगधारणापूर्वकप्राणोत्क्रमणार्चिरादिमार्गगमनकालविलम्बादिक्लेशमन्तरेणैव साक्षान्मोक्षप्राप्तये भगवत्तत्त्वस्य तद्भक्तेश्च विस्तरेण ज्ञापनाय नवमोऽध्याय आरभ्यते । अष्टमे ध्येयब्रह्मनिरूपणेन तद्ध्याननिष्ठस्य गतिरुक्ता । नवमे तु ज्ञेयब्रह्मनिरूपणेन ज्ञाननिष्ठस्य गतिरुच्यते" इति नवमारम्भे ।

'सततं कीर्तयन्तो मां' (गी. ९-१४) इत्यत्र "मामिति पुनर्वचनं सगुणपरामर्शनार्थमन्यथा वैयर्थ्यप्रसङ्गात् ।" "तदेवं शमदमादिसाधनसंपन्नाः—सजातीयप्रत्ययप्रवाहेण श्रवणमननोत्तरभाविना सततं चिन्तयन्ति महात्मानः । अनेन निदिध्यासनं चरमसाधनं दर्शितम् ।

भावप्रकाशः

एतादृशसाधनपौष्कल्ये सति यद्वेदान्तवाक्यजमखण्डगोचरमहं ब्रह्मास्मीति ज्ञानं निरपेक्षमेव साक्षान्मोक्षहेतुः, न तु भूमिजयक्रमेण भ्रूमध्ये प्राणप्रवेशनं मूर्धन्यया नाड्या प्राणोत्क्रमणं अर्चिरादिमार्गेण ब्रह्मलोकगमनं तद्भोगान्तकालविलम्बं वा प्रतीक्षते। अतो यत्प्राक्प्रतिज्ञातं—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे। ज्ञानं
(गी. ९-१)

इति तदेतदुक्तम्। फलं चास्याशुभान्मोक्षणम्। एवमत्रायं गम्भीरो भावो भगवतः।" इति,

द्वादशे—'ये तु सर्वाणि कर्माणि' (गी. १२-६) इत्यत्र "सगुणोपासनया निरस्तसर्वप्रतिबन्धानां विना गुरूपदेशं विना च श्रवणमनननिदिध्यासनाद्यावृत्तिक्लेशं स्वयमाविर्भूतेन वेदान्तवाक्येनेश्वरप्रसादसहकृतेन तत्त्वज्ञानोदयादविद्यातत्कार्यनिवृत्त्या ब्रह्मलोक एवैश्वर्यभोगान्ते निर्गुणब्रह्मविद्याफलपरमकैवल्योपपत्तेः 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (प्र. उ. ५-५) इति श्रुते·" "इममर्थमाह द्वाभ्यां—ये त्विति।" "तेषामहं सततोपासितो भगवान् समुद्धर्ता सम्यगनायासेन उद्धर्वे सर्वबाधावधिभूते शुद्धे ब्रह्मणि धर्ता धारयिता ज्ञानावष्टम्भदानेन भवामि न चिरात् क्षिप्रमेव तस्मिन्नेव जन्मनि" इति मधुसूदनसरस्वतीविवरणमनुपादेयम्। अष्टमस्य ध्येयब्रह्मनिरूपणपरत्वं नवमस्य ज्ञेयब्रह्मनिरूपणपरत्वमिति विभागस्यैव निर्मूलत्वात्। 'ते ब्रह्म तद्विदुः' (गी. ७-२९) इति सप्तमान्ते वेद्यत्वेनोक्तब्रह्मण एव 'किं तद्ब्रह्म' (गी. ८-१) 'अक्षरं ब्रह्म परमं' (गी. ८-३) इति प्रश्नप्रतिवचनप्रतिपाद्यत्वात्। 'पुरुषस्स परः पार्थ'

## भावप्रकाशः

(गी. ८-२२) इति श्लोके ज्ञानलक्षणभक्त्या परमकैवल्यस्य भाष्य-भाष्योत्कर्षदीपिकयोः स्थापनात् । 'अनन्यचेतास्सततं यो मां स्मरति' (गी. ८-१४) इति स्मृतिविषयत्वमष्टमे यदुक्तं तदेव नवमेऽपि 'अनन्याश्चिन्तयन्तो मां' (गी. ९-२२) इत्यत्रोक्तमित्युभयत्र स्मृति-विषयत्वस्याविशेषेणोक्तावेकस्य ध्येयब्रह्मनिरूपणपरत्वमन्यस्य ज्ञेयब्रह्म-निरूपणपरत्वमिति कथं वा व्यवस्थाप्यते । नवमे 'महात्मानस्तु मां पार्थ' (गी. ९-१३) 'सततं कीर्तयन्तो मां' (गी. ९-१४) इत्यत्रोक्त-भक्तिरुपासनाकालिक्येवेत्युपासत इत्यनेन प्रतीयते । 'अनन्याश्चिन्त-यन्तो मां' (गी. ९-२२) इत्यत्र पर्युपासत इत्यनेन परित उपासनं 'सततं कीर्तयन्तो मां' (गी. ९-१४) इत्यत्रेवोपासनमिति स्पष्टं प्रतीयते । 'अनन्यचेतास्सततं' (गी. ८-१४) इति श्लोके नित्ययुक्त इति पदं वर्तते । तेन 'तेषां ज्ञानी नित्ययुक्तः' (गी. ७-१७) इत्यैकार्थ्यं प्रतीयते । 'अनन्याश्चिन्तयन्तः' (गी. ९-२२) इति श्लोकेऽपि नित्याभियुक्तानामित्येतत्पर्यालोचनायामेतेषां श्लोकानामेक-विषयत्वं प्रतीयते, न तु 'अनन्यचेतास्सततं' (गी. ८-१४) 'सततं कीर्तयन्तो मां' (गी. ९-१४) इत्यनयोस्सगुणोपासनविषयत्वमन्ययोस्तु निर्गुणविषयकत्वमिति विभागः ।

'अनन्याश्चिन्तयन्तो मां' (गी. ९-२२) 'पुरुषस्स परः पार्थ' (गी. ८-२२) 'सततं कीर्तयन्तो मां' (गी. ९-१४) इत्येषां सगुणोपासनस्यार्चिरादिगतिमन्तरैव निर्गुणविद्यया परमकैवल्यलाभपरत्वं 'ये तु सर्वाणि कर्माणि' (गी. १२-६) 'तेषामहं समुद्धर्ता' (गी. १२-७) इत्यस्य ब्रह्मलोक एवैश्वर्यभोगान्ते निर्गुणविद्यया परमकैवल्यपरत्वं भवन्मतरीत्या यदुक्तं तदपि न संभावनार्हम् ।

### भावप्रकाशः

सगुणोपासनस्यार्चिरादिगतिमन्तरा निर्गुणविद्याद्वारा क्रममुक्तिफलकत्वस्याभ्युपगन्तृभिः 'ये तु सर्वाणि' (गी. १२-६) इत्यत्र 'भवामि न चिरात्' (गी. १२-७) इति स्वारस्यानुरोधेनार्चिरादिगत्या ब्रह्मलोकगमनमन्तरैव निर्गुणविद्यया मुक्तेरेव शीघ्रफलत्वसंभवेनैतत्परत्वकल्पनस्यैवोचितत्वात्। 'अनन्यचेताः' (गी. ८-१४) इत्याद्यनन्तरमार्चिरादिगतिप्रतिपादनेनार्चिरादिगत्या ब्रह्मलोकगमनानन्तरं निर्गुणविद्यया मुक्तिपरत्वाङ्गीकारेऽपि पुनर्वेदान्तश्रवणादिनैरपेक्ष्यसत्त्वेन सौलभ्यं संभवत्येवेति 'अनन्यचेताः' (गी. ८-१४) इत्यादेरर्चिरादिगतिमन्तरैवेहैव निर्गुणविद्यया मुक्तिपरत्वकल्पनस्यानुचितत्वात्।

'स्वे स्वे कर्मण्यभिरतः' 'मद्भक्तिं लभते पराम्' (गी. १८-४५) 'भक्त्या ... ' (गी. १८-५५) 'सर्वकर्माण्यपि सदा कुर्वाणः' (गी. १८-५६) 'स्थानं प्राप्स्यसि शाश्वतम्' (गी. १७-६२) इत्येतत्सर्वं समानार्थकम्। उभयत्रोक्तोऽधिकार्येक एव। 'भवामि न चिरात्' (गी. १२-७) इति 'ततो मां तत्वतो ज्ञात्वा' (गी. १८-५५) इत्यत्र 'विशते तदन्तरं' इत्येतत्समानतात्पर्यकम्। द्वादशे अक्षरोपासकस्याभिहिता मुक्तिः विलम्बिता क्रममुक्तिरेवेत्येतेन सिद्धम्। अतो योगो भक्तिर्ज्ञानमित्यादिगीतानिर्देशेषु एकाधिकारिकमेकफलकमेव ज्ञानं विवक्षितम्।

एतेन 'योगी परं स्थानमुपैति चाद्यम्' (गी. ८-२८) इत्यत्र "योगी ध्यानयोगी आद्यं परं क्रमेणोपैति" (भा. उ. दी.)इति, "अत्र परमिति कैवल्यलक्षणो निर्गुणमोक्षोऽव्यक्तासक्तज्ञानिप्राप्य उक्तः। 'स्थानमुपैति चाद्यं' (गी. ८-२८) इति तु वासुदेवस्सर्वमिति मन्वानानां भक्तोत्तमानां वैकुण्ठप्राप्तिरूपसगुणमोक्षः। निर्गुणे सामीप्या-

## भावप्रकाशः

संभवेन उपोपसर्गवैयर्थ्यापत्तेः, आद्यशब्दस्वारस्यभङ्गाच्च। आद्यपदेन हि सर्वादावभिव्यक्तसगुणमेव लक्ष्यते। तथा स्थानपदमपि सगुण एव सगच्छते। एवं द्विविधमोक्षाभ्युपगमस्सूपपद्यत इति वामनाशयः" (अ. वि. गीता) इत्यादिकल्पनं 'परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड. उ. ३-२-७) इति श्रुत्यर्थविशदीकरणरूपे गत्या ब्रह्मप्राप्तिप्रतिपादनानन्तरगीतावाक्ये न विवक्षितम्। तत्र दिव्यमितिपदतात्पर्यमेव स्थानपदेन प्रकाशितम्। तत्र उपेत्युपसर्गेण स्थानविशेषावच्छेदेनैव परप्राप्तिर्विवक्षितेत्याशयो गीताचार्येण विशदीकृतः। चकारस्यानुक्तसमुच्चायकत्वनिर्बन्धेऽपि परब्रह्मणः प्रकृतिमण्डलादूर्ध्वस्थानस्य चोभयोः प्राप्यत्वविवक्षया देशविशेषावच्छेदेनैव परब्रह्मप्राप्तिर्विवक्षितेति पर्यवसन्नम्। अत्र द्वादशवदधिकारिद्वयस्य पूर्वमप्रस्तुततयाऽधिकारिद्वयफलकल्पनमौत्प्रेक्षिकमेव।

एतेन "अनन्यचेतास्सततं, (गी. ८-१४) इति श्लोके भगवत्तत्त्वविज्ञानात् साक्षात्, 'अन्तकाले च मामेव' (गी. ८-५) इति श्लोके सगुणब्रह्मस्मरणपक्षे मद्भावप्राप्तिः क्रमेण, निर्गुणस्मरणपक्षे तु सद्यः। 'कलेबरं मुक्त्वा' इति निर्गुणब्रह्मस्मरणपक्षे लोकदृष्ट्यभिप्रायम्" इत्यादिमधुसूदनादिविवरणमपि सगुणनिर्गुणयोरुभयोरपि स्मृतिविषयत्वमेव प्रकाशयतीति स्मृतेर्भ्रमत्वं ज्ञानस्य प्रमात्वमिति स्वसिद्धान्तं विघटयति। 'त्यजन् देहं प्रयाति' इत्युक्त्या मुक्तेर्देहत्यागानन्तरकालिकत्वप्रतिपादनेन मुक्तिसामान्यमपि देहत्यागानन्तरकालिकमेवेति प्रतीत्या सगुणनिर्गुणविभागोऽप्रामाणिक एवेति सिध्यति। 'महात्मानस्तु मां पार्थ' (गी. ९-१३) 'सततं कीर्तयन्तो मां' (गी. ९-१४) इत्यत्रोक्ताया एव भक्तेः 'मन्मना भव मद्भक्तः'

तत्त्वमुक्ताकलापः

## सर्वं तद्वित्तिमात्रे फलवति विफलं

सर्वार्थसिद्धिः

फलितमनिष्टप्रसङ्गमाह—सर्वं तदिति। निगमयति—

आनन्ददायिनी

ननु वरणीयताप्रयोजकं भक्तिरूपं मा भूत्; उपासनात्मकमेवास्त्विति चेत् 'भक्त्या त्वनन्यया' 'नाहं वेदैः' 'भक्त्या लभ्यस्त्वनन्यया' इत्याद्युपबृंहणाच्च तद्रूपत्वं सिध्यतीति ध्येयम्। **फलितमिति।**

भावप्रकाशः

(गी. १८-६५) इत्यत्र मामेवैष्यसीत्यनेन 'पुरुषस्स परः पार्थ भक्त्या लभ्यः' (गी. ८-२२) इत्यत्रोक्तलाभफलकत्वमेव प्रतिपादितम्। तच्च पूर्वमेव गतिद्वारकं निरूपितमित्यत्रापि गतिद्वारकं तद्विवक्षितम्, 'इदं तु ते गुह्यतमं' (गी. ९ १) इत्यध्यायादावुक्तिवत्। अष्टादशेऽपि 'सर्वगुह्यतमं भूयः' (गी. १८-६४) इति प्रक्रम्य 'मन्मना भव मद्भक्तः' (गी. १८-६५) इति पूर्ववदेवाभिधाय मामेवैष्यसीत्युक्त्याऽत्रापि गतिद्वारक एव सगुणलाभो विवक्षित इति निश्चीयते। एतेनाष्टादशे तत्पूर्वं 'भक्त्या मामभिजानाति' (गी. १८-५५) इत्यादौ प्रवेशोऽर्चिरादिगतिद्वारा सगुणलाभरूप एव विवक्षितः, तदनन्तरं स्थानप्राप्तेः प्रतिपादनादिति पूर्वोक्तार्थोऽप्रकम्प्यः। एवं च 'यमेवैष वृणुते तेन लभ्यः' (कठ. उ. २-२-२३ मुण्ड. उ. ३-३-३) 'यस्य देवे परा भक्तिः' (श्वे. उ. ६-२३) इति श्रुतितात्पर्यप्रकाशिनी गीता भगवद्यामुनमुनिसंगृहीतदिशा भक्तिमेवाहेति सिद्धम्।

समाधेर्मुक्तिसाधनत्वस्य श्रुतिस्मृतियोगसूत्रसिद्धतायाः प्रागुपपादनेन 'प्रीतिरूपमेव ज्ञानं प्रकरणविशेषात्समाधिः' इति न्यायपरिशुद्ध्युक्तनिष्कर्षमनुसृत्य भक्तिरूपत्वपर्यन्तविशेषणविशिष्टत्वं मोक्ष-

### तत्त्वमुक्ताकलापः

## तेन सैवं विशिष्टा ॥ ३० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीवेदान्ताचार्यस्य कृतिषु तत्त्वमुक्ताकलापे जीवसरे मोक्षोपायभक्तिनिरूपणम्.

---

### सर्वार्थसिद्धिः

**तेनेति** । सा मुक्तिसाधनतयोक्ता हि वित्तिर्भक्तिरूपत्वपर्यन्तविशेषणविशिष्टेत्यर्थः ॥ ३० ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीवेदान्ताचार्यस्य कृतिषु सर्वार्थसिद्धौ जीवसरे मोक्षोपायभक्तिनिरूपणम् .

---

### आनन्ददायिनी

ज्ञानमात्रस्यैव साधनत्वे भक्तिध्यानाद्युक्तिर्विफलेति भावः । विस्तरस्तु शतदूषणीवेदान्तविजयादिष्वाचार्यैः प्रपञ्चित ॥ ३० ॥

इति श्रीसर्वार्थसिद्धिव्याख्यायां श्रीनृसिंहदेवविरचितायां आनन्ददायिन्यां जीवसरे मोक्षोपायभक्तिनिरूपणम्.

---

### भावप्रकाशः

साधनावित्ताववश्यमेषितव्यमिति निगमयति---**सा मुक्तिसाधनतयोक्ता हि वित्तिरित्यादिना** ॥ ३० ॥

पुंसामाशयभेदा बहुधा प्रचरन्ति लोक इति सुधियाम् ।
आचार्यपादभावप्रकाशनान्नापराध्यति जनोऽयम् ॥
दोष यद्यप्यस्मिन् दोषज्ञानां स्फुरेयुरेवमपि ।
तेषामपि गुणलेशः प्रतिभायाच्चेत्प्रमोदमातनुते ॥

इति श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक–श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालयतिविरचित-श्रीसर्वार्थसिद्धिटिप्पणे लघुनि भावप्रकाशे जीवसरे मोक्षोपायभक्तिनिरूपणम्.

# परिशिष्टम्

36 तमे पुटे 3 यपङ्क्तौ भावप्रकाशे 'भावः' इत्यनन्तरं—

"अत एव 'जीवानुप्रवेशेषु शोकादयो जीवांशगताः। साक्षाद्‌वतारेष्वभिनयमात्रम्' इत्यन्तराधिकरणे व्यासार्योक्तिस्संगच्छते"

इत्ययमधिको ग्रन्थः पाठ्यः।

40 तमे पुटे 7मपङ्क्तौ सर्वार्थसिद्धौ 'हिरण्यगर्भादिविपाकवदित्यर्थः' इत्यनन्तरं—

"ननु हिरण्यगर्भादिपदविपक्तिस्तस्य प्रागसिद्धाऽपि पुरुषान्तरसिद्धजातीयेति चेत्, तत्वज्ञानवैराग्यादिसंपदपि तथैव। दृष्टं चैतद्गुरुशिष्यक्रमे। आद्यमुक्तस्य ततः पूर्वमदृष्टजातीयेति चेन्न। आद्यमुक्तानिरुक्तेः। यद्यसौ पूर्वमुक्त एव; [1]उक्तोत्तरमेतत्। अथ मुक्तेष्वादिः; स कथं त्वया विदितः?। ततः पूर्वं मुक्ताभावादिति चेत्; तमपि कथं वेत्थ? अनादिमुक्तौ व्याघातादिति चेन्न। मुक्तप्रवाहे व्याघाताभावात्। न ह्यनादिमुक्तः कश्चिद्बध्यते; साध्यमोक्षो वा भवेत्; येन व्याघातस्स्यात्। किं त्वनादिबद्धास्सर्वे[2]पि लब्धोपायाः क्रमेण मुच्यन्ते। तत एव मोक्षशास्त्रप्रामाण्यं निर्बाधमिति"

इत्ययं ग्रन्थः पाठ्यः॥

40 तमे पुटे 11 पङ्क्तौ आनन्ददायिन्यां 'स्वर्गाद्यैश्वर्याणा[2]मित्यर्थः' इत्यनन्तरं—

"प्रकृत्यादिचिन्तनस्य संनिहितत्वाभावाद्धिरण्यगर्भादिविपाकस्य पूर्वार्धे विपाकशब्देन संनिहितत्वाच्चाह—यद्वेति;

---

[1]दत्तोत्तर—पा. [2]मित्यर्थः। विपक्तिशब्देन हिरण्यगर्भादिविपाकस्य सनिहितत्वादाह— यद्वेति।—ग.

गुरुशिष्यक्रम इति । व्यासपराशरादिगुरुशिष्य[1] प्रतिपादनपरशास्त्र इत्यर्थः। नन्वाद्यमुक्तस्य ततः प्राङ्मुक्ता-[2]भावान्मुक्तिसाधने प्रवृत्तिर्न स्यात् ; अनन्यथासिद्धनियतपूर्ववृत्तिजातीयत्वादिरूपकारणताग्रहासंभवादिति शङ्कते—आद्यमुक्तस्येति । यद्यसाविति । एतत्कालीनापेक्षया पूर्व इत्यर्थः। उक्तोत्तरमिति । ततः प्राक्तनस्य मुक्तस्य संभवादिति भावः। ननु यदपेक्षया [3]मुक्तौ प्राक्त्न, तस्यादित्वमिति व्याप्तया ततः प्राङ्मुक्ताभावरूपलिङ्गात् ज्ञायत इति शङ्कते—तत इति। तर्हि[4]लिङ्गज्ञानमेव नास्तीत्यसिद्धिरित्याह—तमपीति। ननु ततः पूर्वमपि स मुक्त[5]श्चेत्तर्हि मुक्तानामादिमत्त्वं वक्तव्यम् ; ततश्च व्याघात इति तस्य सादित्वे [6]यदा मुक्तो भवति ततः प्राङ्मुक्ताभाव इति ज्ञायत इत्याशङ्कते—अनादीति। नन्वेवंकल्पने किं प्रमाणमित्यत्राह—अत एवेति। अन्यथा मोक्षशास्त्रस्य अननुष्ठान[7]लक्षणाप्रामाण्येन वैयर्थ्यप्रसङ्गादित्यर्थः ॥"

इत्ययं ग्रन्थः पाठ्यः।

45 तमे पुटे 7 मपङ्क्तौ भावप्रकाशे 'सूक्तौ' इत्यनन्तरं—

"गुणत्वं—

'गुणो ज्यासूत्रतन्तुषु ।
रज्जौ सत्वादिसन्ध्यादौ शौर्यादौ भीम इन्द्रिये ।
रूपादावप्रधाने च दोषान्यस्मिन् विशेषणे'। (अमरकोशे क्ष-व-८५ श्लो)

इत्यमरसुधोदाहृतहैमवचनेन गुणशब्दस्य दोषान्यार्थकतया दोषान्यत्वरूपं विवक्षितम्। तच्च"

इत्ययमधिको ग्रन्थः पाठ्यः।

---

[1] प्रतिपादकग्रन्थ इत्यर्थ.—ग. [2] भावानन्यथासिद्धनियतपूर्ववर्तिसजातीयत्वादिरूपकारणताग्रहासभवेन प्रवर्तकज्ञानाभावात्प्रवृत्तिर्न स्यादिति शङ्कते—ग. [3] 'मुक्त.' इति पाठेनात्र भाव्यमिति भाति. [4] लिङ्गाज्ज्ञानमेव—ग. [5] श्चेत्तस्यानादित्वं—ग. [6] यदा स मुक्तिसाधने प्रवर्तते तत प्राङ्मुक्ताभाव इति शङ्कते—ग. [7] लक्षणाप्रामाण्यं वैयर्थ्य

80 तमे पुटे 18 पङ्क्तौ भावप्रकाशे 'अभिनयः' इत्यनन्तरं—

"स्वलीलया जगदुपकाराय स्वेच्छावतारः (वे सं.) इत्यादि भगवदुक्तेः 'जीवानुप्रवेशेषु शोकादयो जीवांशगताः साक्षादवतारेष्वभिनयमात्रम्।' इत्यन्तराधिकरणे व्यासार्योक्तेश्च। अत्र जीवानुप्रवेशेष्विति वाक्येन पूर्वं ३६ तम पुटे प्रदर्शितभट्टार्यसूक्तेरर्थो निर्णीतः"

इत्ययमधिको ग्रन्थः पाठ्यः।

82 तमे पुटे 10मपङ्क्तौ भावप्रकाशे 'परमित्युक्तम्' इत्यनन्तरं—

"भट्टार्यसूक्तौ परविभवैक्यं विवक्षितम्। अत एव 'रजोनुप्रवेशेषु शोकादयो जीवांशगताः' इति व्यासार्यसूक्तिस्संगच्छते"

इत्ययमधिको ग्रन्थः पाठ्यः।

82 तमे पुटे 11 पङ्क्तौ भावप्रकाशे 'बोध्यम्' इत्यनन्तरं—

"अत एव विभवभेदविवक्षया 'साक्षादवतारेष्वभिनयमात्रम्' इति व्यासार्यसूक्तिस्संगच्छेते"

इत्ययमधिको ग्रन्थः पाठ्यः।

95 तमे पुटे 2य पङ्क्तौ तत्वमुक्ताकलापे 'भक्तिः' इत्यनन्तरं—

'मुक्तेरुपायः श्रुतिशतविहितः'

इति पठनीयम्।

95 तमे पुटे 4र्थपङ्क्तौ सर्वार्थसिद्धौ 'भक्तिरिति' इत्यनन्तरं—

"श्रुतिशतविहितो मुक्तेरुपायो भक्तिरित्यन्वयः। ब्रह्मविद्ययैव मुक्तिरिति सिद्धान्तः। भक्तिशब्दस्त्वष्टविधत्वादिवचनैरन्यार्थः"

इत्ययं ग्रन्थः पाठ्यः।

95 तमे पुटे 8मपङ्क्तौ आनन्ददायिन्यां 'इति भावः' इत्यनन्तरं—

"यथाश्रुतान्वये भक्तिरप्युपाय इति सिध्यति, न तु भक्तिरेवेत्यत्राह—श्रुतिशतेति"।

इत्ययं ग्रन्थः पाठ्यः।

223 तमे पुटे 17 पङ्क्तौ भावप्रकाशे 'इत्युक्तम्' इत्यनन्तरं—

"सर्ववेदान्तसिद्धान्तसारसंग्रहे शंकराचार्यैः निर्विकल्पसमाधिर्ब्रह्मणि वृत्तिरित्युक्तम्"

इत्यधिको ग्रन्थः पाठ्यः॥

———

मैसूरुप्राच्यविद्यासंशोधनसंस्थायां परिष्कृत्य देवनागराक्षरैः संमुद्र्य प्रकाशिताः

# संस्कृतग्रन्थाः

---

| | ग्रन्थनाम | | मूल्यम् रू. | आ. |
|---|---|---|---|---|
| * 1 | आपस्तम्बगृह्यसूत्रम्, सुदर्शनार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम्. | .... | 1 | 12 |
| * 2 | आपस्तम्बयज्ञपरिभाषासूत्रम्, हरदत्तकपर्दिस्वामिभाष्याभ्यां सहितम्. | .... | 1 | 0 |
| * 3 | माधवीयधातुवृत्तिः (अदादि-दिवादि-जुहोत्यादयः) | .... | 2 | 0 |
| * 4 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा, भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, प्रथमं संपुटम्. | .... | 2 | 8 |
| * 5 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, द्वितीयं संपुटम्. | .... | 2 | 8 |
| * 6 | दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यटीकासहितम् | .... | 1 | 4 |
| * 7 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, तृतीयं संपुटम्. | .... | 3 | 0 |
| * 8 | श्रीभगवद्गीता, श्रीशङ्कराचार्यभाष्यसहिता | .... | 2 | 12 |
| * 9 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्ययुता च, चतुर्थं संपुटम्. | .... | 3 | 0 |
| *10 | मण्डलब्राह्मणोपनिषत् .... | .... | 0 | 6 |
| *11 | सौन्दर्यलहरी (प्रथममुद्रणम्) .... | .... | 1 | 0 |

---

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | मूल्यम्—रू. आ. |
|---|---|---|---|
| *12 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्ट-भास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, पञ्चमं संपुटम्. | 3 | 0 |
| *13 | ,, ,, दशमं संपुटम् | 3 | 0 |
| *14 | ,, ,, एकादशं संपुटम् | 3 | 0 |
| *15 | आपस्तम्बधर्मसूत्रं हरदत्ताचार्यप्रणीतोज्ज्वलाख्य-वृत्तियुतम्. | 1 | 12 |
| *16 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्ट-भास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, अष्टमं संपुटम्. | 3 | 0 |
| *17 | ,, ,, नवमं संपुटम् | 2 | 4 |
| *18 | ,, ,, द्वादशं संपुटम् | 1 | 12 |
| *19 | श्रीशङ्कराचार्यप्रबन्धावली, प्रथमसंपुटम्, (श्रीविष्णु-सहस्रनाम-सनत्सुजातीयभाष्यम्). | 1 | 4 |
| *20 | ,, द्वितीयसंपुटम्, (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च). | 1 | 4 |
| *21 | ,, तृतीयसंपुटम्, (उपदेशसाहस्री गद्य-पद्योभयात्मिका, रामतीर्थव्याख्यायुता). | 2 | 0 |
| *22 | ,, चतुर्थसंपुटम्, (आत्मबोध-विवेक-चूडामणि-वाक्यवृत्ति-स्वात्मनिरूपण-योग-तारावली-सर्ववेदान्तसिद्धान्तसारसंग्रहाः). | 1 | 0 |
| *23 | माधवीयधातुवृत्तिः भ्वादौ प्रथमसंपुटम् | 2 | 0 |
| *24 | ,, ,, द्वितीयसंपुटम् | 2 | 0 |
| *25 | गोत्रप्रवरनिबन्धकदम्बम् | 2 | 0 |
| *26 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्यसहितम्, प्रथमसंपुटम् (1-4 प्रश्नाः). | 1 | 12 |
| *27 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्यसहितम्, द्वितीयसंपुटम् (5–6 प्रश्नौ). | 1 | 0 |
| *28 | एकाग्निकाण्डः सस्वरचिह्नः, हरदत्तीयभाष्यसहितः | 1 | 4 |

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|
| *29 | तैत्तिरीयारण्यकम्, सस्वरचिह्नं, भट्टभास्करीय-भाष्यसहितं, तृतीयसंपुटम् (7-8 प्रश्नौ). | 1 | 0 |
| *30 | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता .... | 2 | 0 |
| *31 | माधवीयधातुवृत्तिः, स्वादिमारभ्य समग्रा | 2 | 0 |
| *32 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम् (प्रथममुद्रणम्) | 2 | 4 |
| *33 | तैत्तिरीयप्रातिशाख्यम्, वैदिकाभरणत्रिभाष्य-रत्नाख्यव्याख्याद्वययुतम्. | 4 | 0 |
| *34 | बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमेतम्. | 3 | 0 |
| *35 | भाट्टदीपिका, प्रथमसंपुटम् (तृतीयाध्याये तुरीय-पादान्तम्). | 3 | 0 |
| *36 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम् भट्टभास्करीय-भाष्ययुतम्. | 3 | 8 |
| *37 | कौटलीयमर्थशास्त्रम् (प्रथममुद्रणम्) .... | 3 | 0 |
| *38 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय भाष्यसहितम् (तृतीयाष्टके 1-7 प्रश्नाः). | 3 | 8 |
| *39 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशसहितम्, I सं. | 3 | 0 |
| *40 | भाट्टदीपिका, द्वितीयसंपुटम्, (तृतीयाध्याये पञ्चम-पादप्रभृति सप्तमाध्यायान्तम्). | 3 | 0 |
| 41 | खादिरगृह्यसूत्रम्, रुद्रस्कन्दीयवृत्तिसहितम् | 1 | 0 |
| *42 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्ययुतम् (तृतीयाष्टके 8-12 प्रश्नाः). | 2 | 4 |
| 43 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, संस्कारकाण्डः | 1 | 8 |
| 44 | ,, ,, आह्निककाण्डः | 2 | 8 |
| 45 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे प्रथमसंपुटम्. | 2 | 0 |
| *46 | भाट्टदीपिका, तृतीयसंपुटम् (अष्टमाध्यायप्रभृति दशमे 4 पादान्तम्). | 2 | 8 |

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रययात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | मूल्यम्--रू. | आ |
|---|---|---|---|---|
| *47 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, II सं. समन्वयाधिकरणप्रभृति आकाशाधिकरणान्तम्. | .... | 3 | 0 |
| 48 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे द्वितीयसंपुटम्. | .... | 3 | 0 |
| *49 | भाट्टदीपिका, खण्डदेवकृता, चतुर्थसंपुटम् (दशमाध्याये पञ्चमपादप्रभृति समग्रम्). | .... | 3 | 0 |
| *50 | गौतमधर्मसूत्रम्, मस्करिभाष्ययुतम् ... | .... | 3 | 8 |
| *51 | अलङ्कारमणिहारः, प्रथमसंपुटम् (समासोक्त्यलङ्कारान्तः). | .... | 3 | 0 |
| 52 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, श्राद्धकाण्डः | .... | 3 | 4 |
| 53 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, III सं. (प्राणाधिकरणप्रभृति प्रथमे द्वितीयपादान्तम्). | ... | 4 | 0 |
| *54 | कौटलीयमर्थशास्त्रम् (द्वितीयमुद्रणम्) | .... | 3 | 0 |
| *55 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम् (द्वितीयमुद्रणम) | .... | 2 | 4 |
| 56 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, आशौचकाण्डः. | .... | 1 | 8 |
| 57 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयक्काचित्कसायणभाष्याभ्यां युतम्, द्वितीयाष्टकम्. | ... | 3 | 8 |
| 58 | अलङ्कारमणिहारः, द्वितीयसंपुटम् (परिकरालङ्कारप्रभृति मालादीपकालङ्कारान्तः). | .... | 3 | 8 |
| 59 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, IV सं. (प्रथमाध्याये तृतीयपादे आदितः अपशूद्राधिकरणान्तम्. | .... | 3 | 8 |
| *60 | काव्यप्रकाशः, मम्मटभट्टकृतः, माणिक्यचन्द्रकृतसङ्केताख्यटीकायुतः. | ... | 3 | 8 |
| 61 | आयुर्वेदसूत्रम्, योगानन्दनाथभाष्यसहितम् | .... | 2 | 0 |

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| 62 | अलंकारमणिहारः, तृतीयसंपुटम् (सारालङ्कारप्रभृतिहेत्वलङ्कारान्तः). | .... | 2 | 8 |
| 63 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् I सं. (1–5 अध्यायाः). | .... | 2 | 0 |
| *64 | कौटलीयमर्थशास्त्रम्, (तृतीयमुद्रणम्) ... | .... | 3 | 0 |
| 65 | अर्थशास्त्रपदसूची प्रथमसंपुटम् .... | .... | 2 | 8 |
| 66 | ,, द्वितीयसंपुटम् ... | .... | 2 | 8 |
| 67 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, II सं. (6–10 अध्यायाः). | .... | 2 | 0 |
| 68 | अर्थशास्त्रपदसूची, तृतीयसंपुटम् .. | .... | 2 | 0 |
| 69 | अभिलषितार्थचिन्तामणिः, प्रथमसंपुटम् | .... | 2 | 0 |
| 70 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, III सं. (11–15 अध्यायाः). | .... | 1 | 8 |
| 71 | सरस्वतीविलासः, व्यवहारकाण्डः .... | ... | 2 | 8 |
| 72 | अलङ्कारमणिहारः, चतुर्थसंपुटम् (रसवदलङ्कारप्रभृति समग्रः). | .... | 2 | 4 |
| 73 | आपस्तम्बशुल्बसूत्रम्, कपर्दीय — करविन्दीय — सुन्दरराजीयव्याख्याभिस्सहितम्. | ... | 2 | 12 |
| 74 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, प्रथमपरिच्छेदः. | .. | 3 | 0 |
| 75 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, I सं. (प्रथमपरिच्छेदे विश्वमिथ्यात्वप्रभृत्यागमादिबाधोद्धारान्ता). | .. | 3 | 12 |
| 76 | तत्त्वमुक्ताकलापः, श्रीवेदान्ताचार्यकृतसर्वार्थसिद्धितद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, प्रथमो जडद्रव्यसरः. | ... | 4 | 0 |
| 77 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, II सं (द्वितीयपरिच्छेदे विधिवादान्तम). | .... | 2 | 0 |

* एतच्चिह्नाङ्किता ग्रन्थाः सम्प्रति विक्रयायात्र नोपलभ्यन्ते

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| 78 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिका-टीकायुता, II सं. प्रथमपरिच्छेदे असतस्साधकत्वोपपत्तिप्रभृति अविद्याप्रतिपादकश्रुत्युपपत्तिपर्यन्ता. | .... | 3 | 4 |
| 79 | तर्कताण्डवम्, न्यायदीपाख्यव्याख्यायुतम्, III सं. | .... | 2 | 0 |
| 80 | अद्वैतसिद्धिः गुरुचन्द्रिकोपेता, III संपुटम् | .... | 2 | 4 |
| 81 | तत्त्वमुक्ताकलापः, श्रीवेदान्ताचार्यकृतसर्वार्थसिद्धि-तद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, II सं. | .... | 3 | 0 |
| 82 | तर्कताण्डवम्, न्यायदीपाख्यव्याख्यायुतम्, IV सं. | .... | 2 | 4 |
| 83 | वाक्यार्थरत्नम्, सुवर्णमुद्रिकाख्यव्याख्यासमलङ्कृतम् | .... | 1 | 0 |
| 84 | तत्त्वार्थसूत्रं, श्रीमदुमास्वामिविरचितम्, श्रीभास्करनन्दि-विरचितसुखबोधाख्यवृत्तियुतम्. | | 2 | 4 |
| *85 | सौन्दर्यलहरी, श्रीशङ्कराचार्यविरचिता लक्ष्मीधरव्याख्या-समलंकृता, भावनोपनिषत् भास्करराजभाष्यसहिता, देवीपञ्चस्तवी च. (द्वितीयमुद्रणम्). | | 2 | 8 |
| 86 | यादवाभ्युदयकाव्यम्, श्रीवेदान्ताचार्यविरचितं श्रीमद-प्पय्यदीक्षितेन्द्रविरचितव्याख्यासमलङ्कृतम्, प्रथम-संपुटम् (सर्गाः 13-18). | | 3 | 4 |
| 87 | आपस्तम्बश्रौतसूत्रम् श्रीरामाग्निचिद्वृत्तिसहितधूर्त-स्वामिभाष्यभूषितम्, I सं. (प्रश्नाः 1—5). | .... | 4 | 0 |
| 88 | प्रमेयरत्नालङ्कारः अभिनवचारुकीर्तिपण्डिताचार्यविरचितः | | 2 | 12 |
| 89 | यादवाभ्युदयकाव्यं श्रीवेदान्ताचार्यविरचितम् श्रीमदप्पयदीक्षितेन्द्रकृतव्याख्यासमलङ्कृतम् द्वितीयसंपुटं (19-24 सर्गाः). | ... | 5 | 0 |
| 90 | शैवपरिभाषा शिवाग्रयोगिकृता | ... ... | 3 | 0 |
| 91 | सौन्दर्यलहरी शंकराचार्यकृता लक्ष्मीधराचार्यकृत-व्याख्यायुता. भास्कररायकृतभाष्यसहिता भावनोपनिषत्. कालिदासकृता पञ्चस्तवी च. (तृतीयमुद्रणम्). | ... | 3 | 0 |

* एतच्चिह्नाङ्किता ग्रन्थाः सम्प्रति विक्रयायात्र नोपलभ्यन्ते.

| ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|
| 92 प्राकृतमणिदीपः, श्रीमदप्पयदीक्षितसुधीप्रणीतः, तिरु तिरु—श्रीनिवासगोपालाचार्यसुधीप्रणीतया प्राकृतमणिदीपदीधित्याख्यया टिप्पण्या समलङ्कृतः. प्रथमसंपुटम् . | ... | 6 | 4 |
| 93 आपस्तम्बश्रौतसूत्रम्. श्रीरामाग्निचिद्वृत्तिसहित-धूर्तस्वामिभाष्यभूषितम् II सं (६-८ प्रश्नाः). | .... | 8 | 8 |
| 94 तत्त्वमुक्ताकलापः, श्रीवेदान्ताचार्यकृतसर्वार्थसिद्धि-तद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः III सं | .... | 6 | 12 |

## Miscellaneous Publications.

| | | | |
|---|---|---|---|
| 1 योगरत्नाकरः कर्णाटान्ध्रभाषाटीकायुतः | ... | 2 | 12 |
| 2 मैसूरुप्राच्यकोशागारस्थलिखितसंस्कृतग्रन्थसूचनी सविवरणा, I सं. वेदाः (संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषत्, मन्त्रसंग्रहश्च). | .... | 3 | 12 |
| 3 ,, द्वितीयं संपुटम्-धर्मशास्त्रम् (स्मृतिः) | ... | 1 | 4 |
| 4 मैसूरु—प्राच्यकोशागारस्थमुद्रितसंस्कृतपुस्तकानां प्रदर्शिनी. | .... | 2 | 12 |

# ಮೈಸೂರು ಪ್ರಾಚ್ಯವಿದ್ಯಾಸಂಶೋಧನಸಂಸ್ಥೆಯಿಂದ ಪ್ರಕಟಿಸಲ್ಪಟ್ಟ

# ಕನ್ನಡ ಗ್ರಂಥಗಳು

---

| | | | ಬೆಲೆ | |
|---|---|---|---|---|
| | | | ರೂ. | ಆ. |
| *1 | ಪಂಪಮಹಾಕವಿಯ ಆದಿಪುರಾಣ | ... ... | 2 | 8 |
| *2 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ | ... | 2 | 12 |
| 3 | ಸದಾನಂದಯೋಗಿಯ ಮಹಾಭಾರತ (ಪೌಲೋಮಾಸ್ತಿಕಪರ್ವಗಳು). | ... | 1 | 8 |
| *4 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಸಂಭವಪರ್ವ | ... | 2 | 0 |
| *5 | ,, ಜತುಗೃಹಾದಿಪರ್ವ | ... | 1 | 12 |
| *6 | ,, ಸಭಾಪರ್ವ | ... ... | 1 | 12 |
| *7 | ,, ಅರಣ್ಯಪರ್ವ | ... ... | 2 | 0 |
| *8 | ,, ವಿರಾಟಪರ್ವ | ... ... | 1 | 8 |
| 9 | ಲಿಂಗಣ್ಣನ ಕೆಳದಿನೃಪವಿಜಯ | ... ... | 1 | 8 |
| 10 | ಸೋಮರಾಜನ ಉದ್ಭಟಕಾವ್ಯ | ... ... | 2 | 0 |
| *11 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಎರಡನೆಯ ಮುದ್ರಣ) | ... | 2 | 12 |
| *12 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಉದ್ಯೋಗಪರ್ವ | ... | 1 | 2 |
| 13 | ಸೋಮನಾಥನ ಅಕ್ರೂರಚರಿತ್ರೆ | ... ... | 1 | 0 |
| 14 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. I | ... ... | 2 | 4 |
| 15 | ಗೋವಿಂದವೈದ್ಯನ ಕಂಠೀರವನರಸರಾಜವಿಜಯ | ... | 2 | 8 |
| 16 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. II | ... ... | 1 | 4 |
| 17 | ವೀರಭದ್ರನೃಪಾಲನ ವೀರಭದ್ರವಿಜಯ | ... ... | 1 | 4 |
| *18 | ಜನ್ನನ ಅನಂತನಾಥಪುರಾಣ ... | ... ... | 2 | 0 |
| *19 | ಸಕಲವೈದ್ಯಸಂಹಿತಾಸಾರಾರ್ಣವ ಸಂ. I | ... ... | 1 | 14 |
| *20 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಭೀಷ್ಮಪರ್ವ ... | ... | 1 | 0 |
| *21 | ,, ದ್ರೋಣಪರ್ವ | ... ... | 1 | 12 |
| 22 | ನಾಗವರ್ಮನ ಕಾವ್ಯಾವಲೋಕನ (ದ್ವಿತೀಯ ಮುದ್ರಣ) | ... | 1 | 8 |
| *23 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಕರ್ಣಪರ್ವ ... | ... | 2 | 4 |
| 24 | ,, ಶಲ್ಯಗದಾಪರ್ವಗಳು | ... | 1 | 0 |
| 25 | ಮಲ್ಲಿಕಾರ್ಜುನನ ಸೂಕ್ತಿಸುಧಾರ್ಣವ | .... .... | 2 | 8 |
| 26 | ಕುಮಾರವ್ಯಾಸನ ಭೀಷ್ಮಪರ್ವ (ದ್ವಿತೀಯ ಮುದ್ರಣ) | .... | 1 | 4 |
| 27 | ಶಿಂಗಿರಾಜನ ಶಿಂಗಿರಾಜಪುರಾಣ | .... ... | 6 | 0 |
| 28 | ಕುಮಾರವ್ಯಾಸನ ದ್ರೋಣಪರ್ವ (ದ್ವಿತೀಯ ಮುದ್ರಣ) | .... | 2 | 12 |
| 29 | ಕುಮಾರವ್ಯಾಸನ ಕರ್ಣಪರ್ವ (ದ್ವಿತೀಯ ಮುದ್ರಣ) | .... | 3 | 0 |
| 30 | ಚೌಂಡರಾಜನ ನಳಚಂಪು .... | .... .... | 2 | 4 |

* ಈ ಗುರ್ತಿರುವ ಗ್ರಂಥಗಳು ಈಗ ಬೆಲೆಗೆ ದೊರೆಯುವುದಿಲ್ಲ.

## LIST OF WORKS PUBLISHED BY THE ORIENTAL RESEARCH INSTITUTE, MYSORE·

---

### A.—Sanskrit Publications

| | | Price Rs. | a. |
|---|---|---|---|
| *1. | Apastamba Grihya Sutra with the commentary of Sudarsanacarya ... ... ... | 1 | 12 |
| *2. | Apastamba Paribhasha Sutra with the commentaries of Haradatta and Kapardi Swami | 1 | 0 |
| *3. | Madhaviya Dhatuvritti, Vol. II, Part I (Adādi-Divādi-Juhotyādi) ... .. | 2 | 0 |
| *4. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol I | 2 | 8 |
| *5. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. II ... ... ... | 2 | 8 |
| *6. | Dakshinamurtistotra with the commentary of Suresvaracharya | 1 | 4 |
| *7. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. III ... ... ... | 3 | 0 |
| *8. | Bhagavadgita with the commentary of Sankaracarya ... ... ... | 2 | 12 |
| *9. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IV ... ... | 3 | 0 |
| *10. | Mandala Brahmanopanishad with a commentary | 0 | 6 |
| *11. | Saundaryalahari with the commentary of Lakshmidhara, Bhavanopanishad with a commentary, and Devīpancastavī ... ... ... | 1 | 0 |
| *12. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. V ... ... ... | 3 | 0 |
| *13 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. X ... ... ... | 3 | 0 |

---

*N.B.*—Numbers marked thus * are out of stock.

| No. | Title | PRICE Rs. | a. |
|---|---|---|---|
| *14. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XI ... ... ... | 3 | 0 |
| *15. | Apastamba Dharma Sutra with the commentary called Ujjvala ... ... ... | 1 | 12 |
| *16. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. VIII ... ... ... | 3 | 0 |
| *17. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IX ... ... ... | 2 | 4 |
| *18. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol XII ... ... ... | 1 | 12 |
| *19. | Sankaracarya's Miscellaneous Works, Vol. I, commentaries on Vishnusahasranama and Sanatsujātīya ... ... ... | | |
| *20. | Sankaracarya's Miscellaneous Works, Vol. II, Aparokshānubhūti, Satasloki, Haristuti and Dasasloki with a commentary . . . | 1 | 4 |
| *21. | Sankaracarya's Miscellaneous Works, Vol III, Upadesasāhasri with a commentary ... | 2 | 0 |
| *22. | Sankaracarya's Miscellaneous Works, Vol. IV, Atmabodha, Vivekacūḍāmani, Vākyavritti, Svātmanirūpana, Yogatārāvali, Sarva-vedanta-siddhanta sārasangraha ... ... | 1 | 0 |
| *23. | Madhaviya Dhatuvritti, Vol I, Part I (Bhvādi)... | 2 | 0 |
| *24. | Madhaviya Dhatuvritti, Vol. I, Part II (Bhvādi)... | 2 | 0 |
| *25. | Gotra-pravara-nibandha-kadambakam ... | 2 | 0 |
| *26. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. I ... | 1 | 12 |
| *27. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. II ... | 1 | 0 |
| *28. | Ekāgnikānda with the commentary of Haradatta with Svarapatha ... ... ... | 1 | 4 |
| *29. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. III ... | 1 | 0 |
| *30. | Brahmamimamsa with the commentary of Srikantha | 2 | 0 |
| *31. | Madhaviya Dhatuvritti, Vol. II, Part II (Svadi and Curadi) ... ... ... | 2 | 0 |
| *32. | Bodhayana Grihya Sutra with Parisishta ... | 2 | 4 |
| *33. | Taittiriya Pratisakhya with Vaidikābharana and Tribhāshyaratna ... ... ... | 4 | 0 |

*N.B.*—Number marked thus * are out of stock.

